हिन्दी :- प्राचीन ऋषिओं द्वारा कथित और पुण्य से मनुष्यों को अत्यन्त प्रिय ऐसा यह श्री नाभाक राजा का पवित्र चरित्र किसके चित्त को आश्चर्यचकित नहीं करता ? ॥५॥

मराठी :- प्राचीन ऋषिंनी सांगितलेले आणि पुण्यवान असे, प्राण्यांना अतिशय प्रिय वाटणारे हे श्री नाभाक राजाचे पवित्र चरित्र कोणाच्या मनात आश्चर्य निर्माण करीत नाही ? ॥५॥

English :- It has been said through the ancient monks that the people who understand the language of meritable deeds are bound to experience an inner bliss when they hear or read the sacred biography of king Nabhak.

जम्बूद्वीपाभिधे द्वीपे क्षेत्रे भरतनामके ॥
श्रीपार्श्वनाथश्रीनेमिनाथयोरन्तरेऽभवत् ॥६॥
अनेकश्रीपतिब्रह्मजिष्णुश्रीदविभूषितम् ॥
क्षितिप्रतिष्ठितं नाम पुरं स्वर्पुरजित्वरम् ॥७॥

अन्वय:- जम्बूद्वीपाभिधे द्वीपे भरतनामके क्षेत्रे श्रीपार्श्वनाथश्रीनेमिनाथयो: अन्तरे क्षितिप्रतिष्ठितं नाम पुरम् अभवत् ॥६॥

अनेकश्रीपतिब्रह्मजिष्णुश्रीदविभूषितं स्वर्पुरजित्वरं क्षितिप्रतिष्ठितं नाम पुरम् अभवत् ॥७॥

*विवरणम्:- जम्बूद्वीप: अभिधा नाम यस्य स: जम्बूद्वीपाभिध: तस्मिन् जम्बूद्वीपाभिधे जम्बूद्वीपनाम्नि द्वीपे, भरतं नाम यस्य तद् भरतनामकं तस्मिन् भरतनामके क्षेत्रे श्रिया युत: पार्श्वनाथ: श्रीपार्श्वनाथ: श्रिया युत: नेमिनाथ: श्रीनेमिनाथ: । श्रीपार्श्वनाथश्च श्रीनेमिनाथश्च श्रीपार्श्वनाथश्रीनेमिनाथौ, तयो: श्रीपार्श्वनाथ श्रीनेमिनाथयो: अन्तरे मध्ये क्षितिप्रतिष्ठितं नाम पुरम् अभवत् ॥६॥*

*तत् क्षितिप्रतिष्ठितं नाम पुरं कीदृशमभवत्? तद् वर्णयति-श्रिया: पतय: श्रीपतय: धनिका:। अनेके च ते श्रीपतयश्च:*

*धनिका: च अनेकश्रीपतय:, ब्रह्माण: ब्राह्मणा: च जिष्णव: जयनशीला: सामन्ता: योद्धार: च श्रियं ददति इति श्रीदा: लक्ष्मीदानकरा: च अनेकश्रीपतिब्रह्मविष्णुश्रीदा:, तै: विभूषितम् अनेकश्रीपतिब्रह्माजिष्णु श्रीदविभूषितम्, अत एव स्वर्पुरस्य जित्वरं जयनशीलं क्षितिप्रतिष्ठितं नाम पुरं अभवत्। स्वपुरि एक: एव श्रिया: पति: श्रीपतिर्विष्णु: अस्ति। परमत्र क्षितिप्रतिष्ठिते अनेके श्रीपतय:, सन्ति। ब्रह्माण:, जिष्णव:, श्रीदाश्चअभवन् अत: एतद् क्षितिप्रतिष्ठितं नगरं स्वर्पुरमतिशेते इत्यर्थ: ॥७॥*

सरलार्थः- जम्बूद्वीपे भरतक्षेत्रे श्रीपार्श्वनाथश्रीनेमिनाथयो: अन्तरे क्षितिप्रतिष्ठितं नाम नगरमभवत् ॥६॥

तस्मिन् क्षितिप्रतिष्ठिते नाम नगरे अनेके श्रीपतय: धनिका: ब्रह्माण: ब्राह्मणा:, जिष्णव: जयनशीला:, सामन्ता: योद्धा:, श्रीदा: धनदान-कारिण:च आसन्। स्वर्गे च एक एव श्रीपति: विष्णु:, ब्रह्मा, जिष्णु: इन्द्र:, श्रीद: कुबेर:चासीत्। अत: एतत् क्षितिप्रतिष्ठितं नगरं स्वर्पुरजित्वरमभवत् ॥७॥

**ગુજરાતી :-** **જંબૂદ્વીપ નામના દ્વીપના ભરતક્ષેત્રમાં શ્રી પાર્શ્વનાથ ભગવાનથી પહેલા અને શ્રી નેમિનાથ જિનેશ્વરના પછીના સમયગાળામાં "ક્ષિતિપ્રતિષ્ઠિત" નામનું નગર હતું. ॥૬॥**

**જે નગર અનેક બ્રાહ્મણ (બ્રહ્મા), અનેક વિનયશીલ યોદ્ધા (જિષ્ણુ), અને અનેક શ્રીમંતોથી શોભાયમાન હોવાથી તેણે સ્વર્ગપુરને પણ હરાવી દીધું હતું. કારણ સ્વર્ગમાં તો એક જ શ્રીપતી (વિષ્ણુ), બ્રહ્મા, ઈન્દ્ર અને શ્રીદ (કૂબેર) હતા !॥૭॥**

हिन्दी :- जम्बुद्वीप नाम के द्वीप में भरतक्षेत्रमें श्री पार्श्वनाथ जिनेश्वर के पहले और श्रीनेमिनाथ जिनेश्वर के बाद के समय में "क्षितिप्रतिष्ठित" नाम का नगर था, जो नगर अनेक श्रीपति (धनिक) अनेक ब्रह्मा (ब्राह्मण), अनेक जिष्णु (विनयशील योद्धा), और अनेक श्रीद (धनदाताओं)से शोभायमान था। इसीलिये उस नगर ने स्वर्गपुर को भी हरा दिया था। कारण स्वर्ग में एकही श्रीपति (विष्णु), ब्रह्मा, इन्द्र और श्रीद (कुबेर) थे। ॥६॥ ॥७॥

मराठी :- पूर्वी जम्बुद्वीप नावाच्या द्वीपांत भरतक्षेत्रामध्ये श्री पार्श्वनाथ जिनेश्वर यांच्या आधी आणि श्री नेमिनाथ जिनेश्वर यांच्या

नंतरच्या काळात ''क्षितिप्रतिष्ठित'' नावाचे नगर होते. त्या नगरात अनेक श्रीपति (धनिक), अनेक ब्रह्मा (ब्राह्मण), अनेक जिष्णु (विनयशील योद्धे)आणि अनेक श्रीद (धनदाते) वास्तव्य करीत होते, त्यामुळे शोभायमान झालेल्या त्या नगराने स्वर्गपुराला जिंकले होते. कारण स्वर्गात फक्त एकच श्रीपति (लक्ष्मीपती विष्णु), ब्रह्मा, जिष्णु (इंद्र) आणि श्रीद (कुबेर) होते.॥६॥ ॥७॥

English :- In a *duveep* called Jumbu Duveep there was a *schetra* named Bharat, where in between the Lords Parashvanath and Neminath, there was a city named Kshitaprathishithit. This city had blossomed many a *Shripatis, Brahmans, Jishnus and Kubers.* This city had even overprowered heaven, with its granduer and its magestic splendour.

Note :- There is only one Shripati- i.e. Lord Vishnu, but here Shripatis means Landlords.
There is only one Brahma -i.e. Lord Brahma, but here Brahmas means Brahmins.
There is only one Jishnu- God Indra, but here Jishnus means victorious persons; fuedatory kings, commanders soldiers etc.
There is only one Sride - i.e. A Kuber, but here Sride means charitable persons.

सर्वाङ्गरत्नाभरणाभिभूषितैर्यदीयभोगीशशतैस्तिरस्कृता ।
शीर्षस्फुरद्रत्नवरैकमण्डिता भोगावती युक्तमगाद्रसातलम् ॥८॥

अन्वयः- सर्वाङ्गरत्नाभरणाभिभूषितैः यदीयभोगीशशतैः तिरस्कृता शीर्षस्फुरद्रत्नवरैकमण्डिता भोगावती रसातलमगात् युक्तम् ।

विवरणम्:- *सर्वाणि च तानि अङ्गानि अवयवाश्च सर्वाङ्गानि सर्वावयवाः। सर्वाङ्गेषु सर्वावयवेषु रत्नानामाभरणैरलङ्कारैः अभिभूषितैः सुशोभितैः सर्वाङ्गरत्नाभरणाभिभूषितैः सर्वावयवरत्नालङ्कारभूषितैः, यस्याः इमे यदीयाः।भोगाः एषां सन्तीति भोगिनः । भोगिनामीशाः भोगीशाः, यदीयाश्च ते भोगीशाश्च यदीयभोगीशाः । यदीयभोगीशानां शतानि यदीयभोगीशशतानि, तैः यदीयभोगीशतैः, यस्मिन् क्षितिप्रतिष्ठिते नगरे वर्तमानाः शतशः भोगीशाः समर्थभोगशालिनः*

*जनाः तैः, तिरस्कृता न्यक्कृता, शीर्षे मस्तके स्फुरत् रत्नवरं यस्य सः शीर्षस्फुरद्रत्नवरः । शीर्षस्फुरद्रत्नवरश्चासौ एकश्च (भोगी - सर्पः शेषः) स्फुरद्रत्नवरैकः। शीर्षस्फुरद्रत्नवरैकभोगिना मण्डिता विभूषिता भोगावती नगरी रसातलं पातालमगात् अगमत् इत्येतद् युक्तम् ॥ भोगावती भोगिनां सर्पाणां नगरी पाताले वर्तते । तस्यां शेषनागः एकः एव एक रत्नशाली भोगीशः वसति इति कविसमयः । अस्यां नगर्यां तु सर्वाङ्ग रत्नाभरणभूषिताः अनेके भोगिनो वसन्ति ।*

अर्थात्:- यस्य शिरसि एकमेव रत्नं स्फुरतिं तादृशेन एकेनैव भोगीशेन (शेषेण) भोगावती मण्डिता वर्तते। परं क्षितिप्रतिष्ठितनगरे तु प्रत्यङ्गं रत्नाभरणानि धारयन्तः शतशः भोगीशाः निवसन्ति, एतदवलोक्य भोगावती पातालमगच्छत् इति युक्तम् एव, इति कल्प्यते ॥८॥

ગુજરાતી :- ક્ષિતિપ્રતિષ્ઠિત નગરીમાં વસતા સર્વાંગે રત્નોના આભૂષણોથી શોભાયમાન સેંકડો ભોગીઓ વડે તિરસ્કાર પામેલી ભોગાવતી નગરી રસાતલમાં ચાલી ગઈ તે યુક્ત જ થયું છે. ॥૮॥

સ્પષ્ટીકરણ:- કારણ કે તે ભોગાવતી નગરી મસ્તકને વિષે સ્ફુરાયમાન ઉત્તમ મણિવાળા એક જ શેષ ભોગીશ (નાગ) વડે શોભે છે જ્યારે ક્ષિતિપ્રતિષ્ઠિત નગરીમાં અનેક ભોગીઓ એટલે સમર્થ ભોગીઓ રહે છે વળી ભોગાવતી નગરીમાં રહેતા ભોગી એટલે શેષનાગના મસ્તક પર એક જ રત્ન (મણિ) છે, જ્યારે આ નગરીમાં વસતા સેંકડો ભોગીઓના સર્વાંગે રત્નો-આભૂષણો છે. આ પ્રમાણે ક્ષિતિપ્રતિષ્ઠિત નગરીથી દરેક રીતે ઉતરતી ભોગાવતી નગરી લજ્જા પામીને રસાતલમાં ચાલી ગઈ. તે યોગ્ય જ થયું. ॥૮॥

हिन्दी :- "क्षितिप्रतिष्ठित" नगरी में सभी अंग-उपांगो पर पहने रत्नों के आभूषणों से शोभायमान सेंकडो भोगी लोग रहते थे। और भोगावती नगरी में केवल मस्तक पर रत्न धारण करनेवाला एक ही भोगी (शेषनाग) रहता है। इसलिये उसके द्वारा तिरस्कार पाई गई भोगावती नगरी रसातल में चली गई, यह योग्य ही हुआ ॥८॥

मराठी :- "क्षितिप्रतिष्ठित" नगरीमध्ये सगळ्या अंगोपांगावर रत्नांचे अलंकार घालून शोभणारे शेकडो भोगी लोग राहात होते तर भोगावती नगरीत डोक्यावर एक रत्न धारण करणारा एकच भोगी (शेषनाग) राहात होता. म्हणून क्षितिप्रतिष्ठित

नगरीकडून तिरस्कृत झालेली भोगावती नगरी रसातळाला निघून गेली ते योग्य झाले. ॥८॥

English :- The residentials of this city Kshethiprathishithitit had this empowering Love for gold, so they were always found drowned in gold ornaments. In dus course this city attained such fame and royality, that even the city of Bohgawati which had only one residential, i.e. the *Shesha* serpant who had the sapphive on his head who is called a *Bhogheshe* but this city had many amorous men *(Bhoghesho)* who had gathered mony saphirses found itself classifying itself in the category of lowcastes in front of the famed city and so in order to hide its shameful self, it went down in the fifth division of the underground region and this was appreciated by all beings.

**तत्र श्रीमान् महारूपनिरूपितपुरन्दरः ॥**
**राजा नाभाकनामाऽभूद्, अभूमिः पापतापयोः ॥९॥**

अन्वयः:- तत्र श्रीमान् महारूपनिरूपितपुरन्दरः पापतापयोः अभूमिः नाभकनामा राजा अभूत् ॥९॥

विवरणम्:- *तत्र क्षितिप्रतिष्ठितनगरे श्रीरस्यास्तीति श्रीमान् समृद्धिमान् महत् च रूपं च महारूपमलौकिकंसौन्दर्यम्। महारूपेण निरूपितः दृष्टान्तीकृतः पुराणि दारयतीति पुरन्दरः इन्द्रः येन सः महारूपनिरूपितपुरन्दरः । इन्द्रवत् अलौकिक सौन्दर्यशाली । पापं च तापश्च पापतापौ, तयोः पापतापयोः । पापस्य दुःखस्य च न भूमिः अभूमिः अस्थानं, नाभाकः नाम यस्य सः नाभाकनामा राजा नृपः अभूत् ॥९॥*

सरलार्थः:- तस्मिन् क्षितिप्रतिष्ठिते नगरे समृद्धिमान्, इन्द्रः इवालौकिकसौन्दर्यशाली पापतापयोः अभूमिः नाभाकनामा राजा अभूत् ॥९॥

ગુજરાતી :-તે નગરમાં સમૃદ્ધ અને પોતાના અલૌકિક સૌંદર્ય વડે ઈન્દ્ર માટે પણ દૃષ્ટાંતરૂપ એવો, તથા પાપ અને સંતાપને ક્યારેય પણ સ્થાન નહીં આપનારો નાભાક નામનો રાજા હતો. ॥૯॥

हिन्दी :- उस नगर में समृद्धिसंपन्न, अपनी अलौकिक सुंदरता द्वारा इन्द्र को दृष्टान्त देनेवाला, और पाप एवं संताप को कभी भी स्थान नही देनेवाला नाभाक नाम का राजा था॥९॥

मराठी :- त्या शहरामध्ये समृद्धिमान व आपल्या अलौकिक सौन्दर्याने इन्द्राला दृष्टान्त देणारा, आणि पाप व संतापाला कधीच स्थान न देणारा असा नाभाक नावाचा राजा होता.॥९॥

English :- The king of the city Nabhak, who had overflowing wealth, and who had a superhuman eternal beauty to which even God Indra would be compared to and who had not cherished a place in his heart for a sin nor woe.

पुरा कलाकेलिरनङ्गभावं वधूद्वयेनापि जगाम दीव्यन् ॥
वधूसहस्रैरपि सैष खेलन् अवाप सर्वाङ्गमनोहरत्वम् ॥१०॥

अन्वयः- पुरा कलाकेलिः वधूद्वयेन दीव्यन् अपि अनङ्गभावं जगाम। स एषः वधूसहस्रैः खेलन् अपि सर्वाङ्गमनोहरत्वमवाप ॥१०॥

विवरणम्:- *पुरा पुरातनकाले कलया केलिः यस्य सः कलाकेलिः कामदेवः वध्वोः रतिप्रीत्योः द्वयं वधूद्वयं तेन वधूद्वयेन, रत्या प्रीत्या च द्वाभ्यां भार्याभ्यां समं दीव्यन् क्रीडन् विलसन्, न विद्यते अङ्गमंशरीरं यस्य सः अनङ्गः। अनङ्गस्य भावः अनङ्गभावः तं अनङ्गभावमशरीरभां जगाम अगमत्। (विनाशम् प्रापत् इत्यर्थः) परं स एषः समृद्धिमान अतीव सुन्दरः नाभाकनृपः वधूनां पत्नीनां सहस्राणि वधूसहस्राणि तैः वधूसहस्रैः सहस्रशो भार्याभिः खेलन् विलसन्, सर्वाणि च तानि अङ्गानि च सर्वाङ्गानि। मनः हरतीति मनोहरः। मनोहरस्य भावः मनोहरत्वम्। सर्वाङ्गेषु सर्वावयवेषु मनोहरत्वं सुन्दरत्वं सर्वाङ्गमनोहरत्वं सर्वावयवसुन्दरत्वमवाप प्राप। सर्वाङ्गसुन्दरः अभवत्। सौन्दर्येण विलासेन च कामदेवमत्यशेत ॥१०॥*

सरलार्थः- पुरा कामदेवः रतिप्रीतिभ्यां द्वाभ्यां वधूभ्यां रममाणः अनङ्गः अभवत्। एषः नाभाकनृपश्च वधूसहस्रैः रममाणः अपि सर्वाङ्गसुन्दरः अभवत् ॥१०॥

ગુજરાતી :- રતિ અને પ્રીતિ એ બે સ્ત્રીઓ સાથે ક્રીડા કરતા છતાં કામદેવ અનંગપણાને પામ્યો હતો, પરંતુ નાભાકરાજા તો હજારો સ્ત્રીઓ સાથે ક્રીડા કરતો છતાં પણ સર્વાંગે મનોહરપણાને પામ્યો હતો.॥૧૦॥

हिन्दी :- रति एवं प्रीति नामक दो स्त्रियों के साथ क्रीडा करते हुए कामदेव अनंगता को प्राप्त हुआ, किन्तु नाभाक राजा तो हजारो स्त्रियों के साथ क्रीडा करता हुआ सर्वांग सुंदरता को प्राप्त हुआ था॥१०॥

मराठी :- रति आणि प्रीति दोन स्त्रियांशी क्रीडा करतांना कामदेव अनंगपणाला प्राप्त झाला, परंतु नाभाक राजा तर सहस्त्रावधी स्त्रियांच्यासोबत क्रीडा करूनसुद्धा सर्वांगीण सौन्दर्याला प्राप्त झाला.॥१०॥

English :- Long before, when Cupid used to be drowned in sexual passions with two women, he would loose control and thus become bodiness in the process , but king Nabhak would utilize his passions over thousands of women but still did not loose his sexual vigour nor his beauty.

तमन्यदा मुदासीनं सभायामेत्य भूपतिम् ॥
सत्प्राभृतं पुरस्कृत्य श्रेष्ठी कश्चिन्नमोऽकरोत् ॥११॥

अन्वयः- अन्यदा सभायां मुदा आसीनं तं भूपतिम् एत्य कश्चित् श्रेष्ठी सत्प्राभृतं पुरस्कृत्य नमः अकरोत्॥११॥

*विवरणम्:- अन्यदा एकस्मिन् दिने सभायां परिषदि मुदा हर्षेण आसीनमुपविष्टं तं भुवः पृथ्व्याः पतिः भूपतिः तं भूपतिमं पृथ्वीपतिं नाभाकराजम् एत्य आगत्य कश्चित् श्रेष्ठी सत्च तत् प्राभृतं च सत्प्राभृतं सुन्दरमुपायनं पुरस्कृत्य पुरःस्थापयित्वा नमः प्रणामम् अकरोत् - प्राणमत् ॥११॥*

सरलार्थः- एकदा स नाभाकराजः महता हर्षेण सभायामुपविष्टः आसीत् तदा कश्चित् श्रेष्ठी तत्समीपमागत्य सुन्दरमुपायनं पुरः संस्थाप्य तं प्राणमत् ॥११॥

ગુજરાતી :- એક દિવસ તે રાજા પોતાની સભામાં હર્ષિત ચિત્તે બેઠો હતો, ત્યારે કોઈક શ્રેષ્ઠીએ આવીને રાજાની સન્મુખ સુંદર ભેટ મૂકી નમસ્કાર કર્યા.॥૧૧॥

हिन्दी :- एक दिन वह राजा अपनी सभा मे हर्षित चित्त से बैठा था, तब किसी एक व्यापारी ने राजा सन्मुख सुंदर उपहार रखकर नमस्कार (प्रणाम) किया ॥११॥

मराठी :- एके दिवशी तो राजा आपल्या सभेत आनंदाने बसला होता, तितक्यात कोणी एका व्यापाऱ्याने येऊन त्यांच्या समोर सुंदर भेट ठेऊन नमस्कार केला.॥११॥

English :- One day when the king was carressing his feelings of bliss, a tradesman entered the court-room and bowed down and presented him with a beautiful gift.

कस्त्वतं कुतः समायातः कुत्र यासीति भूभृता ॥
पृष्टे स्पष्टमाचष्ट श्रेष्ठी राजन् निशम्यताम् ॥१२॥

अन्वयः- त्वं कः असि? कुतः समायातः? कुत्र यासि? इति भूभृता पृष्टे श्रेष्ठी स्पष्टमाचष्ट राजन्! निशम्यताम् ॥१२॥

*विवरणम्:- त्वं कः असि? कुतः कस्मात् स्थानात् समायातः समागतः असि? कुत्र यासि गच्छसि? इति भुवं बिभर्तीति भूभृत् तेन भूभृता नृपेण पृष्टे सति श्रेष्ठी स्पष्टं आचष्ट अकथयत् - हे राजन्! निशम्यतां - श्रूयतां - इति ॥१२॥*

सरलार्थः- ततः त्वम् कः असि? कस्मात् स्थानात् आगतः असि? क्व गच्छसि? इति नाभाकराजः तमपृच्छत्। तदा स श्रेष्ठी स्पष्टमुवाच - हे राजन्! शृणु, इति ॥१२॥

ગુજરાતી :- ત્યારે રાજાએ તે શેઠને પૂછ્યું, 'તમે કોણ છો? ક્યાંથી આવ્યા છો? અને ક્યાં જાઓ છો?' તેના પ્રત્યુત્તરમાં શ્રેષ્ઠીએ સ્પષ્ટ રીતે કહ્યું કે, "હે રાજન્! મારું સમસ્ત વૃત્તાન્ત સાંભળો.'॥૧૨॥

हिन्दी :- तब राजाने उस शेठ से पूछा, "अरे भाई! तुम कौन हो? कहाँ से आये हो? और कहाँ जानेवाले हो?" उसके उत्तर में शेठ ने स्पष्ट रूपसे कहा, "हे राजन्! मेरा सम्पूर्ण वृत्तांत सुनिये!"॥१२॥

मराठी :- तेव्हा राजाने विचारले, ''तुम्ही कोण आहात? कोठून आला आहात? आणि आतां कुठे जाणार आहात?'' ह्याचे उत्तर देतांना श्रेष्ठी म्हणाला, ''हे महाराज! माझा वृत्तांत पूर्णपणे ऐका.''॥१२॥

English :- At this the king asked the tradesman, "Who are you? From where do you come? and where are you going now?". At this the tradesman replied the king, "O, Dear King ! listen my bolgraphy fully."

श्रेष्ठी धनाढ्यनामाऽहं श्रीवसन्तपुरे वसन् ॥
श्री शत्रुञ्जययात्रार्थं चलितोऽत्र समागमम् ॥१३॥

अन्वयः- आहं श्रीवसन्तपुरे वसन् धनाढ्यनामा श्रेष्ठी अस्मि। श्रीशत्रुञ्जययात्रार्थं चलितः अत्र समागमम् ॥१३॥

विवरणम्:- अहं श्रीवसन्तनाम्नि पुरे नगरे वसन् धनाढ्यः नाम यस्य सः धनाढ्यनामा श्रेष्ठी अस्मि। अहं श्रीशत्रुञ्जयस्य यात्रार्थं चलितः अस्मि। मार्गेऽत्र समागमं समागच्छम् ॥१३॥

सरलार्थः- अहं श्रीवसन्तपुरे निवसामि। धनाढ्यः मम नाम अस्ति। श्री शत्रुञ्जययात्रार्थं निर्गतः अहं अत्र आगच्छम् ॥१३॥

ગુજરાતી :- 'હું વસંતપુર નગરમાં નિવાસ કરું છું. મારું નામ ધનાઢ્ય છે, અને શ્રી શત્રુંજય તીર્થની યાત્રાર્થે જતાં અહીં મારું આવવું થયું છે.' ॥૧૩॥

हिन्दी :- "मैं वसन्तपुर नगर का निवासी हूँ, मेरा नाम धनाढ्य है और श्री शत्रुंजय तीर्थ की यात्रा के लिये निकला हूँ, बीच में मेरा यहाँ आना हुआ है।" ॥१३॥

मराठी :- "मी वसन्तपुर नगरीत रहात असून माझे नाव धनाढ्य असे आहे. श्रीशत्रुंजय तीर्थाच्या यात्रेसाठी निघालो, मध्येच येथे माझे येणें झाले." ॥१३॥

English :- He said that he is a citizen of Vasantpur and his name is Dhanadhya. He was out on a pilgrimage to Shree Satrunjay and he had happened to stop here."

श्रीशत्रुञ्जयस्तत्र यात्रया किंफलं नृपे ॥
पृच्छतीति भाग्यलभ्याः सभ्याः पौराणिका जगुः ॥१४॥

अन्वयः-- कः श्रीशत्रुञ्जयः? तत्र यात्रया किं फलं लभ्यते? इति नृपे पृच्छति सति भाग्यलभ्याः सभ्याः पौराणिकाः जगुः ॥१४॥

विवरणम्:- *श्रीशत्रुञ्जयः कः अस्ति? तत्र तस्मिन् शत्रुञ्जये यात्रया यात्राकरणेन किं फलं लभ्यते? इति नॄन् पातीति नृपः तस्मिन् नृपे राजनि नाभाके पृच्छति सति (यावत् नाभाकः इति पृच्छति तावदेव) भाग्येन लब्धुं योग्याः लभ्याः भाग्यलभ्याः सभायां साधवः सभ्याः । पुराणं विदन्तीति पौराणिकाः पुरुषा जगुः जगदुः ॥१४॥*

सरलार्थः- श्रीशत्रुञ्जयः कः अस्ति? तत्र यात्राकरणेन किं फलं लभ्यते? इति नृपः यावत् पृच्छति तावत् भाग्यलभ्याः सभायामुपविष्टाः पौराणिकाः जगुः ऊचुः ॥१४॥

ગુજરાતી :- ત્યારે, ભાગ્યથી જેમની પ્રાપ્તિ થઈ શકે એવા મહાધુરંધરોની સભામાં બેઠેલા પૌરાણિક પુરુષોને રાજાએ પૂછ્યું, 'શ્રીશત્રુંજય તીર્થ શું છે? તથા તેની યાત્રાથી શું લાભ થાય ?' એ પ્રશ્નનો ઉત્તર પૌરાણિક પુરુષોએ રાજાને સ્પષ્ટતાપૂર્વક સમજાવતાં કહ્યું કે - ॥૧૪॥

हिन्दी :- तब, सभा में बैठे हुए सद्भाग्य से प्राप्त ऐसे महाधुरंधर पौराणिकों को राजाने पूछा कि, "यह श्रीशत्रुंजयतीर्थ की महत्ता क्या है? और उसकी यात्रा से क्या फल मिलता है?" इस प्रश्न का उत्तर देते हुए उन पौराणिक पुरुषों ने राजा को स्पष्ट रूप से समझाया कि,

मराठी :- तेव्हा, त्या सभेत बसलेल्या, मोठ्या भाग्यानेच प्राप्त होऊ शकलेल्या त्या धुरंधर पौराणिकांना राजाने विचारले की, "हे श्रीशत्रुंजयतीर्थाची महत्ता काय आहे? आणि त्याची यात्रा केल्यानें काय फळ मिळते ?" तेव्हा त्या पुराणिक पुरुष स्पष्टपणे म्हणाले.

English :- The king then asked his prominent ministers who were conversant with the puranas this so called pilgrim spot, Shatrunjay and what fruit can one expect from this pilgrimage. At this query the prominent ministers answered the king in clear and understandable words.

इक्ष्वाकुभूमौ भरतेऽत्र पूर्व श्रीनाभिनामा कुलकृद् बभूव ।
सद्वल्लभाऽभून्मरुदेवी तस्याः कुक्षौ जिनः श्री वृषभोऽवतीर्णः ॥१५॥

अन्वयः:- पूर्वमत्र भरते इक्ष्वाकुभूमौ श्रीनाभिनामा कुलकृद् बभूव। तस्य मरुदेवी सद्वल्लभा आसीत्। तस्याः कुक्षौ श्रीवृषभः जिनः अवतीर्णः ॥१५॥

विवरणम्:- *पूर्वं पुरातनकाले अत्र अस्मिन् भरते भरतक्षेत्रे इक्ष्वाकोः भूमिः इक्ष्वाकुभूमिः तस्यामिक्ष्वाकुभूमौ श्रिया युतः नाभिः श्रीनाभिः। श्रीनाभिः नाम यस्य सः श्रीनाभिनामा। कुलं करोतीति कुलकृत् कुलकरः बभूव। तस्य श्रीनाभेः कुलकरस्य मरुदेवी नाम सती चासौ वल्लभा च सद्वल्लभा सत्पत्नी अभूत्। तस्याः मरुदेव्याः कुक्षौ उदरे श्रिया युतः वृषभः श्रीवृषभः जिनः अवतीर्णः अवातरत् ॥*

सरलार्थः:- पुरा अस्मिन् भरतक्षेत्रे इक्ष्वाकुभूमौ श्रीनाभिनामा कुलकरः बभूव। तस्य मरुदेवी नाम प्रिया पत्नी आसीत्। तस्याः उदरे श्रीवृषभः जिनः अवातरत् ॥१५॥

ગુજરાતી :- **'પહેલાં આ ભરતક્ષેત્રમાં ઇક્ષ્વાકુભૂમિને વિષે શ્રીનાભિ નામના કુલકર થયા, તેમને મરુદેવી નામની શ્રેષ્ઠ પત્ની હતી. તેમની કુક્ષિએ શ્રી ઋષભદેવ જિનેન્દ્રનો જન્મ થયો.' ॥૧૫॥**

हिन्दी :- "पहले इस भरतक्षेत्रमें इक्ष्वाकुभूमि पर श्रीनाभि नामके कुलकर हुए। उनकी मरुदेवी नामकी श्रेष्ठ पत्नी थी। उसकी कुक्षि से श्रीऋषभदेव जिनेन्द्र का जन्म हुआ"॥१५॥

मराठी :- "पूर्वी या भरतक्षेत्रांत इक्ष्वाकुमीवर श्रीनाभि नावाचे कुलकर झाले. त्यांना मरुदेवी नावाची श्रेष्ठ पत्नी होती. तिच्या उदरातून श्री ऋषभदेव जिनेन्द्राचा जन्म झाला."

English :- Once long back, in this *Bharatshetra* and in the kingdom of Ishvaku, there used to be a *Kulkar* (judge) named ShriNabhi. He had an eminent wife named Marudevi. Lord Rishebhdev *Jinendra*, 1st *Tirthankar*- the founder of a new age, was born from her womb."

Note:- There was a time when twins, a boy and a girl were called *yuglic*, who were treated as eminent personalities and would therefore get what they desired. Now there used to be a tree named *Kalpavruksh*, that used to fulfill the uncountable wants of man, at that time. This tree began getting extinct in due-course. This made the people to quarrel among themselves and they started bossing over the remaining trees, thus causing small tiffs among themselves. This situation gave rise to *Kulkars* (judges) who were appointed to solve their petty problems.
There were in all nine *Kulkars*, generation after generation.

असङ्ख्यवर्षाणि न धर्मकर्माऽभिज्ञो जनोऽभूत् समयानुभावात्।
प्रकाश्य तन्मार्गयुगं तदत्राऽवतीर्य सोऽनीतिपथं लुलोप ॥१६॥

अन्वयः- समयानुभावात् जनः असङ्ख्यवर्षाणि धर्मकर्माभिज्ञः नाऽभूत् । तद् सः अत्र अवतीर्य तद् मार्गयुगं प्रकाश्य अनीतिपथं लुलोप ॥१६॥

विवरणम्:- *समयस्य कालस्य अनुभावः प्रभावः समयानुभावः तस्मात् समयानुभावात् कालप्रभावात् जनः न विद्यते सङ्ख्या येषां तानि असङ्ख्यानि। असङ्ख्यानि च तानि वर्षाणि च असङ्ख्यवर्षाणि असङ्ख्यवर्षपर्यन्तं धर्मः च कर्माणि च धर्मकर्माणि। धर्मकर्माणि अभिजानातीति धर्मकर्माभिज्ञः, धर्मस्य कृषिवाणिज्यादिकर्मणां च अभिज्ञः न अभूत् अभवत्। तत् तस्मात् कारणात् सः प्रभुः अत्र अस्मिन् भरतक्षेत्रे अवतीर्य तन्मार्गयुगं मार्गयोः युगं मार्गयुगं धर्ममार्गं कर्ममार्गं च प्रकाश्य प्रकटीकृत्य न नीतिः अनीतिः। अनीतेः पन्थाः अनीतिपथः तमनीतिपथमनीतिमार्गं लुलोप व्यनाशयत् ॥१६॥*

सरलार्थः- कालप्रभावात् जनः असङ्ख्यवर्षाणि धर्मस्य कर्मणाम्। चाऽनभिज्ञः आसीत्। अतः सः प्रभुः भरतक्षेत्रेऽवतीर्य धर्ममार्गं कर्ममार्गं च प्रकाश्य अनीतिमार्गं सर्वथा व्यनाशयत् ॥१६॥

ગુજરાતી :- કાળના પ્રભાવે અસંખ્ય વર્ષોથી જનસમુદાય ધર્મ અને કર્મથી અજાણ હતો. તે સર્વેને પ્રભુએ આ ભરતક્ષેત્રમાં અવતરીને ધાર્મિક અનુષ્ઠાન તથા કૃષિ-વાણિજ્ય વિગેરે વ્યાવહારિક ક્રિયાઓ બતાવી. આ પ્રમાણે ધર્મ અને કર્મ એ

બન્ને પ્રકારના માર્ગ સમજાવી અનીતિ માર્ગનો તદ્દન લોપ કર્યો.॥૧૬॥

हिन्दी :- समय के प्रभाव से असंख्य सालों से जनता धर्म और कर्म से पूरी तरह अज्ञात थी। उन सभी को प्रभुने इस भरतक्षेत्र में अवतार लेकर धर्म और कर्म (कृषि एवं व्यापारादी क्रियाओं का) का मार्ग बताकर अनीति के मार्ग को बिलकुल नामशेष कर दिया॥१६॥

मराठी :- काळाच्या प्रभावाने पुष्कळ वर्षांपासून जनता धर्म आणि कर्मासंबंधी अजाण होती, तेव्हा प्रभूने भरतक्षेत्रांत अवतार घेऊन लोकांना धर्म (धार्मिक अनुष्ठान) आणि कर्म (कृषी, वाणिज्य इत्यादिक व्यावहारिक क्रिया) हे दोन्ही मार्ग दाखवून अनीतीच्या मार्गांचा लोप केला.॥१६॥

English :- Due to the effect and magnanimity of time, countless of years ago, the masses were ignorant regarding religion and working of farming business etc. Therefore the Lord was incarnated in this Bharatschetra and taught them the ways of religion and the acts of life such as agriculture and trade and thus irradicated injust malversation.

आदौ स पाणिग्रहणं विधाय, शतं सुतानां च विभज्य राज्यम् ।
भुक्त्वा सुखं नीतिपथं विधाय तप्त्वा तपो ज्ञानमनन्तमाप ॥१७॥

अन्वयः- आदौ प्रथमं सः श्रीऋषभदेवः पाणेः ग्रहणं पाणिग्रहणं विवाहं विधाय कृत्वा (सुनन्दासुमङ्गलानाम्न्यौ द्वे कन्ये परिणीय) सुखं, सांसारिकं सुखं भुक्त्वा उपभुज्य नीतेः पन्थाः नीतिपथः तं नीतिपथं नीतिमार्गं विधाय प्रकाश्य सुतानां पुत्राणां इति भरतादिशतपुत्रेषु पृथक् पृथक् राज्यं विभज्य दीक्षामग्रहीत् । ततः कठिनतरं तपः तप्त्वा अनन्तं ज्ञानं केवलज्ञानमाप । प्राप्नोत्॥१७॥

सरलार्थः- सः ऋषभदेवः प्रथमं सुनन्दासुमङ्गलाकन्याभ्यां सह विवाहमकरोत् । साम्सारिकसुखमभुङ्क्त। ततः नीतिमार्गं प्रावर्तयत्। स्वं राज्यं भरतादिशतपुत्रेषु पृथक् पृथक् व्यभजत् । ततः दीक्षां गृहीत्वा कठिनतरं तपोऽतपत्। केवलज्ञानं च लेभे ॥१७॥

ગુજરાતી :- પહેલાં તેમણે સુનંદા અને સુમંગલા નામની બે કન્યાઓ સાથે વિવાહ કરી, સાંસારિક સુખ ભોગવી, નીતિમાર્ગ પ્રવર્તાવી, ભરત, બાહુબલિ વિગેરે પોતાના સો પુત્રોને જૂદું રાજ્ય વહેંચી આપી દીક્ષા ગ્રહણ કરી. ત્યાર પછી અનેક પ્રકારના દુસ્સહ તપ તપી કેવલજ્ઞાન પ્રાપ્ત કર્યું. ॥૧૭॥

हिन्दी :- पहले उन्होंने सुनंदा और सुमंगला नाम की दो कन्याओं के साथ विवाह किया। सांसारिक सुख भोगकर, नीतिमार्ग का प्रचार करके, भरत, बाहुबलि आदि अपने सौ पुत्रों के बीच राज्य का बटवारा किया। फिर दीक्षा ग्रहण कर के, विविध प्रकार की कठिन तपश्चर्या करके केवलज्ञानको प्राप्त किया॥१७॥

मराठी :- आधी त्यांनीं सुनंदा आणि सुमंगला नावाच्या दोन कन्यांशी विवाह केला. सांसरिक सुखाचा उपभोग घेऊन, नीतिमार्गाचा प्रचार केला व आपल्या भरत, बाहुबलि इत्यादि शंभर पुत्रांमध्ये राज्याची वाटणी केली. नंतर दीक्षाग्रहण करून नाना तऱ्हेची कठीण तपश्चर्या करून केवलज्ञान प्राप्त केले.॥१७॥

English :- He first married two girls Sunanda and Sumangala, thus attaining worldly pleasures. He then proclaimed the true path of life and in due-course distributed his Kingdom among Bharat, Bahubali and other ninety eight and attained state monastism. Then after many dire penences, he ultimetly attained Supreme knowledge. (Keval gyan)

ततः स धर्मं दशधोपदिश्य प्रबोधयन् भारतभव्यसत्वान्
शैले सुराष्ट्राभरणेऽधिरुह्य क्वचित् प्रियालुद्रुतलम् सिषेवे ॥१८॥

अन्वयः- ततः सः दशधा धर्मम् उपदिश्य भारतभव्यसत्वान् प्रबोधयन् सुराष्ट्राभरणे शैले अधिरुह्य क्वचित् प्रियालुद्रुतलम् सिषेवे ॥१८॥

*विवरणम्:- ततः तदनन्तरं सः श्रीऋषभदेवः दशधा क्षमादिकं दशविधं धर्मम् उपदिश्य भव्याश्च ते सत्वाः प्राणिनश्च भव्यसत्वाः। भारते भव्यसत्त्वाः - भारतभव्यसत्त्वाः तान् भारतभव्यसत्वान् भारतवासिभव्यप्राणिनः प्रबोधयन् प्रबोधं प्रापुवन् सुराष्ट्रस्य आभरणमलङ्कारः सुराष्ट्राभरणं तस्मिन् सुराष्ट्राभरणे सौराष्ट्रदेशालङ्कारभूते शैले अष्टापदपर्वते अधिरुह्य आरुह्य क्वचित्*

*कस्मिंश्चित् स्थले प्रियालुश्चासौवृक्षश्च प्रियालुवृक्षः रायणवृक्षः। प्रियालवृक्षः तलं प्रियालवृतलं रायणवृक्षमूलं सिषेवे सेवितवान्। प्रियालवृक्षतले ध्यानार्थमुपविवेश॥१८॥*

सरलार्थः- ततः सः श्रीऋषभदेवः दशप्रकारकं धर्ममुपदिदेश। भारते वर्तमानान् भव्यजीवान् प्राबोधयत्। अथ सौराष्ट्रालङ्कारभूते अष्टापदपर्वतेऽधिरुह्य क्वचित्प्रदेशे प्रियालुवृक्षतलं ध्यानार्थं सिषेवे सेवितवान् ॥१८॥

ગુજરાતી :- ત્યારબાદ શ્રી આદીશ્વર પ્રભુ ક્ષમાદિક દસ પ્રકારના ધર્મનો ઉપદેશ આપીને ભારતવર્ષના સર્વ પ્રાણીવર્ગને પ્રતિબોધ કરતા સૌરાષ્ટ્ર (સોરઠ) દેશના આભૂષણતુલ્ય શ્રીશત્રુંજય પર્વત પર ચડીને રાયણવૃક્ષની નીચે ધ્યાનારુઢ થયા ॥૧૮॥

हिन्दी :- उसके बाद श्रीआदीश्वरप्रभुने क्षमादिक दस प्रकार के धर्मों का उपदेश देकर भारतवर्ष के सभी प्राणियों को प्रतिबोध देते हुए, सौराष्ट्र देश के आभूषण समान श्रीशत्रुंजय पर्वत पर चढकर रायण वृक्ष के नीचे ध्यानमग्न हुए ॥१८॥

मराठी :- त्यानंतर श्रीआदीश्वरप्रभु क्षमादिक दहा प्रकाराचे धर्मोपदेश करीत, भारतवर्षात सगळ्या प्राण्यांना प्रतिबोध देत, अखेर सौराष्ट्र देशाचे आभूषण असलेल्या श्रीशत्रुंजयपर्वतावर चढले आणि एका रायणवृक्षा खाली ध्यानस्थ झाले.

English :- Then Lord Aadishwar counselled the people about the bliss of forgiveness and the ten commandments of religion and then to climb the mount of Satrunjay (which seemed to be an ornament on the state of Saurashtra). Then sitting under a yellow berry tree and went into a deep meditation. Note - The ten commandments,

1) Kshama - forgiveness    2) Mardhave - uncovetous    3) Arjave - simple - hearted
4) Mukti -    5) Tape - Penence    6) Sayamm - To keep one's senses in complete control
7) Satya - Truth    8) Sauche - Purity    9) Aakinchne -    10) Brahamecharyeia - Cellibacy

श्रीपुण्डरीकं गणनायकंश्रीप्रभुः पुरस्कृत्य तदेत्यवादीत्।
इदं महातीर्थमनाद्यनन्तं कालेन सङ्कोचविकासधर्मि ॥१९॥

अन्वयः- तदा श्रीप्रभुः श्रीपुण्डरीकं गणनायकं पुरस्कृत्य इति अवादीत्। इदं महातीर्थं अनाद्यनन्तमस्ति। परं कालेन सङ्कोचविकासधर्मि वर्तते ॥१९॥

विवरणम्:- *तदा तस्मिन् समये श्रिया युतः प्रभुः श्रीप्रभुः श्रीऋषभदेवः श्रिया युतं पुण्डरीकं श्रीपुण्डरीकं श्रीपुण्डरीकनामानं गणस्य गणानां वा नायकः गणनायकः तं गणनायकं गणधरं पुरस्कृत्य उद्दिश्य इति इत्थं अवादीत् अवोचत् । इदं महत् च तत् तीर्थं च महातीर्थं न विद्यते आदिर्यस्य तदनादि । न विद्यते अन्तः यस्य तदनन्तम् । एवमनाद्यनन्तं शाश्वतं वर्तते । परमिदं कालेन कालक्रमेण सङ्कोचविकासधर्मि भवति कालवशात् इदं सङ्कोचति विकसति च ॥१९॥*

सरलार्थ:- तदा श्रीऋषभदेवः श्रीपुण्डरीकनामानं गणधरं पुरस्कृत्य इति अवादीत् । इदं महातीर्थन् अनाद्यनन्तं वर्तते । परं कालक्रमेण सङ्कोचविकासशालि भवति ॥१९॥

ગુજરાતી :- શ્રી ઋષભપ્રભુએ તે સમયે શ્રીપુંડરીક ગણધરની સમક્ષ આ પ્રમાણે કહ્યું કે, "આ મહાતીર્થ શત્રુંજયગિરિ અનાદિ અનંત છે, પણ તે કાલક્રમે સંકોચ અને વિસ્તારને પામે છે."॥૧૯॥

हिन्दी :- तब श्री ऋषभदेवप्रभुने पुंडरीक गणधर के समक्ष ऐसा कहा , "यह महातीर्थ शत्रुंजयगिरि अनादि और अनन्त है, फिर भी वह काल के क्रम से संकोच और विस्तार पाता है।"॥१९॥

मराठी :- तेव्हा श्री ऋषभदेवप्रभूने पुंडरीक गणधरास उद्देशून असे म्हटले, "हा तीर्थस्वरूप शत्रुंजयगिरि जरी अनादि आणि अनन्त आहे, तरी कालक्रमाने तो संकोच व विस्तार पावत आहे.॥१९॥

English :- Then Rishabhdev said to his discile Pundarik, Gandhar that this pilgrim spot Satrunjaygiri is from times immemorial and eternal, but due to the tide of time. But the pilgrim spot has attained contraction and protraction.

मूले पृथुः सम्प्रति योजनानि, पञ्चाशदूर्ध्वं दश योजनानि ॥
उच्चस्तथाऽष्टावथ सप्तहस्तो भूत्वा पुनः प्राप्स्यति वृद्धिमेवम् ॥२०॥

अन्वय:- सम्प्रति एषः श्रीशत्रुञ्जयः गिरिः मूले पञ्चाशत् योजनानि पृथुः ऊर्ध्वं च दश योजनानि पृथुः वर्तते । तथा अष्टौ योजनानि वृद्धिः अस्ति । अथ सप्तहस्तः भूत्वा पुनः एवं वृद्धिं प्राप्स्यति ॥२०॥

विवरणम्:- सम्प्रति इदानीम् एषः श्रीशत्रुञ्जयः गिरिः मूले मूलप्रदेशे पञ्चाशत् योजनानि पृथुः विशालः विस्तृतः अस्ति । तथा ऊर्ध्व ऊर्ध्वप्रदेशे दश योजनानि पृथुः विशालः अस्ति । तथा अष्टौ योजनानि उच्चः भवति । अथ अवसर्पिणीकाले सप्त हस्ताः प्रमाणं यस्य सः सप्तहस्तः सप्तहस्तप्रमाणो भूत्वा पुनः उत्सर्पिणीकाले एवमेव वृद्धिं प्राप्स्यति वर्धिष्यते ॥२०॥

सरलार्थः- सम्प्रति एषः शत्रुञ्जयःगिरिः मूले पञ्चाशत्योजनं विस्तृतः ऊर्ध्वं दशयोजनपृथुलः अष्टौ योजनानि च उच्चः अस्ति । अनन्तरमवसर्पिणी काले दशहस्तो भूत्वा पुनः उत्सर्पिणीकाले एवमेव वृद्धिमाप्स्यति ॥२०॥

ગુજરાતી :-હાલમાં આ ગિરિ મૂળમાં પચાસ યોજન વિસ્તારવાળો, ઉપર દસ યોજન વિસ્તારવાળો, અને ઉંચાઇમાં આઠ યોજનપ્રમાણ છે. અને આ અવસર્પિણીમાં ઘટતો ઘટતો છઠ્ઠા આરામાં છેવટે સાત હાથપ્રમાણ થઈ પાછો ઉત્સર્પિણીમાં વિસ્તારને પામશે. ॥૨૦॥

हिन्दी :- अभी यह पर्वत, मूल मे पचास योजन विस्तारवाला, ऊपर दस योजन विस्तारवाला और ऊचाई में आठ योजन प्रमाण का है। यह अवसर्पिणी मे घटते घटते छठे आरे के अन्त में सात हाथ प्रमाण का होकर, फिर उत्सर्पिणी में विस्तृत होगा।"॥२०॥

मराठी :- आता हा पर्वत, पायथ्यांत पन्नास योजनांचा, वरुन दहा योजनांचा, आणि उंचीमध्ये आठ योजन इतका आहे. तो ''अवसर्पिणी'' मध्ये कमी होत होत सहाव्या कालखंडात शेवटी सात हाताइतका राहील. नंतर उत्सर्पिणीमध्ये पुन्हा वाढत जाईल.॥२०॥

English :- Now this mount Satrunjay is about fifty *yojans* ( 1 *yojan*= 8 miles) =400 miles approximately in circumference, the top circumference is ten *yojans* = 80 miles, the height is eight *yojans* = 64 miles. Then during the decreasing period of time ( *Avsarpini*) the mountain will keep on decreasing and will ultimetly decrease to the height of seven feet. Then with the passage of time it will go back to its original height (Utsarpini) .

Note :- *Utsarpini* - the ascending part of the time, which spans over a period of ten crore, crore *Sagaropam.* (Sea measurement) *Avsarpini* :- The decending part of the time, which spans over a period of ten crore, crore *Sagaropam.* (Sea measurement)

शत्रुञ्जयश्रीविमलाद्रिसिद्धक्षेत्रेतिनामत्रितयं सदाऽस्य ॥
श्री पुण्डरीकेत्यभिधा चतुर्थी भविन्! स्थितेस्तेऽथ भविष्यतीह ॥२१॥

अन्वयः:- हे भविन्! सदा अस्य शत्रुञ्जयश्रीविमलाद्रि सिद्धक्षेत्रेति नामत्रितयं अस्ति। अथ अत्र ते स्थितेः श्रीपुण्डरीकेति चतुर्थी अभिधा भविष्यति ॥२१॥

विवरणम्:- हे भविन्! पुण्डरीक! अस्य गिरेः पर्वतस्य शत्रुञ्जयः श्रीविमलाद्रिः (विमलाचलः) सिद्धक्षेत्रं च इति नाम्नां त्रितयं नामत्रितयं त्रीणि नामानि सदा सन्ति शाश्वतानि वर्तन्ते । अथ अनन्तरमत्र अस्मिन् पर्वते ते तव स्थितेः अवस्थानात् श्रीपुण्डरीक इति चतुर्थी अभिधा नाम भविष्यति, इति ॥२१॥

सरलार्थ:- हे भविन् पुण्डरीक! अस्य पर्वतस्य शत्रुञ्जयः, श्री विमलाचलः, सिद्धक्षेत्रम् इति त्रीणि शाश्वतानि नामानि सन्ति । अत्र तव स्थितिः अवस्थानं भवति तेन श्रीपुण्डरीकः इति चतुर्थ नामापि भविष्यति ॥२१॥

ગુજરાતી :- હે ભવ્ય પુણ્ડરીક! આ ગિરીના શત્રુંજય, વિમલાચલ અને સિદ્ધક્ષેત્ર એ પ્રમાણે ત્રણ નામ શાશ્વત છે, અને અત્રે તારો નિવાસ થવાથી શ્રી પુંડરીક નામનું ચોથું નામ પણ પ્રસિદ્ધ થશે. ॥૨૧॥

हिन्दी :- हे भव्य पुंडरीक! इस पर्वत के शत्रुंजय, विमलाचल और सिद्धक्षेत्र ऐसे तीन नाम शाश्वत हैं, और इसपर तेरा निवास होने से श्री पुंडरीक ऐसा चौथा नामभी प्रसिद्ध होगा॥२१॥

मराठी :- हे भव्य पुंडरीक! ह्या पर्वताचे शत्रुंजय, विमलाचल आणि सिद्धक्षेत्र अशी तीन नावं शाश्वत आहेत आणि येथे तुझे वास्तव्य होत असल्याने श्री पुंडरीक असे चौथे नावपण प्रसिद्ध होईल.॥२१॥

English :- Then Lord Aadishwar addressing Pundarik as a pure soul who is capable of attainding Salvation, said to him that this mount was baptized with three names, Satrunjay, Vimalachal and Siddheschetra, but it ill attain a fouth name "Shri Pundarik" with his auspicious presence and habitation, that is bound to be famous.

संसेव्य शत्रुञ्जयशैलमेन -मनेनसः स्युर्ननु पापिनोऽपि ।
भुवोऽनुभावात् किल मृत्तिकापि, प्राप्नोति सर्वोत्तमरत्नभावम् ॥२२॥

अन्वयः- एनं शत्रुञ्जयशैलं संसेव्य पापिनः अपि अनेनसः स्युः ननु भुवः अनुभावात् मृत्तिकाऽपि सर्वोत्तमरत्नभावं प्राप्नोति ॥२२॥

विवरणम्:- *एनं शत्रुञ्जयशैलं शत्रुञ्जयगिरिं संसेव्य सेवित्वा पापमेषामस्तीति पापिनः अपि न विद्यते एनः पापं येषां ते अनेनसः पापरहिताः भवन्ति । अस्य शत्रुञ्जयगिरेः भुवः भूमेः अनुभावात् प्रभावान् मृत्तिका अपि मृदपि सर्वेषु उत्तमं सर्वोत्तमम् । सर्वोत्तमं च तद् रत्नं च सर्वोत्तमरत्नम् । सर्वोत्तमरत्नस्य भावः सर्वोत्तमरत्नभावः तं सर्वोत्तमरत्नभावं सर्वोत्तमरत्नताम् प्राप्नोति प्रपद्यते ॥२२॥*

सरलार्थः- एनं शत्रुञ्जयगिरिं सेवित्वा पापिनोऽपि पापरहिताः भवन्ति। अस्यगिरेः भूमेः प्रभावात् मृत्तिकाऽपि सर्वोत्तमरत्नताम् भजते ॥२२॥

ગુજરાતી:- આ શત્રુંજયગિરિનું સ્મરણ કરવાથી પાપી પુરુષો પણ પાપરહિત થાય છે, ખરેખર આ પવિત્ર તીર્થભૂમિના પ્રભાવથી માટી પણ સર્વોત્તમ રત્નપણાને પ્રાપ્ત કરે છે.॥૨૨॥

हिन्दी :- इस शत्रुंजयगिरि के संस्मरण करने से पापी मनुष्य भी पापरहित हो जाता है, और यह भी सत्य है कि तीर्थभूमि के प्रभाव से मिट्टी भी सर्वोत्तम रत्न बन जाती है॥२२॥

मराठी :- या शत्रुंजयपर्वताचे संस्मरण केल्याने पापी माणूस सुद्धा पापांपासून मुक्त होतो आणि हे ही खरे आहे की या तीर्थाच्या प्रभावामुळे माती सुद्धा सर्वोत्तम रत्नपणास प्राप्त होते.॥२२॥

English :- By the act of devotion and worship towards the sacred mount of Satrunjay, sinner shall be cleansed from their sins. And it is also a fact that even the earth of the pilgrim spot shall be transformed into gems with its effulgence.

ये शुद्धभावेन निभालयन्ति भव्या महातीर्थमिदम् कदाचित् ॥
किं श्वभ्रतिर्यग्भवसम्भवःस्यात्? न शेषगत्योरपि जन्म तेषाम् ॥२३॥

अन्वयः- ये भव्याः कदाचित् शुद्धभावेन इदं महातीर्थं निभालयन्ति तेषां शेषगत्योरपि जन्म न विद्यते। तर्हि श्वभ्रतिर्यग्भवसम्भवः किंस्यात् ॥२३॥

*विवरणम्:- ये भव्यजीवाः कदाचित् कस्मिन्नपि समये शुद्धश्चासौ भावश्च शुद्धभावः तेन शुद्धभावेन निर्मलभावेन इदम् महातीर्थम् निभालयन्ति दृष्ट्या अवलोकयन्ति। तेषां शेषगत्योः शेषे च ते गती च शेषगती तयोः शेषगत्योः अवशिष्टदेवमनुष्यगत्योः अपि जन्म न भवति। तर्हि श्वभ्रतिर्यग्भवयोः नरकतिर्यग्भवयोः सम्भवः जन्म कथं स्यात्? कदापि भवितुं नार्हति। अतः ये शुद्धभावेन शत्रुञ्जयतीर्थस्य दर्शनं कुर्वन्ति ते चतुर्गतिभ्यो मुक्ताः भवन्ति ॥२३॥*

सरलार्थः- ये भव्यजीवाः शत्रुञ्जयतीर्थस्य शुद्धभावेन दर्शनं कुर्वन्ति ते चतुर्गतिभ्यः मुक्ताः भवन्ति ॥२३॥

ગુજરાતી :- જે ભવ્ય પ્રાણીઓ આ તીર્થનું કોઈપણ સમયે નિર્મળ ભાવપૂર્વક નેત્રથી દર્શન માત્ર કરે છે, તેઓને દેવગતિ તથા મનુષ્યગતિમાં પણ જન્મ લેવો પડતો નથી, તો પછી નરક અને તિર્યંચ ગતિનો તો સંભવ જ ક્યાંથી હોય ? અર્થાત્ આ પવિત્ર તીર્થનુ ભાવપૂર્વક દર્શન કરનારા ભાગ્યશાળી ભવ્ય પ્રાણીઓને ચાર ગતિમાં જન્મ-મરણની વિડંબના ભોગવવી પડતી નથી, તેઓ અનંત સુખમય મોક્ષમાં જાય છે.॥૨૩॥

हिन्दी :- जो भव्य प्राणी इस तीर्थ का किसी भी समय निर्मल नेत्र से दर्शन कर लेता है, उसे देवगति और मनुष्य गति में भी जनम लेना नहीं पडता, तो फिर नरक और तिर्यंच गति में तो संभव ही नहीं। अर्थात इस तीर्थ को भावपूर्वक दर्शन करनेवाले प्राणियों को चार प्रकार की गतियों में जीवन-मृत्यु की यातनाएँ नहीं भोगनी पडती है और वह सीधा अनन्त सुखमय मोक्ष में जाता है॥२३॥

मराठी :- जो माणूस या तीर्थाचें कोणत्याही वेळी निर्मळ नेत्रांने दर्शन करून घेतो, त्याला देवगति किंवा मनुष्यगतीत जन्म घ्यावा लागत नाही, तर मग नरक किंवा तिर्यंच गतीची शक्यताच कुठे येणार? अर्थात् ह्या तीर्थाचे दर्शन घेणाऱ्यांना चार प्रकारच्या गतीमध्ये जन्म-मरणाची यातना सोसावी लागत नाही आणि तो सरळ अनन्त सुखमय मोक्षामध्ये जातो.॥२३॥

English :- The men who bow down to this mount in deep veneration, with his eyes, will never have to attain a human birth or be a God, then where does the question of going to hell or the animal world , arise. Means he shall attain Salvation, thath overflows with utmost bliss.

**श्रीमद्युगादीशमुखात् मुनीन्द्रास्तत् तन्महातीर्थफलं निशम्य ॥**
**श्री पुण्डरीक प्रमुखा निषेव्य तत्तीर्थमापुः समयेऽपवर्गम् ॥२४॥**

अन्वयः- श्रीमद्युगादीशमुखात् श्रीपुण्डरीकप्रमुखाः मुनीन्द्राः तन्महातीर्थफलं निशम्य तत् तीर्थं निषेव्य समये अपवर्गमापुः ।

विवरणम्:- *श्रीः अस्यास्तीति श्रीमान्। युगादेः ईशः युगादीशः। श्रीमान् चासौ युगादीशश्च श्रीमद्युगादीशः। श्रीमद्युगादीशस्य मुखं तस्मात् श्रीमद्युगादीशमुखात् भगवतः आदिनाथस्य मुखात् श्रीपुण्डरीकः प्रमुखः येषां ते श्रीपुण्डरीकप्रमुखाः श्रीपुण्डरीकादयः मुनीनामिन्द्राः मुनीन्द्राः मुनिश्रेष्ठाः महत् च तत् तीर्थं च महातीर्थम्। तत् च तत् महातीर्थं च तन्महातीर्थम्। तत्तन्महातीर्थस्य फलं तन्महातीर्थफलं तस्य शत्रुञ्जयमहातीर्थस्य फलं प्रभावं निशम्य श्रुत्वा तत् तीर्थं निषेव्य सेवित्वा समये स्वस्वावसरे अपवर्गं मोक्षमापुः प्रापुवन् ॥२४॥*

सरलार्थः- श्रीपुण्डरीकादयः मुनीन्द्राः भगवतः श्रीवृषभदेवस्य मुखात् शत्रुञ्जय महातीर्थस्य तत्तत् फलं माहात्म्यं श्रुत्वा तत्तीर्थं सेवित्वा समये मोक्षमध्यगच्छन् ॥२४॥

ગુજરાતી :- **આ પ્રમાણે શ્રીમાન્ યુગાદિ પ્રભુના મુખથી પુંડરીક ગણધર વિગેરે મુનીન્દ્રોએ તે મહાતીર્થનો પ્રભાવ તથા તેને જોવાથી મળતા ફળને સાંભળી, તે શત્રુંજય તીર્થનું પૂજન-અર્ચન કરી, પોતપોતાના સમયે મોક્ષ પામ્યા. ॥૨૪॥**

हिन्दी :- इस तरह से श्रीमान युगादिप्रभु के मुख से पुंडरीक गणधर इत्यादि मुनीन्द्रोने उस महातीर्थ का प्रभाव और उसकी सेवा से मिलनेवाला फल सुनकर, उस शत्रुंजय तीर्थ का सेवन करके, अपने-अपने समय पर मोक्ष पाया॥२४॥

मराठी :- अशा रीतीने श्रीमान् युगादि प्रभूच्या मुखातून श्रीपुंडरीक गणधर इत्यादि मुनीन्द्रांनी त्या महातीर्थाचा प्रभाव आणि त्याच्या सेवेने मिळणारे फळ ऐकून आपापल्या वेळी मोक्ष मिळविला.॥२४॥

English :- Thus when *Pundarik* was told by Lord Yugadi about the fruit, one can obtain when one, wholeheartedly serves the mount, he atonce processed the act of service and care, with utmost devotion and thus attained Salvation due-course.

**प्राप्ते शिवं श्रीऋषभे सुतोऽस्य शत्रुञ्जये श्रीभरताख्यचक्री ॥**
**अतिष्ठिपत् रत्नमयीं सुवर्णप्रासादमध्ये प्रतिमां तदीयाम् ॥२५॥**

अन्वयः:- श्रीऋषभे शिवं प्राप्ते अस्य सुतः श्रीभरताख्यः चक्री शत्रुञ्जये सुवर्णप्रासादमध्ये तदीयां रत्नमयीं प्रतिमां अतिष्ठिपत् ॥२५॥

विवरणम्:- *श्रीऋषभे शिवं मोक्षं प्राप्ते सति अस्य श्रीऋषभस्य सुतः पुत्रः श्रिया युतः भरतः श्रीभरतः। श्रीभरतः आख्या नाम यस्य सः श्रीभरताख्यः श्रीभरतनामा चक्री चक्रमस्यास्तीति, चक्रवर्ती नृपः शत्रुञ्जये शत्रुञ्जयगिरौ सुवर्णस्य प्रासादः सुवर्णप्रासादः। सुवर्णप्रासादस्य मध्ये सुवर्णमन्दिरस्य मध्ये तस्येयम् तदीया तां तदीयां, (तस्य) रत्नानि प्रचुराणि यस्यां सा रत्नमयी तां रत्नमयीं प्रतिमां मूर्तिमतिष्ठिपत् अस्थापयत् ॥२५॥*

सरलार्थ:- श्रीऋषभे मोक्षं गते तस्य पुत्रः श्रीभरतचक्रवर्ती शत्रुञ्जयगिरौ सुवर्णमन्दिरमध्ये तदीयां रत्नमयीं मूर्तिमस्थापयत् ॥२५॥

ગુજરાતી :- શ્રી ઋષભદેવ પ્રભુ મોક્ષ ગયા બાદ તેમના પુત્ર શ્રીભરતચક્રવર્તીએ શ્રીશત્રુંજયતીર્થ ઉપર સુવર્ણપ્રાસાદમાં પ્રભુની રત્નમય પ્રતિમાનું સ્થાપન કર્યું. ॥૨૫॥

हिन्दी :- श्री ऋषभदेव प्रभु के मोक्ष में जाने के बाद उनके पुत्र श्रीभरतचक्रवर्तीने श्रीशत्रुंजय तीर्थ पर सुवर्णप्रासाद में उन प्रभु की रत्नमयी प्रतिमा की स्थापना की॥२५॥

मराठी :- श्री ऋषभदेव प्रभू मोक्षांत गेल्यानंतर पुत्र श्री भरतचक्रवर्तीने श्रीशत्रुंजय तीर्थावर सुवर्णप्रासादामध्ये प्रभूची रत्नमयी प्रतिमेची स्थापना केली.॥२५॥

English :- After Lord Rishabhdev had attained Salvation his son Shri Bharat Chakravarty constructed a temple of gold and installed a statue of Lord Rishabhdev, made of gems and precious stones.

योऽस्य नाम हृदि साधु वावदिः क्लेशलेशमपि नो स सासहिः।
योऽस्य वर्त्मनि मुदैव चाचलिः संसृतौ न कदापि पापतिः ॥२६॥

अन्वयः- य: अस्य नाम हृदि साधु वावदि: स: क्लेशलेशमपि न सासहि: । य: अस्य वर्त्मनि मुदैव चाचलि: स: कदापि सम्सृतौ न पापति: ॥२६॥

विवरणम्:- *य: पुरुष: अस्य शत्रुञ्जयस्य नाम हृदि स्वान्ते साधु सम्यक्तया वावदि: अतिशयेन वदति । स: क्लेशस्य दु:खस्य लेशमपि अंशमपि न सासहि: अतिशयेन सहते। य: पुरुष: अस्य शत्रुञ्जयतीर्थस्य वर्त्मनि मार्गे मुदा हर्षेण एव चाचलि: अतिशयेन चलति । स: कदापि संसृतौ जन्ममरणरूपे संसारे न पापति: न पतति ॥२६॥*

सरलार्थ:- य: पुरुष: अस्य शत्रुञ्जयस्य नाम मनसि पुन: पुन: वदति । स: अत्यल्पमपि क्लेशं न सहते । य: पुरुष: अस्य शत्रुञ्जयतीर्थस्य मार्गे हर्षेण चलति स: कदापि सम्सृतौ न पतति ॥२६॥

ગુજરાતી :- જે માનવ પોતાના હૃદયમાં સમ્યક્ પ્રકારે શ્રીશત્રુંજય તીર્થનું સ્મરણ કરે છે તેને લેશમાત્ર પણ દુ:ખ સહન કરવું પડતું નથી, તેમજ જે માનવ આ તીર્થનાં માર્ગમાં પ્રફુલ્લિત ચિત્તયુક્ત થઈ ગમન કરે છે, તે કદાપિ સંસારમાં પડતો નથી, તેને સંસારમાં ભ્રમણ કરવું પડતું નથી.॥૨૬॥

हिन्दी :- जो मनुष्य (इन्सान) अपने हृदय में सम्यक् प्रकार से श्रीशत्रुंजय तीर्थ का स्मरण करता है उसे लेशमात्रभी दु:ख सहन नहीं करना पडता। वैसे ही जो इन्सान इस तीर्थ के रास्ते से हर्षयुक्त चित्त से गुजरता है, उसे कदापि संसारमें आना नही पडता॥॥२६॥

मराठी :- जो मनुष्य आपल्या हृदयात सम्यक् रीत्या श्री शत्रुंजय तीर्थाचे स्मरण करतो त्यास जरा सुद्धा दु:ख सोसावें लागत नाही तसेच जो माणूस ह्या तीर्थाच्या मार्गाने प्रफुल्लित मनाने जातो त्याला केव्हाही या संसारात यावे लागत नाही.॥२६॥

English :- One who venerates wholeheartedly towards the mount, from the bottom of his heart, will never have to grieve for even a petty grievance, or even if one passes by the sacred pilgrim spot with a delightful heart, will never ever have to retrace his steps into this world.

**नाऽतः परं तीर्थमिहास्ति किञ्चिद् नातः परं वन्द्यमिहास्ति किञ्चित् ॥**
**नाऽतः परं पूज्यमिहास्ति किञ्चिद्, नातः परं ध्येयमिहास्ति किञ्चित् ॥२७॥**

अन्वयः:- अतः परं इह किञ्चित् तीर्थम्नास्ति। इह अतः परं किञ्चित् वन्द्यं नास्ति। इह अतः परं किञ्चित् पुण्यं नास्ति। इह अतः परं किञ्चित् ध्येयं नास्ति॥२७॥

विवरणम्:- *इह अस्मिन् जगति अतः अस्मातं शत्रुञ्जयात् परमन्यत् श्रेष्ठम् किञ्चित् तीर्थं नास्ति। अतः अस्मात् परमन्यत् श्रेष्ठं किञ्चिदपि वन्दितुं योग्यं वन्द्यं नास्ति। अतः अस्मात् परमधिकं अन्यत् पुण्यं नास्ति। अतः अस्मात् परमधिकं अन्यत् ध्येयं ध्यातुं योग्यं नास्ति॥२७॥*

सरलार्थः:- अस्मिन् जगति अस्मात् शत्रुञ्जयात् श्रेष्ठमन्यत् तीर्थं नास्ति। अस्मादधिकं वन्द्यं किमपि नास्ति। अस्मादधिकं पुण्यं ध्येयं चाऽन्यत् किमपि नास्ति ॥२७॥

**ગુજરાતી :- આ તીર્થથી બીજું કોઇ મહાન્ તીર્થ નથી, આ તીર્થથી બીજું કોઇ પણ અધિક વન્દનીય નથી, આ તીર્થથી બીજું કોઇ પણ વિશેષ પૂજનીય નથી, અને આ તીર્થથી બીજું કોઇ પણ ઉત્કૃષ્ટ ધ્યેય ધ્યાન કરવા યોગ્ય નથી.॥૨૭॥**

हिन्दी :- इस तीर्थ से बढकर अन्य कोई भी तीर्थ महान नहीं है, इस तीर्थ से बढकर और कोई भी अधिक वंदनीय नहीं है, इस तीर्थ से बढकर और कोई भी पूजनीय नहीं हैं और इस तीर्थ से बढकर और कोई भी उत्तम ध्येय (ध्यान करने योग्य) नहीं है॥२७॥

मराठी :- ह्मा तीर्थापेक्षा दुसरे कोणतेही महान ती्र्थ नाही, ह्मा तीर्थापेक्षा दुसरे कोणतेही तीर्थ वंदनीय नाही, या तीर्थावाचून दुसरे कोणतेही तीर्थ पूजनीय नाही, तसेच ह्मा तीर्थावाचून दुसरे कोणतेही ध्यान करण्यास योग्य नाही.॥२७॥

English :- There is no other pilgrim spot as auspicious as this spot. There is no other pilgrim spot, worth worshipping as this one. There is no other pilgrim spot worth augusting. And therer is no other pilgrim spot worth meditating about.

पञ्चाशदादौ किल मूलभूमेर्दशोर्ध्वभूमेरपि विस्तरोऽस्य।
उच्चत्वमष्टैव तु योजनानि मानं वदन्तीह जिनेश्वराद्रेः ॥२८॥

अन्वयः:- आदौ अस्य जिनेश्वराद्रेः मूलभूमेः विस्तरः पञ्चाशत् योजनानि, ऊर्ध्वभूमेः विस्तरः दश योजनानि, उच्चत्वं अष्ट एव योजनानि इति मानं वदन्ति ॥२८॥

विवरणम्:- *शत्रुञ्जयगिरेः परिमाणविषये अन्यग्रन्थेषु अपि इदमेव उक्तमस्ति। ऋषभदेवसमये अस्य जिनानामीश्वरः जिनेश्वरः। जिनेश्वरस्य अद्रिः गिरिः जिनेश्वराद्रिः तस्य जिनेश्वराद्रेः शत्रुञ्जयगिरेः मूलभूमेः विस्तरः पञ्चाशत् योजनानि आसीत्। ऊर्ध्वभूमेः विस्तरः दश योजनानि दश योजनप्रमाणः अभवत्। उच्चत्वं अष्टौ योजनानि अष्टयोजनप्रमाणकम् आसीत्। इति अस्य परिणामं वदन्ति ॥२८॥*

सरलार्थ:- अन्यग्रन्थेष्वपि शत्रुञ्जयगिरेः परिमाणमित्थमेव वर्णितमस्ति। तद् यथा - श्रीऋषभदेवस्य समये अस्य शत्रुञ्जयगिरेः मूलभूमेः विस्तरः पञ्चाशत् योजनानि, ऊर्ध्वभूमेः विस्तरः दश योजनानि, उच्चत्वं च अष्टौ योजनानि अभवत् ॥२८॥

ગુજરાતી:- પવિત્ર તીર્થ શ્રી શત્રુંજયના પરિમાણ વિષયમાં અન્ય ગ્રંથોમાં આ પ્રમાણે ઉલ્લેખ છે. શ્રી ઋષભદેવ પ્રભુ વખતે મૂળ ભૂમિનો વિસ્તાર પચાસ યોજન, ઊર્ધ્વભૂમિનો વિસ્તાર દસ યોજન, અને આ ગિરિની ઉંચાઈ આઠ યોજન હતી.॥૨૮॥

हिन्दी :- श्री शत्रुंजयतीर्थ के परिमाण के विषय में अन्य ग्रन्थों में भी इस प्रकार उल्लेख मिलता है। श्री ऋषभदेव प्रभु के य में उस पर्वत का विस्तार मूल भूमि का पचास योजन, चोटी का दस योजन, और उंचाई आठ योजन थी॥२८॥

मराठी :- श्री शत्रुंजयतीर्थांच्या परिमाणासंबंधी इतर ग्रंथात ह्याप्रमाणे उल्लेख आढळतो. श्री ऋषभदेव प्रभूच्या वेळी ह्या पर्वताचा विस्तार मूळ भूमि पन्नास योजन, शिखर दहा योजन आणि उंची आठ योजन होती.-॥२८॥

English :- Regarding the standard of evaluation , of the mount of Satrunjay , many holy books have the narration that during the stay of Lord Rishabhdev on the mount Satrunjay , the total area was fifty *yojans* (400 miles) the top circumference was ten *yojans* (80 miles) and the height was eight *yojans* (64 miles).

दृष्ट्वा शत्रुञ्जयं तीर्थं स्पृष्ट्वा रैवतकाचलम् ।
स्नात्वा गजपदे कुण्डे, पुनर्जन्म न विद्यते ॥२९॥

अन्वयः- शत्रुञ्जयम् तीर्थं दृष्ट्वा रैवतकाचलं स्पृष्ट्वा गजपदे कुण्डे स्नात्वा पुनर्जन्म न विद्यते ॥२९॥

विवरणम्:- *भागवतपुराणेऽप्युक्तं - शत्रुञ्जयम् नाम तीर्थं दृष्ट्वा, विलोक्य, रैवतकाचलं रैवतकपर्वतं स्पृष्ट्वा, गजपदे कुण्डे च स्नात्वा स्नानं कृत्वा पुनः जन्म न विद्यते । यः शत्रुञ्जयं तीर्थं पश्यति, रैवतकाचलं स्पृशति, गजकुण्डे च स्नाति । सः पुनः जन्म न लभते । मोक्षं गच्छति इत्यर्थः ॥२९॥*

सरलार्थः- शत्रुञ्जयतीर्थदर्शनेन रैवतकाचलस्पर्शनेन गजपदकुण्डे स्नानेन च पुनर्जन्म न भवति ॥२९॥

ગુજરાતી :- ભાગવતમાં પણ કહ્યું છે કે જે મનુષ્ય શ્રીશત્રુંજય ગિરિનું દર્શન કરે છે, ગિરનાર પર્વતનો સ્પર્શ કરે છે, અને ગજપદ કુંડમાં સ્નાન કરે છે તેને ફરીથી જન્મ લેવો પડતો નથી ॥૨૯॥

हिन्दी :- श्री भागवत में भी लिखा है कि, जो इन्सान शत्रुंजयतीर्थ का (गिरि का) दर्शन करता है, श्री गिरनार पर्वत का स्पर्श करता है और गजपद कुंड मे स्नान करता है उसे फिर से जन्म नहीं लेना पडता ॥२९॥

मराठी :- श्री भागवतातसुद्धा असे सांगितले आहे की, जो मनुष्य श्री शत्रुंजयतीर्थाचे दर्शन घेतो, श्री गिरनार पर्वताला स्पर्श करतो व गजपद कुंडात स्नान करतो त्याला पुन्हा जन्म घ्यावा लागत नाही.॥२९॥

English :- Even it has been written in the holybook Bhagwat that, the man who visits the sacred pilgrim spot devoutly and one who bows down in veneration towards the mount of Girnar and the one who baths in the springs of *Gajpadh* will never have to attain a worldly birth ever again.

अष्टषष्टिषु तीर्थेषु यात्रया यत् फलं भवेत् ॥
श्रीशत्रुञ्जयतीर्थेशदर्शनादपि तत्फलम् ॥३०॥

अन्वयः- अष्टषष्टिषु तीर्थेषु यात्रया यत् फलं भवेत् । श्री शत्रुञ्जयतीर्थेशदर्शनादपि तत् फलं भवति ॥३०॥

विवरणम्:- *नागपुराणे उक्तं- अष्टषष्टिषु (६८) तीर्थेषु यात्रया यात्रां कृत्वा यत् फलं भवेत्। तत् फलं श्रिया युक्तं शत्रुञ्जयतीर्थं श्री शत्रुञ्जयतीर्थम्। श्री शत्रुञ्जयतीर्थस्य ईशः श्रीशत्रुञ्जयतीर्थेशः। श्रीशत्रुञ्जयतीर्थेशस्य दर्शनं श्री शत्रुञ्जयतीर्थेशदर्शनं*

*तस्मात् श्रीशत्रुञ्जयतीर्थेशदर्शनात् एव (अपि, एवार्थः) भवति ॥३०॥*

सरलार्थः- अष्टषष्टिषु तीर्थेषु यात्रां कृत्वा यत्फलं लभ्यते। तत्फलं श्री शत्रुञ्जयतीर्थेशदर्शनात् एव लभ्यते ॥३०॥

ગુજરાતી :- નાગપુરાણમાં કહ્યું છે કે, અડસઠ તીર્થોની યાત્રા કરવાથી જે ફળ પ્રાપ્ત થાય, તેટલું ફળ માત્ર એક તીર્થાધિપતિ શ્રી શત્રુંજયતીર્થનાં દર્શન કરવાથી પ્રાપ્ત થાય છે.॥૩૦॥

हिन्दी :- श्री नागपुराण में कहा है कि, अडसठ तीर्थों की यात्रा करने से जो फल मिलता है उतनाही फल केवल तीर्थाधिपति श्रीशत्रुंजयतीर्थ के दर्शन करने से मिलता है॥३०॥

मराठी :- श्रीनागपुराणांत सांगितले आहे की, जे फळ अडुसष्ट तीर्थांची यात्रा केल्याने मिळते तेच फळ एकमात्र श्री शत्रुंजयतीर्थाच्या दर्शनाने मिळते.॥३०॥

English :- It is even mentioned in the Nagpurran that the fruit that one attains from sixty eight pilgrimages , can be obtained through just one pilgrimage, to the mount of Satrunjay.

**तीर्थमालास्तवे-अतो धराधीश्वर! भारतीं भुवं तथाऽधिगम्योत्तममानुषं भवं।**
**युगादिदेवस्य विशिष्टयात्रया विवेकिना ग्राह्यमिदं फलं श्रियाः ॥३१॥**

अन्वयः- अतः हे धराधीश्वर ! भारतीं भुवं तथा उत्तमं मानुषं भवं अधिगम्य विवेकिना युगादिदेवस्य विशिष्टयात्रया श्रियाः इदं फलं ग्राह्यम् ॥३१॥

विवरणम्:- *तीर्थमालास्तवेऽप्युक्तं अतः अस्मात्कारणात् धरायाः पृथ्व्याः अधीश्वरः धराधीश्वरः तत्सम्बुद्धौ हे धराधीश्वर! हे पृथ्वीपते! भारतस्येयं भारती, ता भारतीं भुवं तथा मनुष्यस्यायं मानुषः। मानुषश्चासौ भवश्च मानुषभवः। उत्तमश्चासौ मानुषभवश्च उत्तममानुषभवः, तं उत्तममानुषभवं मोक्षप्रापकं मनुष्यजन्म अधिगम्य प्राप्य विवेकः अस्यास्तीति विवेकी, तेन विवेकिना सारासारविचारवता पुरुषेण युगस्य आदिदेवः युगादिदेवः तस्य युगादिदेवस्य भगवतः आदिनाथस्य विशिष्टा चासौ यात्रा च विशिष्टयात्रा तया विशिष्टयात्रया श्रीशत्रुञ्जययात्रया श्रियाः अधिगतलक्ष्म्याः इदं फलं ग्राह्यं ग्रहीतव्यम्। भगवतो विशिष्टयात्रां कृत्वा धनसाफल्यं कर्तव्यम् ॥३१॥*

सरलार्थ:- तीर्थमालास्तवेऽप्युक्तं अतः हे पृथ्वीश्वर। भारतस्येमां पुण्यां भूमिं उत्तमं मानुषं जन्म च प्राप्य विवेकिना पुरुषेण युगादिदेवस्य विशिष्टयात्रया श्रीशत्रुञ्जययात्रया श्रियाः फलं ग्राह्यम् ॥३१॥

ગુજરાતી:- 'તીર્થમાલાસ્તવ'માં પણ કહ્યું છે માટે, હે ભૂપતિ! આ ભારતભૂમિ તેમજ ઉત્તમ મનુષ્યજન્મ પામીને, યુગાદિદેવ શ્રી આદિનાથની વિશિષ્ટ પ્રકારની યાત્રા કરીને વિવેકી મનુષ્યોએ પોતાને પ્રાપ્ત થયેલી લક્ષ્મીનું ફળ ગ્રહણ કરવું.॥૩૧॥

हिन्दी :- तीर्थमालास्तव में भी यही कहा गया है, इसलिये हे राजन्! भारतभूमि में उत्तम मनुष्य जन्म पाकर युगादिदेव श्री आदिनाथ की विशिष्ट प्रकार से यात्रा कर के विवेकी मनुष्यों को अपनी लक्ष्मी का फल प्राप्त करना चाहिये॥३१॥

मराठी :- 'तीर्थमालास्तव' यात लिहिले आहे म्हणून, हे राजन ! ह्या भारतभूमीत उत्तम मनुष्य जन्म मिळवून युगादिदेव श्री आदिनाथप्रभूंची विशिष्ट प्रकारची यात्रा करून विवेकसंपन्न मनुष्याने स्वतःला प्राप्त झालेल्या लक्ष्मीचें फळ प्राप्त करून घ्यावे.॥३१॥

English :- There is even said in the sacred book, "Tirthmalastav'. So as a man has attained the chef of all forms i.e. a human, so he should thank the good Lord Aadinath, by carrying out this particular and the most prominent pilgrimage in his name and discret men should come forward to use their wealth, which they have achieved, for such a religious purpose and thus procure the fruit out of it.

**एवं श्रुत्वा नरेशोऽपि, तीर्थमाहात्म्यमद्भुतम् ॥**
**विसृज्य श्रेष्ठिनं यात्रा - निमित्तं लग्नमग्रहीत् ॥३२॥**

अन्वय:- एवं अद्भुतं तीर्थमाहात्म्यं श्रुत्वा नरेशः अपि श्रेष्ठिनं विसृज्य यात्रानिमित्तं लग्नम् अग्रहीत् ॥

*विवरणम्:- एवम् इत्थम् अद्भुतमाश्चर्यकारकं तीर्थस्य माहात्म्यं महिमानं तीर्थमाहात्म्यं श्रुत्वा आकर्ण्य नराणामीशः नरेशः नरेन्द्रः अपि श्रेष्ठिनं विसृज्य विमुच्य यात्रायाः निमित्तं यात्राकृते लग्नं शुभमुहूर्तं अग्रहीत् अगृह्णात् ॥३२॥*

सरलार्थ:- इत्थमाश्चर्यकारकं शत्रुञ्जयतीर्थमाहात्म्यं श्रुत्वा नृपः अपि श्रेष्ठिनं विसृज्य यात्रायै लग्नमग्रहीत् ॥३२॥

ગુજરાતી :- આ પ્રમાણે શ્રી શત્રુંજય તીર્થનો અદ્‌ભુત પ્રભાવ સાંભળીને નાભાક રાજાએ તે ધનાઢ્ય શેઠને વિદાય કરી, શ્રી શત્રુંજય તીર્થની યાત્રાને માટે ઉત્તમ મુહૂર્ત જોવડાવ્યું. ॥૩૨॥

हिन्दी :- इस प्रकार श्रीशत्रुंजयतीर्थ का माहात्म्य सुनकर नाभाक राजा ने उस धनाढ्य शेठ को विदा किया और अपनी श्रीशत्रुंजयतीर्थ की यात्रा के प्रयाण के लिये उत्तम मुहुर्त निकलवाया॥३२॥

मराठी :- ह्याप्रमाणे श्रीशत्रुंजयतीर्थाचे अदभुत माहात्म्य ऐकून नाभाक राजाने त्या धनाढ्य शेठची रवानगी केली, आणि स्वतः श्री शत्रुंजय तीर्थाच्या यात्रेसाठी उत्तम मुहूर्त पाहण्यास सांगितले.॥३२॥

English :- Thus when King Nabhak heard the magnanimity of the mount of Satrunjay, he was overcome with feelings of excitement. He then bid farewell to Dhanadhya and proceeded to find out the most auspicious time (mahurat)
for the departure, to experience this peculiar speciality of the pilgrimage mountain of Shatrunjay wholeheartedly.

लग्नक्षणे व्यतिक्रान्ते, ब्रह्मद्वारव्यथावशात्।
पश्चात्तापं दधद् भूपो, द्वितीयं लग्नमग्रहीत् ॥३३॥

अन्वय:- ब्रह्मद्वारव्यथावशात् लग्नक्षणे व्यतिक्रान्ते पश्चात्तापं दधत् भूपः द्वितीयं लग्नम् अग्रहीत् ॥३३॥

*विवरणम्:- ब्रह्मणः द्वारं ब्रह्मद्वारं मस्तकम् । ब्रह्मद्वारे मस्तके व्यथा ब्रह्मद्वारव्यथा। ब्रह्मद्वारव्यथायाः वशात् ब्रम्हद्वारव्यथावशात् शिरोवेदनावशात् लग्नस्य शुभमुहूर्तस्य क्षणः समयः लग्नक्षणः तस्मिन् लग्नक्षणे शुभमुहूर्तसमये व्यतिक्रान्ते निर्गते पश्चात्तापं अनुतापं दधत् दधानः भुवम् पातीति भूपः नृपः, द्वितीयं लग्नं शुभमुहूर्तं अग्रहीत् अगृह्णात्। यदा यात्रानिर्गमस्य लग्नवेला समायाता तदा नृप; शिरोवेदनया व्याकुलः सञ्जातः। तेन स नियतसमये यात्रायै निर्गन्तुमक्षमो बभूव। अतःपश्चात्तापाकुलः सः द्वितीयं लग्नमग्रहीत्, इत्यर्थः ॥३२॥*

सरलार्थ:- यदा लग्नक्षण: समायात: तदा नृप: शिरोवेदनाविह्वल: आसीत्। तेन स यात्रार्थं निर्गन्तुं नाशक्नोत्। तेन लग्नक्षण: व्यतिक्रान्त:। अत: पश्चात्तापाकुल: नृप: द्वितीयं लग्नमग्रहीत् ॥३२॥

ગુજરાતી:- પણ જ્યારે મુહૂર્તનો દિવસ આવ્યો ત્યારે કર્મયોગે મસ્તકમાં બ્રહ્મદ્વારને વિષે અસહ્ય પીડા થવાથી તેનાથી જઈ શકાયું નહીં, તેથી પશ્ચાત્તાપ કરતા સાથે રાજાએ જ્યોતિષી પાસે બીજું મુહૂર્ત કઢાવ્યું.॥૩૨॥

हिन्दी :- लेकिन जब मुहूर्त का दिन आया तब मस्तक में असह्य पीडा होने के कारण वह जा नहीं सका तब पश्चात्ताप करते हुऐ उसने ज्योतिषीओं द्वारा दूसरा मुहूर्त निकलवाया॥३२॥

मराठी :- पण मुहूर्ताच्या दिवशी त्यांच्या डोक्यात असह्य वेदना होत असल्याने त्यांचे जाणे झाले नाही. त्यामुळे पश्चाताप करीत असतांना त्याने ज्योतिष्यांना दुसरे मुहूर्त पाहण्यास सांगितले.॥३२॥

English :- But when the day for departure dawned, he suddenly had a severe migrane which made him to postpone his pilgrimage. Thus carressing his feelings of repentance, he went to an astrologer, to find out the next most auspicious time (*mahurat*) for his pilrimage to Satrunjay.

**आकस्मिकसमुद्भूत - ज्येष्ठपुत्रव्यथावशात् ।**
**तस्मिन्नपि गते लग्ने, तृतीयं लग्नमाददे ॥३४॥**

अन्वय:- तस्मिन्नपि लग्ने आकस्मिकसमुद्भूतज्येष्ठपुत्रव्यथावशात् गते सति तृतीयं लग्नमाददे ॥३४॥

*विवरणम्:- तस्मिन् द्वितीये लग्ने लग्नक्षणे अपि अकस्मात् समुद्भूता समुत्पन्ना आकस्मिकसमुद्भूता। ज्येष्ठ श्चासौ पुत्रश्च ज्येष्ठपुत्र:। ज्येष्ठपुत्रस्य व्यथा ज्येष्ठ पुत्रव्यथा । आकस्मिकसमुद्भूता चासौ ज्येष्ठपुत्रव्यथा चाकस्मिक समुद्भूतज्येष्ठपुत्रव्यथा। तस्या: वशात् गते अतिक्रान्ते सति नृप: तृतीयं लग्नं आददे आत्तवान्।। यदा द्वितीयलग्नक्षण: समायात: तदा अकस्मात् एव नृपस्य ज्येष्ठपुत्र: व्यथापीडितोऽभवत् तेन तदापि नृप: निर्गन्तुं नाऽशक्नोत् अत: स: लग्नक्षणोऽपि व्यतिक्रान्त:। तस्मात् स: तृतीयम् लग्नमगृह्णात् ॥३४॥*

सरलार्थः- यदा द्वितीयः लग्नक्षणः समायातः तदा नृपस्य ज्येष्ठपुत्रः अकस्मात् समुत्पन्नव्यथाकुलः समजायत। तेन स लग्नक्षणः अपि व्यतिक्रान्तः। अतः सः तृतीयं लग्नं गृहीतवान् ॥३४॥

ગુજરાતી :- તે બીજી વખતે જોવડાવેલા મુહૂર્તનો દિવસ આવતાં તેના મોટા પુત્રને અકસ્માત્ વ્યથા ઉત્પન્ન થવાથી તે બીજું મુહૂર્ત પણ ગયું. ત્યારે રાજાએ જ્યોતિષીઓ પાસે ત્રીજું મુહૂર્ત કઢાવ્યું.॥૩૪॥

हिन्दी :- जब दूसरी बार मुहूर्त का दिन आया तब उसके बडे पुत्र को यकायक व्यथा उत्पन्न होने से वह मुहूर्त भी निकल गया तब राजाने ज्योतिषीओं से तीसरा मुहूर्त निकलवाया॥३४॥

मराठी :- दुसऱ्या मुहूर्ताच्या दिवशी आपल्या मोठ्या पुत्राला एकाएकी आजार उत्पन्न झाल्याने तो दुसरा मुहूर्त सुद्धा निघून गेला. मग राजाने ज्योतिष्यांना तिसरा मुहूर्त पाहण्यास सांगितले.॥३४॥

English :- But when that day dawned, the King's eldest son, had a sudden anguish and throe within himself which compelled the King to postpone his pilgrimage again. He thus called for the third time, the auspicious time *(mahurat)* for his departure.

पट्टदेवीमहाकष्टाज्जातस्तस्याप्यतिक्रमः ।
स्वचक्रशङ्कया लग्नमत्यगात् तुर्यमप्यथ ॥३५॥

अन्वयः- पट्टदेवीमहाकष्टात् तस्य अपि अतिक्रमः जातः। अथ स्वचक्रशङ्कया तुर्यं लग्नमपि अत्यगात् ॥३५॥

विवरणम्:- *यदा तृतीयः लग्नक्षणः समायातः तदा पट्टेऽभिषिक्ता देवी पट्टदेवी पट्टराज्ञी। पट्टदेव्याः महत् च तत्कष्टञ्च महाकष्टं महाव्याधिः, तस्मात् पट्टदेवीमहाकष्टात् पट्टरा याः महाव्याधेः तस्य तृतीयलग्नक्षणस्यापि अतिक्रमः सञ्जातः। राजा यात्रार्थं गन्तुं नाऽशक्नोत्। अतः नृपः चतुर्थं लग्नमाददात्। यदा च चतुर्थलग्नक्षणः समागतः तदा स्वस्य चक्रे देशे सैन्यादिविप्लवशङ्का समजायत। तया शङ्कया सः गन्तुं न प्राभवत्। तेन तुर्यमपि चतुर्थमपि लग्नं अत्यगात् अत्यक्रामत् ॥३५॥*

सरलार्थः- तृतीये लग्नक्षणे समायाते पट्टदेव्याः महाकष्टं जातम्। अतः तस्याप्यतिक्रमः अभूत्। चतुर्थे लग्नक्षणे स्वदेशे सैन्यादिविप्लवशङ्का प्रादुर्भूता। तेन म् लग्नमपि अतिक्रान्तम्। राजा यात्रार्थं गन्तुं नाऽशक्नोत् ॥३५॥

ગુજરાતી:- ત્રીજી વખત જોવડાવેલા મુહુર્તનો દિવસ આવતાં પોતાની પટરાણીને અકસ્માત્ મહાવ્યાધિ ઉત્પન્ન થવાથી તે દિવસે પણ રાજા નીકળી શક્યો નહીં. ત્યારે ફરીથી ચોથી વખત નાભાક રાજાએ મુહૂર્ત જોવડાવ્યું પણ તે મુહૂર્ત આવતાં પોતાના સૈન્યમાં તથા દેશમાં બળવો જાગવાની શંકાથી તે વખતે પણ રાજા શ્રી શત્રુંજય તીર્થની યાત્રા કરવા માટે નીકળી શક્યો નહીં, અને ચોથું મુહૂર્ત પણ વ્યતીત થઇ ગયું. ॥૩૫॥

हिन्दी :- जब तीसरी बार मुहूर्त का दिन आया तब पट्टराणी को यकायक दर्द उठनें से उस दिन भी राजा निकल न सका। चौथी बार अपने सैन्य में और देश में बगावत की स्थिति उत्पन्न होने की आशंका से वह यात्रा के लिये न निकल सका, और चौथा मुहूर्त भी निकल गया॥३५॥

मराठी :- तिसऱ्या वेळी मुहूर्ताच्या दिवशी पट्टराणीला एकाएकी आजार झाल्याने तो निघू शकला नाही, तर चौथ्या मुहूर्ताच्या दिवशी सैन्यात व देशात द्रोह होण्याची स्थिती निर्माण झाल्याने तो जाऊ शकला नाही, चौथा मुहूर्त सुद्धा निघून गेला.॥३५॥

English :- But unfortunately when that day arose, his chief queen fell great sick, he thus had to call for the fourth auspicious time (mahurat). But when the fourth auspicious time grew light (dawned) ge get the fear (doubt) about there arose a sudden aggression between the army and the state, which again made King Nabhak to postpone his voyage for the fouth time.

**अहो! पापी ममात्मेति, निन्दन् स्वं पञ्चमं नृपः।**
**मुहूर्तमाददे तच्च परचक्रभयाद् गतम् ॥३६॥**

अन्वयः- अहो! मम आत्मा पापी इति स्वं निन्दन् नृपः पञ्चमं मुहूर्तं आददे। तत् च परचक्रभयात् गतम् ॥३६॥

विवरणम्:- *यदाच शत्रुञ्जययात्रार्थं निश्चिताः चत्वारोऽपि लग्नक्षणाः व्यर्थतया अतिक्रान्ताः तदा अहो! मम आत्मा पापी वर्तते येन यात्रायां विघ्नाः आयान्ति इति स्वं आत्मानं निन्दन् नृपः पञ्चमं मुहूर्तमाददे। जग्राह। परं तदपि परचक्रभयात् परेषां नृपाणां सैन्याक्रमणभयात् गतं अतिक्रान्तम् ॥३६॥*

सरलार्थ:- चतुर्षु अपि लग्नक्षणेषु व्यर्थतयाऽतिक्रान्तेषु अहो। ममात्मा पापी वर्तते इति स्वम्निन्दन् नृपः पञ्चमम् लग्नमाददात्। परम् तदपि परचक्रभयात् व्यपगतम् ॥३६॥

ગુજરાતી:- આ પ્રમાણે શ્રી શત્રુંજય તીર્થની યાત્રા નિમિત્તે જોવડાવેલા ચારે મુહૂર્તો નિષ્ફળ જવાથી 'અરે! મારો આત્મા મહાપાપી છે કે જેથી પવિત્ર તીર્થ શ્રીશત્રુંજયની યાત્રા કરવા જતાં આવી રીતે વિઘ્નો આવ્યા જ કરે છે' એ પ્રમાણે પોતાના આત્માની નિંદા કરતા રાજાએ પાંચમું મુહૂર્ત કઢાવ્યું, પણ કર્મસંયોગે તે મુહૂર્ત પણ પોતાના દેશ ઉપર બીજા રાજાઓના સૈન્યો ચડી આવવાના ભયથી વીતી ગયું.॥૩૬॥

हिन्दी :- इस प्रकार श्रीशत्रुंजयतीर्थ की यात्रा के चारो ही मुहूर्त निष्फल हो जाने से, "अरे हाय! मेरा आत्मा महापापी है, जिस से मुझे श्रीशत्रुंजयतीर्थ की यात्रा करने के लिये जाते हुए ऐसे विघ्न आते रहते हैं। इस प्रकार अपने आप को कोसते हुए राजाने पांचवा मुहूर्त निकलवाया लेकिन कर्मसंयोग से वह मुहूर्त भी आपने देश पर दूसरे राजाओं के आक्रमण के भय से चला गया॥३६॥

मराठी :- ह्याप्रमाणे शत्रुंजययात्रेचे चार ही मुहुर्त वाया गेल्याने, "अरे अरे। मी किती महापापी आहे। की, शत्रुंजय यात्रेच्या प्रत्येक वेळी अशी विघ्ने येतात. अशी स्वतःच्या आत्म्याची निंदा करीत त्याने ज्योतिषांना पांचवे मुहुर्त पाहण्याचे सांगितले परंतु कर्मयोगाने त्या दिवशी सुद्धा परराष्ट्रांच्या आक्रमणाचे भय निर्माण झाले आणि तो मुहुर्त सुद्धा निघून गेला."॥३६॥

English :- Thus the King had to postpone his pilgrimage four times due to untoward circumstances. This made the king to carress his feelings of remorse as he began to brood about the matter and began calling himself a grave sinner, for having germinated clogs and obstacles, due to his past actions. He thus called for a fifth auspicious time (mahurat) But when that day dawned there arose a possibility of the neighbouring king's attack. And due to this threat, he had to again postpone his pilgrimage.

एवं भूपो व्यतिक्रान्ते, यात्राया लग्नपञ्चके।
हेतुमस्य कथं ज्ञास्या-मीति चिन्तातुरोऽभवत् ॥३७॥

अन्वयः- एवं यात्रायाः लग्नपञ्चके व्यतिक्रान्ते सति भूपः अहं अस्य हेतुं कथं ज्ञास्यामि? इति चिन्तातुरः अभवत् ॥३७॥

विवरणम्:- *एवं इत्थं यात्रायाः लग्नानां मुहूर्तानां पञ्चकं लग्नपञ्चकं मुहूर्तपञ्चकं तस्मिन् लग्नपञ्चके मुहूर्तपञ्चके व्यर्थतया व्यतिक्रान्ते व्यपगते सति भुवम् पातीति भूपः नृपः अहं अस्य हेतुं कारणं कथं ज्ञास्यामि इति चिन्तया आतुरः व्याकुलः चिन्तातुरः चिन्ताकुलः समजायत - अभवत् ॥३७॥*

सरलार्थः- यदा यात्रायाः कृते निष्कासितं लग्नपञ्चकं व्यर्थतया व्यपगतं तदा नृपः अस्य कारणं कथं ज्ञास्यामि? इति चिन्तातुरः अभवत् ॥३७॥

ગુજરાતી :- આ પ્રમાણે શ્રી શત્રુંજય તીર્થની યાત્રા કરવા માટે જ્યોતિષીઓ પાસે કઢાવેલા પાંચે મુહૂર્તો વ્યતીત થવાથી 'આવી રીતે વિઘ્નો આવવાનું કારણ હું કેવી રીતે જાણીશ ?' એ પ્રમાણે રાજા ચિંતાતુર થયો.॥૩૭॥

हिन्दी :- इस प्रकार श्री शत्रुंजय तीर्थ की यात्रा के लिये ज्योतिषियों के द्वारा निकाले गये पांचो ही मुहूर्त बीत जाने से "इसप्रकार विघ्न आने का कारण भला मैं कैसे जान पाऊंगा?" इस विचार से वह चिंतातुर हो गया॥३७॥

मराठी :- ह्याप्रमाणे श्री शत्रुंजयतीर्थ यात्रेचे ज्योतिषांकडून काढलेले पाचही मुहूर्त निघून गेल्याने तो राजा, "याप्रमाणे विघ्न येण्याचे कारण मला कसे समजेल ?" अशा विचाराने चिंतातुर झाला.॥३७॥

English :- Thus when all the five ocassions flew past, he began lamenting about it and wandered as to how, would he be able to know the reason of hinderences. The king became worried.

**तावतोद्यानमायाता:, श्रीयुगन्धरसूरय: ॥**
**इति विज्ञपयामास, भूपालं वनपालक: ॥३८॥**

अन्वय:- तावता श्री युगन्धरसूरय: उद्यानं आयाता: इति वनपालक: भूपालं विज्ञपयामास ॥३८॥

*विवरणम्:- तावता कालेन श्रिया युक्ता: युगन्धरसूरय: श्रीयुगन्धरसूरय: उद्यानं उपवनं आयाता: आगच्छन् इति वनस्य पालक: वनपालक: उद्यानपालक: भुवं पृथ्वीं पालयतीति भूपाल:, तं भूपालं महीपालं विज्ञपयामास व्यज्ञापयत् न्यवेदयत्।*

सरलार्थ:- नृप: यावत् एवं विचिन्तयति तावत् श्री युगन्धरसूरय: उद्यानम् आगता: इति उद्यानपालक: नृपतिं व्यज्ञापयत् ॥३८॥

**ગુજરાતી :- એમ વિચાર કરે છે, તેટલામાં વનપાલકે આવી રાજાને વધામણી આપી કે ઉદ્યાનમાં શ્રીયુગંધરસૂરિ સમવસર્યા છે.**

हिन्दी :- इसप्रकार राजा विचार करता है, तब वनरक्षकने आकर बधाई दी, "हे महाराज! आज उद्यान में श्री युगन्धरसूरि महाराज पधारे है।"॥३८॥

मराठी :- याप्रमाणे विचार करीत असता राजाला वनरक्षकाने येऊन निरोप दिला की, "महाराज। आज बागेत श्री युगन्धरसूरि महाराज आले आहेत."

English :- One day, when the king was in a painsive mood, the forester arrived there and greeting the king told the king that a priest named Yugandher Suri has arrived in the garden.

**ततो गतो वनं राजा, चतुर्ज्ञाननिधीन् गुरून्**
**ज्ञात्वा नत्वाऽन्तरायाणां हेतून् पप्रच्छ भक्तिभाक् ॥३९॥**

अन्वय:- तत: भक्तिभाक् राजा वनं गत:। गुरून् चतुर्ज्ञाननिधीन् ज्ञात्वा नत्वा अन्तरायाणाम् हेतून् पप्रच्छ ॥३९॥

*विवरणम्:- तत: उद्यानपालकवचनश्रवणात् अनन्तरं भक्तिं भजतीति भक्तिभाक् भक्त्युल्लसितमानस: राजा परिवारेण सह वनं गत: अगच्छत्। गुरून् चत्वारि (मतिश्रुतावधिमन:पर्यवरूपाणि) च तानि ज्ञानानि च चतुर्ज्ञानानि। चतुर्ज्ञानानां निधय: तान् चतुर्ज्ञाननिधीन् ज्ञात्वा (गुरव: चतुर्ज्ञानधारिण: सन्ति इति ज्ञात्वा) नत्वा वन्दित्वा अन्तरायाणाम् विघ्नानां हेतून् कारणानि पप्रच्छ अप्राक्षीत्।*

सरलार्थः- ततः भक्तिभाक् नृपः परिवारेण सह वनं गतः। गुरून् चतुर्ज्ञाननिधीन् ज्ञात्वा तान् वन्दित्वा अन्तरायाणां हेतून् पप्रच्छ।

ગુજરાતી:- ત્યાર બાદ રાજા પોતાના કુટુંબ પરિવાર સહિત અત્યંત ભક્તિવડે ઉલ્લાસિત ચિત્તવાન્ થઈ ઉદ્યાનમાં ગયો, ત્યાં જઈ ગુરુમહારાજને વિધિપૂર્વક વંદન કરી તેમને ચાર જ્ઞાનના નિધિ જાણી પોતાના અંતરાયનું કારણ પૂછ્યું. ॥૩૯॥

हिन्दी :- उसके बाद राजा अपने परिवारसहित अत्यंत भक्ति से हर्षित होकर उधानमें गया, वहाँ गुरुमहाराज को प्रणाम कर के उनको चारों ज्ञान के निधि जानकर, अपने अन्तरायों का कारण पूछा.॥३९॥

मराठी :- नंतर तो राजा आपल्या कुटुंबासह अत्यंत भक्तीने उल्लसित होऊन बागेत गेला, आणि चारही ज्ञानाचे निधि असे गुरुमहाराजांना नमस्कार करून आपल्या विघ्नांचे कारण विचारले.॥३९॥

English :- Then the king along with his family went to meet the honourable ascetic, with feelings of veneration and bliss. Having paid obiesance to the ascetic and acknowledging the ascetic's four treasures of knowledge, asked him about the reason for all these interuptions.

Note : 1) *Matigyan* - Knowledge received through the five senses and the mind.
2) *Shrutgyan* - Knowledge received by the sense of sight and hearing.
3) *Avdhigyan* - Knowledge received without the use of the five senses.
4) *ManParyavGyan* - The ability to read the mind of any living being.

गुरवो मनसा सीमन्धरस्वामिजिनं ततः ॥
नत्वाऽप्राक्षुरथ स्वाम्यप्यूचे तन्मनसाऽखिलम् ॥४०॥

अन्वयः- ततः गुरवः मनसा सीमन्धरस्वामिजिनं नत्वा अप्राक्षुः। अथ स्वामी अपि तद् अखिलं मनसा ऊचे ॥४०॥

विवरणम्:- *ततः तदनन्तरं गुरवः श्रीयुगन्धरसूरयः मनसा हृदा सीमन्धरस्वामी एव जिनः सीमन्धरस्वामिजिनः, तं सीमन्धरस्वामिजिनं नत्वा वन्दित्वा अप्राक्षुः अपृच्छन्। अथ अनन्तं स्वामी सीमन्धरजिनेश्वरः अपि तद् अखिलं सर्वं मनसा एव ऊचे अवोचत् ॥४०॥*

सरलार्थः- तदनन्तरं गुरवः श्रीयुगन्धरसूरयः मनसा सीमन्धरजिनं नत्वा अपृच्छन्। अनन्तरं स्वामी सीमन्धरजिनः अपि तत्सर्वं मनसा अवोचत् ॥४०॥

ગુજરાતી :- ત્યાર પછી ગુરુમહારાજે મન વડે શ્રીસીમંધર જિનેન્દ્રને નમીને પૂછ્યું, ત્યારે શ્રીસીમંધરસ્વામીએ મનથી જ સર્વ વૃત્તાન્ત કહ્યું. ॥૪૦॥

हिन्दी :- उसके बाद गुरुमहाराज ने मन से श्रीसीमन्धरजिनेन्द्र को प्रणाम कर के पूछा तब उन्होंने मनसे ही सब वृत्तान्त का निवेदन किया ॥४०॥

मराठी :- नंतर गुरुमहाराजांनी मनातच श्री सिमन्धरजिनेन्द्रांना नमस्कार करून (ते) विचारले, तेव्हा (त्यांनी) मनानेच सगळा वृत्तांन्त निवेदन केला.॥४०॥

English :- At this the Ascetic bowed down to Lord Simandhar Jinendra intellectually and asked the Lord about King Nabhak's grievances. The ascetic too received the answer intellectually.

**मनःपर्यायतो ज्ञानात् श्रीयुगन्धरसूरयः ।**
**सम्यग् विज्ञाय वृत्तान्तं तं जगुर्भूपतिं प्रति ॥४१॥**

अन्वयः- श्रीयुगन्धरसूरयः मनपर्यायतः ज्ञानात् तं वृत्तान्तं सम्यक् विज्ञाय भूपतिं प्रति जगुः ॥४१॥

*विवरणम्:- श्रीयुगन्धरसूरयः मनःपर्यायात् ज्ञानात् तं वृत्तान्तं सम्यक् सुष्ठुतया विज्ञाय विवित्वा भुवः पतिः भूपतिः तं भूपतिं नृपं प्रति जगुः जगदुः ॥४१॥*

सरलार्थ;- श्रीयुगन्धरसूरिभिः मनःपर्यायज्ञानेन सः अखिलः वृत्तान्तः सम्यक्तया विज्ञातः। भूपतये च कथितः ॥४१॥

ગુજરાતી :- શ્રી યુગન્ધરાચાર્યે મનઃપર્યવજ્ઞાનથી સર્વ વૃત્તાન્ત સમ્યક પ્રકારે જાણીને રાજાને જણાવ્યું કે ॥૪૧॥

हिन्दी :- तब श्री युगन्धराचार्य महाराजने "मनःपर्यवज्ञान" से सब वृत्तान्त जानकर राजा को बताया,॥४१॥

मराठी :- तेव्हा श्री युगन्धराचार्य मुनीने "अंतर्ज्ञानाने" सगळा वृत्तान्त सम्यक् रीत्या जाणून राजाला सांगितले,॥४१॥

English:- Then Shri Yugandharacharya narrated the whole event, when he received the narration through his *Man Paryav Gyan*.
Note - *Man Paryav Gyan* is one of the four *gyans*, in which one attains the ability to read the mind of any livingbeing.

राजन्! सुखेषु दुःखेषु, मुख्यं कर्मैव कारणम् ।
तच्चार्जितमं त्वया पूर्वं यथा मूलात् तथा शृणु ॥४२॥

अन्वयः:- हे राजन्! सुखेषु दुःखेषु कर्म एव मुख्यं कारणमस्ति तत् च त्वया पूर्वं यथा अर्जितं तथा मूलात् शृणु ॥४२॥

*विवरणम्:- हे राजन्! सुखेषु दुःखेषु च कर्म एव मुख्यं प्रधानं कारणं अस्ति। कर्मानुसारेण एव नरः सुखानि दुःखानि वा लभते। तच्च सुखदुःखानुबन्धि कर्म त्वया पूर्वं पूर्वभवे यथा येन प्रकारेण अर्जितं तथा मूलात् मूलमारभ्य शृणु आकर्णय ॥४२॥*

सरलार्थः:- हे राजन्! सुखेषु दुःखेषु च कर्म एव मुख्यं कारणं भवति। तत्त्वया पूर्वभवे यथा उपार्जितं तथा मूलादारभ्य आदितः शृणु ।

ગુજરાતી :- હે રાજન ! સુખ અને દુઃખ એ બન્ને પ્રસંગોમાં દરેક પ્રાણી માટે મુખ્ય કારણ કર્મ જ છે, અને તેં પૂર્વ ભવમાં જે કર્મ કર્યાં તે અથથી ઇતિ પર્યંત સાંભળ. ॥૪૨॥

हिन्दी :- "हे राजन्! सुख और दुःख दोनों प्रसंगो के मुख्य कारण हर एक प्राणीओं नें किये हुऐ कर्म ही है और तूने पूर्वजन्म में जो कर्म उपार्जित किये हैं उसका विवरण शुरु से अन्त तक ध्यान से सुन॥४२॥"

मराठी :- "हे राजा! सुख आणि दुःख दोंन्ही प्रसंगाचे मुख्य कारण म्हणजे प्रत्येक प्राण्याने केलेले कर्म हेच आहे. आता पूर्वजन्मी तू जे 'कर्म' उपार्जन केले आहे. त्याचा अहवाल सुरुवातीपासून शेवटपर्यंत सविस्तर माझ्याकडून ऐक."॥४२॥

English :- The ascetic says that the main root couse of us being remorseful or gay is because of our past meritable or demeritable deeds we have committed. He then asks the king to give a ear to the minute description on what he has aquired from his past deeds.

एकोनविंशत्यम्भोधि - कोटाकोटिप्रमाणत: ।
कालात् परमतीतायां, चतु:संयुतविंशतौ ॥४३॥
जम्बूद्वीपस्य भरते, सम्प्रतिस्वामियारके ।
उपाम्भोधि तामलिप्ती-नगर्यां भ्रातरावुभौ ॥४४॥
समुद्र - सिंहो ज्येष्ठस्तु, निर्मल: पुण्यवानृजु:
विपर्यस्त: कनिष्ठश्च, बदरीकण्टकाविव ॥४५॥(त्रिभि: कुलकम् ।)

अन्वय:- (श्लोक४३) एकोनविंशत्यम्भोधि - कोटाकोटिप्रमाणत: कालात् परं अतीतायां चतु:संयुत्तविंशतौ.

(श्लोक-४४) जम्बूद्वीपस्य भरते सम्प्रतिस्वामियारके उपाम्भोधि तामलिप्तीनगर्यां उभौ भ्रातरौ.

(श्लोक-४५) समुद्र - सिंहौ अभूतां । किन्तु ज्येष्ठ: निर्मल: पुण्यवान् ऋजु: अभूत् । कनिष्ठ:श्च विपरीत: अभवत् । एवं तौ बदरीकण्टकाविव आस्ताम् ॥४५॥

विवरणम्:- *(श्लोक-४३) एकोनविंशति - अम्भोधि-सागरकोटाकोटि: प्रमाणं यस्य स: एकोनविंशत्यम्भोधिकोटाकोटिप्रमाण: तस्मात् एकोनविंशत्यम्भोधि कोटाकोटिप्रमाणत: कालात् एकोनविंशतिकोटाकोटिसागरप्रमाणात् कालात् परं (पूर्वं) अतीतायां चतुर्भि: संयुता विंशति: चतु:संयुतविंशति: तस्यां चतु:संयुतविंशतौ चतुर्विंशतौ ॥४३॥*

*(श्लोक-४४) जम्बूद्वीपस्य भरते क्षेत्रे सम्प्रतिस्वामिन: यारके अम्भोधे: समुद्रस्य समीपे उपाम्भोधि समुद्रसमीपे तामलिप्ती नाम नगरी, तस्यां तामलिप्तीनगर्यां उभौ द्वौ भ्रातरौ ॥४४॥*

*(श्लोक-४५) समुद्रश्च सिंहश्च समुद्रसिंहौ समुद्रसिंहनामानौ अभूताम्। किन्तु तयो: ज्येष्ठ: समुद्र: निर्गत: मल: यस्मात् स: निर्मल: निर्मलचरित: पुण्यमस्यास्तीति पुण्यवान्, ऋजु: सरल:च आसीत्। कनिष्ठ: सिंह:च विपर्यस्त: दुराचार:, पापी, क्रूरहृदयश्च अभवत्। एवम् तौ उभौ बदर्या:कण्टकौ बदरीकण्टकौ इव आस्ताम्। यथा बदर्या: कश्चित् कण्टक: सरल: कश्चित् च वक्र: भवति। तथा ज्येष्ठ: समुद्र: सरल:, कनिष्ठ: सिंह: च वक्र: अभवत् ॥४५॥*

ગુજરાતી :- ઓગણીસ કોડાકોડી સાગરોપમ કાળ પહેલા, અતીત ચોવીશીમાં, જમ્બૂદ્વીપના ભરતક્ષેત્રમાં સંપ્રતિ સ્વામી નામના તીર્થંકરના આરામાં, સમુદ્રતટ સમીપે, તામલિપ્તી નગરીમાં, સમુદ્ર અને સિંહ નામના બે ભાઈઓ રહેતા હતા. તેઓમાં મોટો ભાઈ સમુદ્ર નિર્મળ ચારિત્રવાળો પુણ્યવાન્ અને સરળ હૃદયી હતો, પણ નાનો ભાઈ દુષ્ટ આચરણવાળો મહાપાપી અને ક્રૂર હૃદયી હતો. જેમ બોરડીના કાંટાઓ પૈકી કોઈ વક્ર અને કોઈ સીધો હોય તેમ. ॥૪૩-૪૪-૪૫॥

हिन्दी :- उन्नीस कोटाकोटि सागरोपमकाल के पहले अतीत चौबीसी में जम्बूद्वीप के भरतक्षेत्र में, "सम्प्रति स्वामी" नाम के तीर्थंकर के समय में, समुद्रतट के नजदीक तामलिमी नाम की नगरी में समुद्र और सिंह नामक दो भाई रहते थे। जैसे एक ही बेरी के दो कांटो में से कोई सीधा तो कोई टेढा होता है ठीक वैसे ही, उनमें से बडा भाई समुद्र निर्मल चरित्रवाला, पुण्यवान् और सरल स्वभाव का था, लेकिन छोटा भाई 'सिंह' दुष्ट आचरणवाला, महापापी और क्रूर हृदयवाला था।

मराठी :- एकोणीस कोटाकोटि सागरोपम काळापूर्वी व्यतीत झालेल्या चौवीसीमध्ये जम्बूद्वीपाच्या भरतक्षेत्रात 'सम्प्रति स्वामी' नावाच्या तीर्थंकराच्या समकालीन समुद्रकिनाऱ्याजवळ, तामलिप्ती नावाची नगरीमध्ये समुद्र आणि सिंह नावाचे दोन भाऊ राहात होते. जसे बोराच्या झाडांचे दोन कांटे यामध्ये एक सरळ आणि दुसरा वाकडा, तसेच या दोघांमध्ये मोठा भाऊ 'समुद्र' निर्मळचरित्र असणारा, पुण्यशाली आणि सरळ स्वभावाचा होता, तर धाकटा भाऊ 'सिंह' वाईट आचरणाचा, महापापी आणि क्रूर हृदयाचा होता.

English :- Long Long ago nineteen trillion sagaropam, (sea-measurement) (countless of years ago) during the reign of the previous twenty four Tirthankars in Jambudueep's Bharatschetra and during the period of Lord Samprati, on the banks of a river there was a city named Tamlipti that blossomed two brothers, the elder Samudra and the younger Sihe, who were like thorns of the same tree, one crooked and the other straight. Samudra was kind hearted and had a genuine conduct, while his younger brother Sihe, had a villainous heart going hand in hand with his character.

भुवं खनद्भ्यान्ताभ्यां स्व-गृहे स्थूणार्थमन्यदा ॥
चतुर्विंशतिदीनार - सहस्रनिधिराप्यत ॥४६॥

अन्वय:- अन्यदा स्वगृहे स्थूणार्थं भुवं खनद्भ्यां ताभ्यां चतुर्विंशतिदीनारसहस्रनिधि: आप्यत ॥४६॥

विवरणम्:- *अन्यदा एकस्मिन् दिवसे स्वस्य गृहं सदनं स्वगृहं तस्मिन् स्वगृहे स्वसदने स्थूणार्थं स्तम्भार्थं भुं भूमिं खनद्भ्यां ताभ्यां समुद्रसिंहाभ्यां चतुरधिका विंशति: चतुर्विंशति:दीनारसहस्राणि चतुर्विंशतिदीनारसहस्राणि। चतुर्विंशतिदीनारसहस्राणां निधि: निधानं इति चतुर्विंशतिदीनारसहस्रनिधि: चतुर्विंशतिसुवर्णमुद्रासहस्रनिधानं आप्यत प्राप्यत ॥४६॥*

सरलार्थ:- एकस्मिन् दिने स्तम्भार्थं स्वगृहे भूमिं खनद्भ्यां ताभ्यां समुद्रसिंहाभ्यां चतुर्विंशतिसहस्रदीनाराणां निधि: प्राप्यत ॥४६॥

ગુજરાતી :- તે બન્નેએ એક દિવસ પોતાના ઘરની અંદર થાંભલો નાખવા માટે જમીન ખોદતાં ચોવીશ હજાર સોનામહોરથી ભરેલો નિધિ (ઘડો) તેમને પ્રાપ્ત થયો. ॥૪૬॥

हिन्दी :- उन दोनों को एक दिन घर के अंदर खंभा गाडने के लिये जमीन खोदते हुए, चौबीस हजार सोनामोहरों से भरा हुआ घडा प्राप्त हुआ ॥४६॥

मराठी :- त्या दोघांना एकेदिवशी घरात खांब (स्तंभ) उभा करण्यासाठी माती खणत असतांना चोवीस हजार सोनामहोरांनी भरलेला एक हंडा सापडला ॥४६॥

English :- One day, they dug a hole in the ground, in order to install a beam. They were dazzled to find a big earthern pot, filled with twenty four thousand gold coins.

देवद्रव्यमिदं नाग - गोष्ठिकेन निधीकृतम्॥
इत्युक्तिगर्भं पत्रं च ज्येष्ठो दृष्ट्वेत्यभाषत ॥४७॥

अन्वय:-नागगोष्ठिकेन इदं देवद्रव्यं निधीकृतं अस्ति। इति उक्तिगर्भं पत्रं दृष्ट्वा ज्येष्ठ: इति अभाषत ॥४७॥

विवरणम्:- *नागगोष्ठिकेन इदम् देवद्रव्यं न निधि: अनिधि:। अनिधि: निधि: कृतं निधीकृतं स्थापितं अस्ति। इति उक्ति: वचनं*

*गर्भे यस्य तत् उक्तिगर्भं वचनयुतं पत्रं तेन निधिना साकं दृष्ट्वा ज्येष्ठः समुद्रः इति वक्ष्यमाणरूपं वचनं अभाषत अवदत् ॥४७॥*

सरलार्थः- नागगोष्ठिकेन इदं देवद्रव्यं निधीकृत्य - भूमौ स्थापितमस्ति। इति उक्तिगर्भं वचनयुतं पत्रं तेन निधिना साकं दृष्ट्वा ज्येष्ठः समुद्रः इति वक्ष्यमाणरूपं वचनमब्रवीत् ॥४७॥

ગુજરાતી :- તથા તેની સાથે એક પત્ર નીકળ્યો. તેમા આ પ્રમાણે લખ્યું હતું કે - 'આ ધન નાગ નામના કુટુંબે દેવદ્રવ્ય તરીકે દાટયું છે.' એ પત્ર વાંચીને જ્યેષ્ઠ ભ્રાતા સમુદ્રે પોતાનો અભિપ્રાય જાહેર કર્યો કે ॥૪૭॥

हिन्दी :- और उसके साथ एक खत निकला, उसमें ऐसा लिखा था कि, "यह खजाना नाग नाम के कुटुम्ब ने देवद्रव्य के रूप में गाढा है।" इसप्रकार के पत्र को पढकर बडे भाई समुद्रने अपना अभिप्राय दिया कि,॥४७॥

मराठी :- आणि त्याच्यासोबत एक पत्र ही मिळाले. त्यामध्ये असे लिहिले होते की, हे 'देवद्रव्य' आहे. नाग नावाच्या कुटुंब प्रमुखाने जमिनीत खजिन्याच्या रूपाने गाडून ठेवले आहे. हे पत्र वाचून मोठा भाऊ समुद्र असे म्हणाला की,॥४७॥

English :- They also found a letter along with the pot which said that, the pot belonged to a certain family named Nag, who had buried the pot as a treasure and it was labelled as God's money (Dev-dravya). At this the elder brother Samudra bought out his tenet (opinion).

**गत्वा शत्रुञ्जये नाग-श्रेयसे दीयते ह्यदः ॥**
**श्रुत्वेति जायया नुन्नः कनीयानित्यवोचत ॥४८॥**

अन्वयः- शत्रुञ्जयं गत्वा अदः नागश्रेयसे दीयते। इति श्रुत्वा जायया नुन्नः कनीयान् इति अवोचत् ॥४८॥

*विवरणम्:- शत्रुञ्जये तीर्थे गत्वा अदः देवद्रव्यमंनागस्य नागगोष्ठिकस्य श्रेयः नागश्रेयः तस्मै नागश्रेयसे नागकल्याणाय दीयते। इति एवं वचनं श्रुत्वा जायया भार्यया नुन्नः प्रेरितः कनीयान् भ्राता सिंह इति वक्ष्यमाणम् अवोचत अब्रवीत् ॥४८॥*

सरलार्थ:- इदं देवद्रव्यं शत्रुञ्जयतीर्थं गत्वा नागगोष्ठिकस्य श्रेयोऽर्थं दीयते। इत्येवं वचनं श्रुत्वा भार्यया प्रेरित: कनीयान् भ्राता सिंह: इति अवदत् ॥४८॥

ગુજરાતી :- 'શત્રુંજયમાં જઈને નાગગોષ્ઠિકના પુણ્યને માટે આ નીકળેલ દેવદ્રવ્ય આપીએ', એ પ્રમાણે મોટા ભાઈનું વચન સાંભળી પોતાની સ્રીથી પ્રેરાયેલો નાનો ભાઈ સિંહ બોલ્યો કે, ॥૪૮॥

हिन्दी :- "शत्रुंजय जाकर नागगोष्ठिक के कल्याण के लिये यह निकला हुआ धन दे दें।" लेकिन बड़े भाई का यह वचन सुनते ही अपनी स्त्री के द्वारा उकसाया हुआ छोटा भाई सिंह जोश में आकर बोला.॥४८॥

मराठी :- शत्रुंजयतीर्थात जाऊन नागगोष्ठिकाच्या कल्याणासाठी हे धन देऊन यावे. तोच मोठ्या भावांचे हे शब्द ऐकून आपल्या पत्नीच्या म्हणण्यांत आलेला लहान भाऊ सिंह आवेशाने म्हणाला,॥४८॥

English :- He said that, they should go to the mount Satrunjay and declare about the wealth, for the welfare of the Nag family. But his younger brother overcome with effervescence (zeal) and instigated by his wife, was not for his brothers opinion.

**कन्या वरार्हा जाताऽसौ, परं नोद्वाहिता पुरा।**
**धनं विनाऽथ तत्प्राप्तौ, सोत्सवेन विवाह्यते ॥४९॥**

अन्वय:- असौ कन्या वरार्हा जाता। परं पुरा धनं विना न उद्वाहिता अथ तत्प्राप्तौ सा उत्सवेन विवाह्यते ॥४९॥

विवरणम्:- असौ कन्या वरमर्हति इति वरार्हा उपवरा विवाहयोग्या जाता अभवत्। परम् पुरा धनं विना धनाभावात् न उद्वाहिता न परिणायिता। अथ इदानीं तस्य धनस्य प्राप्ति: लाभ: तत्प्राप्ति: तस्यां तत्प्राप्तौ धनलाभे सति सा उत्सवेन महोत्सव विवाह्यते परिणाय्यते ॥४९॥

सरलार्थ:- असौ कन्या विवाहयोग्या वरार्हा वर्तते। पुरा धनाभावात् सा न उद्वाहिता। इदानीं धनप्राप्ति: सञ्जाता। अत: सा महोत्सवेन विवाह्यते ॥४९॥

विवाह्यते ॥४९॥

ગુજરાતી:- આ કન્યા વરને યોગ્ય થઈ છે, પરંતુ અત્યાર સુધી ધન વિના તેનું લગ્ન કર્યું નથી, પણ હવે ધનની પ્રાપ્તિ થવાથી તેનો મહોત્સવપૂર્વક વિવાહ કરીએ'॥૪૯॥

हिन्दी :- "यह कन्या विवाह के योग्य हो गई है, लेकिन अभी तक उसकी शादी नहीं हो सकी। लेकिन अब धन प्राप्त हो जाने से बडी धूमधाम से उसकी शादी करें।"॥४९॥

मराठी :- "ही कन्या लग्नाच्या योग्य झाली आहे तरी आजपर्यंत तिचे लग्न होऊ शकले नाही. पण आता अनायासे इतके धन मिळाल्याने आपण मोठ्या थाटाने तिचे लग्न करू."

English :- He said that the girl has come of age and has been riped to get married. So they should wed her off, with great pomp and style, with the new found wealth.

दध्यौ समुद्रः श्रुत्वेति, स्वभावाद् दुष्टधीरसौ।
भार्यया प्रेरितो जातो, वात्येरितकृशानुवत् ॥५०॥

अन्वयः:- इति श्रुत्वा समुद्रः दध्यौ। असौ स्वभावात् एव दुष्टधीः अस्ति। भार्यया प्रेरितः वात्येरितकृशानुवत् जातः ॥५०॥

*विवरणम्:- इति एवम् सिंहवचनं श्रुत्वा समुद्रः दध्यौ चिन्तयामास। असौ सिंहः स्वभावात् एव जन्मनः प्रभृति एव दुष्टा धीः यस्य सः दुष्टधीः दुर्बुद्धिः अस्ति। भार्यया पत्न्या प्रेरितः नुन्नः वातानां समूहः वात्या। वात्यया प्रेरितः वात्याप्रेरितः। वात्याप्रेरितश्चासौ कृशानुः अग्निःच वात्याप्रेरितकृशानुः वातसमूहेन प्रेरिताग्निः इव जातः। यथा वात्याप्रेरितः अग्निः वृद्धिं गच्छति तथा भार्यया प्रेरितस्यास्य दुष्टबुद्धिः भृशमवर्धत ॥५०॥*

सरलार्थ:- इति सिंहवचनं श्रुत्वा समुद्रः दध्यौ। असौ स्वभावात् एव दुष्टः अस्ति। भार्यायाः प्रेरणया च अयं वात्यया प्रेरितः कृशानुः (अग्निः) यथा वर्धते तथा अधिकदुष्टधीः जातः। इति ॥५०॥

ગુજરાતી :- આવું નાના ભાઈનું અયોગ્ય કથન સાંભળી સમુદ્રે વિચાર કર્યો કે "આ સ્વભાવથી જ દુષ્ટ બુદ્ધિવાળો છે, અને હમણાં વળી સ્રીની પ્રેરણાની જેમ પવનના સુસવાટથી અગ્નિની વૃદ્ધિ થાય તેમ આની પણ દુષ્ટબુદ્ધિ અધિક વૃદ્ધિ પામી છે, ખરેખર દુનિયામાં સ્રીઓએ મહાન મહર્ષિઓને પણ પોતાના મનોહર તીવ્ર કટાક્ષ, વાગ્બાણોથી પોતાને વશ કરી લીધા છે, તો પછી આના જેવો એક સામાન્ય મનુષ્ય તેની આગળ શું કરી શકે ?" ॥૫૦॥

हिन्दी :- छोटेभाई का ऐसा अयोग्य वचन सुनकर समुद्र सोचने लगा कि, "यह स्वभाव से ही दुष्ट बुद्धिवाला है, तदुपरांत उसकी स्री के, बहकाने से जैसे पवन के झोके से आग भडकती है वैसे उसकी दुर्बुद्धि बढ़ गई है (सचमुच दुनियामें स्रियो ने बडे बडे ऋषियों को भी अपने तीव्र कटाक्ष और वाग्बाणों से अपने बस में कर लिया है, तो फिर इस के जैसे मामुली इन्सान की क्या मजाल?)"॥५०॥

मराठी :- असे धाकटे भावाचे अयोग्य म्हणणे ऐकून समुद्र विचार करू लागला, "एक तर हा स्वभावानेच दुष्टबुद्धीचा असून त्यात भर टाकण्याकरिता त्याच्या पत्नीने त्याला प्रेरणा दिली ते तर असेच झाले जसे वाऱ्याच्या झुळकीने विस्तव अधिक पेटतो. (खरं आहे की जेव्हा स्रियांनी मोठ्या मोठ्या मुनींना सुद्धा आपल्या कटाक्षाने तसेंच वाग्बाणाने स्वतःच्या अधीन करून घेतले, तर या सामान्य माणसाची काय कथा?)॥५०॥

English : Samudra was shooked to hear such words from his brother but he pacified himself saying that his brother had a vicious heart, from the very begining and he had been instigated by his wife, just to blow a little more wind, to start a confagration. Even the great ascetic had to deposit their virginity, into the passionate eyes and the charm of a damsel, then where does an ordinary man, as his brother stand.

**सुवंशजोऽप्यकृत्यानि कुरुते प्रेरितः स्त्रिया ।**
**स्नेहलं दधि मथ्नाति पश्य मन्थानको न किम् ॥५१॥**

अन्वयः:- स्त्रिया प्रेरितः सुवंशजः अपि अकृत्यानि कुरुते । पश्य स्त्रिया प्रेरितः सुवंशजः अपि मन्थानकः स्नेहलं दधि न मथ्नाति किम्?॥५१॥

विवरणम्:- स्त्रिया नार्या प्रेरितः नुन्नः शोभनश्चासौ वंशश्च सुवंशः। सुवंशे जायते इति सुवंशजः सुकुलजन्मा अपि कर्तुमयोग्यानि अकृत्यानि गर्ह्याणि कार्याणि करोति। पश्य। स्त्रिया प्रेरितः शोभनश्चासौ वंशः वेणुःच सुवंशः। सुवंशात् जायतेऽसौ सुवंशजः सुवेणुजातः अपि मन्थानकः मन्थनदण्डः स्नेहलं स्नेहयुक्तं दधि न मथ्नाति किम्? अर्थात् मथ्नात्येवा यथा सुवंशजः मन्थानकः स्नेहलं दधि मथ्नाति तथा स्त्रिया प्रेरितः सुवंशजः सुकुलजः अपि नरः अकृत्यानि कुरुते ॥५१॥

सरलार्थः:- स्त्रिया प्रेरितः सुवंशजः सुकुलजः अपि नरः अकृत्यानि कुरुते। यथा सुवंशजः अपि सुवेणुजः मन्थनदण्डः स्नेहलं दधि मथ्नाति ॥

ગુજરાતી:- ઉચ્ચ કુળમાં જન્મ પામેલ પુરુષ પણ સ્ત્રી વડે પ્રેરાયેલા નહીં આચરવા યોગ્ય અકૃત્યનું આચરણ કરે છે, કારણ કે સુવંશથી થયેલો - સારા વાંસથી બનેલો રવૈયો સ્ત્રી વડે પ્રેરાયેલો હોવાથી સ્નેહવાળા ચિકાશદાર દહીંનું મંથન કરતો નથી ? અર્થાત્ કરે જ છે. ॥૫૧॥

हिन्दी :- उच्चे कुल में जन्म पाया हुआ पुरुष भी स्त्री से प्रेरित होकर नहीं करने योग्य दुष्कृत्य का भी आचरण करता है। सुवंश में पैदा हुआ बांस से बना हुआ (रवैया) भी क्या स्त्री से प्रेरित होकर स्नेहयुक्त (चिकने) दही को मथता नहीं है? अर्थात अवश्य मथता है॥५१॥

मराठी :- उच्च कुळांमध्ये जन्माला आलेला मनुष्य सुद्धा स्त्रियांकडून प्रेरित होऊन न करण्यासारखे पुष्कळ से अकृत्य करतो. चांगल्या बांबुतून बनलेली रवि पण स्त्री ने प्रेरित होऊन स्नेहयुक्त (चिकट) दह्याचे मंथन करीत नाही काय ? अर्थात अवश्य करते.॥५१॥

English :- Even a man from distinguished pedigree's, fall from their heights, when they lose their self-respect by indulging in improper and passionate deeds with women, just as a churning rod, that has been made out of the best of bamboo's, falls for the girl and churns the viscid curds into buttermilk, does'nt it?

**देवद्रव्योपयोगेन घोरां यास्यति दुर्गतिम् ।**
**ततो बन्धुरयं बन्धुरया बोध्यो गिरा मया ॥५२॥**

अन्वयः- अयं बन्धुः देवद्रव्योपयोगेन घोरां दुर्गतिं यास्यति। ततः मया अयं बन्धुरया गिरा बोध्यः ॥५२॥

विवरणम्:- *अयं मम बन्धुः भ्राता देवस्य द्रव्यं देवद्रव्यम्। देवद्रव्यस्य उपयोगः देवद्रव्योपयोगः तेन देवद्रव्योपयोगेन घोरां भीषणां दुष्टागतिः दुर्गतिः तां दुर्गतिं यास्यति गमिष्यति। ततः तस्मात् कारणात् मया अयं बन्धुरया सुन्दरया कोमलया गिरा बोध्यः बोधनीयः ॥५२॥*

सरलार्थः- अयं मम बन्धुः देवद्रव्यस्य उपयोगेन घोरां दुर्गतिं गमिष्यति। तस्मात् मया अयं मधुरया वाण्या बोधनीयः ॥५२॥

ગુજરાતી :- આ મારો ભાઈ, જો સ્ત્રીના કથન મુજબ દેવદ્રવ્યનો ઉપયોગ કરશે, તો અત્યંત ભયંકર નરકાદિ દુર્ગતિમાં જશે, માટે આને મારે મૃદુ અને શ્રેષ્ઠ વાણીથી પ્રતિબોધિતય કરવો જોઈએ. ॥૫૨॥

हिन्दी :- यह मेरा भाई, यदि स्त्री के कहे अनुसार इस देवद्रव्य का उपयोग करेगा तो अत्यंत भयंकर नरकादि दुर्गति में जायेगा, इसलिये मुझे इसे मृदु और श्रेष्ठ वाणी में समझाना चाहिये॥५२॥

मराठी :- हा माझा भाऊ जर स्त्रीच्या म्हणण्यानुसार देवद्रव्याचा उपयोग करील तर नक्कीच नरकादि दुर्गतिमध्ये जाईल, म्हणून मला त्याला मृदु आणि श्रेष्ठ वाणीमध्ये बोध केला पाहिजे.॥५२॥

English :- So he decides that he should explain to his brother, (who is being impelled by his wife) in a tender and a soft tone about the perils of hell and its other agonies, if he utilizes Gods money for his personal desires.

**निश्चित्येत्यवदद् भ्रातः। पातकात् श्वभ्रपातुकात् ।**
**न किं बिभेषि यद्देवद्रव्यभोगमपीच्छसि ॥५३॥**

अन्वयः:- इति निश्चित्य सः अवदत् - भ्रातः! त्वं श्वभ्रपातुकात् पातकात् न बिभेषि किम्! यद् देवद्रव्यभोगमपि इच्छसि ॥५३॥

विवरणम्:- *इति एवमुपर्युक्तं निश्चित्य सः समुद्रः अवदत् अवोचत् हे भ्रातः! त्वं श्वभ्रे नरके पातयतीति पातुकं, तस्मात् श्वभ्रपातुकात् नरकपातुकात् पातकात् पापात् न बिभेषि किम्? यद् त्वं देवद्रव्यस्य अपि भोगं इच्छसि अभिलषसि ॥५३॥*

सरलार्थ:- इति अनन्तरोक्तं निश्चित्य स समुद्रः अवदत् - हे भ्रातः! त्वं नरकपातनसमर्थात् पापात् न बिभेषि किम्? यद् देवद्रव्यस्यापि भोगम् कर्तुमिच्छसि ॥५३॥

ગુજરાતી :- એમ નિશ્ચય કરીને નાના ભાઈને કહ્યું કે - બન્ધુ! નરકાદિ ભયંકર ગતિમાં પાડનાર પાપથી શું તું ડરતો નથી? કે જેથી દેવદ્રવ્યના પણ ઉપભોગની ઈચ્છા કરે છે. ॥૫૩॥

हिन्दी :- ऐसा निश्चय कर के उसने छोटे भाई को कहा कि, "नरकादि भयंकर गति में गिरानेवाले पापसे भी क्या तू डरता नही है? कि जिससे तू देवद्रव्य का उपभोग करने की इच्छा करता है?"॥५३॥

मराठी :- असा निश्चय करून धाकट्या भावाला सांगितले, "नरकादि भयंकर गतिमध्ये ढकलणाऱ्या पापापासून सुध्दा तुला भीती वाटत नाही? की जेणे करून देवद्रव्याच्या उपभोगाची इच्छा करतोस?"॥५३॥

English:- Having decided thus, he asks his brother, whether he feels afraid or not to experience the agonies of hell for having cherished the thought, for using God's money for his own personal desires.

**देवद्रव्येण यत्सौख्यं, यत्सौख्यं परदारतः ।**
**अनन्तानन्तदुःखाय, तत्सौख्यं जायते ध्रुवम् ॥५४॥**

अन्वयः:- देवद्रव्येण यत् सौख्यं, परदारतः यत् सौख्यं तत् सौख्यंध्रुवम् अनन्तानन्तदुःखाय जायते भवति ॥५४॥

*विवरणम्:-* *नरः देवस्य द्रव्येण देवद्रव्येण देवद्रव्योपभोगेन यत् सुखमेव सौख्यं मन्यते। परस्य दाराः परदाराः तेभ्य परदारतः परस्त्रीभोगात् यत् सौख्यं सुखम् अनुभवति। तत् सौख्यं ध्रुवं निश्चितं, न विद्यते अन्तः यस्य तद् अनन्तं। अनन्तानन्तंच तद् दुःखश्च अनन्तानन्तदुःखं, तस्मै अनन्तानन्तदुःखाय कल्पते ॥५४॥*

सरलार्थ:- नरः देवद्रव्यस्य उपभोगेन यत्सुखं मन्यते। परदारोपभोगेन च यत्सुखमनुभवति। तत्सुखं ध्रुवं अनन्तानन्तदुःखाय कल्पते ॥५४॥

ગુજરાતી:- જે મનુષ્ય દેવદ્રવ્યના ઉપભોગ વડે, તેમજ પરસ્ત્રી સેવન દ્વારા જે મનનું માની લીધેલ સુખ મેળવે છે તે સુખ નિઃશંક અનંતાનંત દુઃખ પ્રાપ્ત કરાવનાર થાય છે. ॥૫૪॥

हिन्दी :- जो आदमी देवद्रव्य के उपभोग द्वारा, वैसे ही परस्त्री सेवन द्वारा मन का मान लिया (मनमाना) हुआ सुख प्राप्त करता है वह सुख निसंदेह अनंतानंत दुःखदायक होता है॥५४॥

मराठी :- जो मनुष्य देवद्रव्याच्या उपभोगात तसेच परस्त्रीसेवनात सुख आहे. असे समजतो ते सुख निःसंशय त्याला अनंतानंत दुःख देणारे ठरते.॥५४॥

English :- The man who believes that by utilzing God's money or by committing adultery, he attains utmost bliss, then he is carressing a wrong notion, as these two achievements are bound to bestow on him eternal sorrows and uncountable agonies.

चेत्यद्रव्यविणासे रिसिधए पवयणस्य उड्डाहे ॥
सञ्जयिचउत्थभङ्गे मूलग्गी बोहिलाभस्स ॥५५॥
चैत्यद्रव्यविनाशे ऋषिघाते प्रवचनस्य उद्घाते ।
सम्यतिचतुर्थभंङ्गे मूलेऽग्निर्बोधिलाभस्य ॥५५॥

अन्वय:- चैत्यद्रव्यविनाशे ऋषिघाते प्रवचनस्य उद्घाते संयतिचतुर्थभङ्गे बोधिलाभस्य मूले अग्निः पतति ॥५५॥

विवरणम्:- चैत्यस्य मन्दिरस्य द्रव्यं चैत्यद्रव्यम् । चैत्यद्रव्यस्य विनाशः तस्मिन् चैत्यद्रव्यविनाशे, ऋषेः मुनेः घातः, तस्मिन् ऋषिघाते मुनिघाते, प्रवचनस्य शास्त्रस्य उद्घाते विरुद्धप्ररूपणे, सम्यतेः साधोः चतुर्थव्रतस्य ब्रह्मचर्यस्य भङ्गः, विनाशः तस्मिन् सम्यतिचतुर्थभङ्गे साधोः ब्रह्मचर्यविनाशे च कृते सति बोधेः लाभः बोधिलाभः,तस्य बोधिलाभस्यः सम्यक्त्वस्य मूले एव अग्निः, पतति सम्यक्त्वं विनश्यतीत्यर्थः ॥५५॥

सरलार्थः- चैत्यद्रव्यस्य विनाशे, ऋषेः घाते, शास्त्रविरुद्धप्ररूपणे, साधोः ब्रह्मचर्यव्रतस्य भङ्गे च कृते बोधिलाभस्य मूले एवाग्निः पतति। सम्यक्त्वं विनश्यति ॥५५॥

ગુજરાતી :- ચૈત્યના દ્રવ્યનો વિનાશ કરવાથી, ઋષિનો ઘાત કરવાથી, શાસ્ત્ર વિરુદ્ધ પ્રરુપણા કરવાથી, તેમજ સંયતિના ચતુર્થ વ્રતનો ભંગ કરવાથી, સમ્યક્ત્વના મૂળમાં જ અગ્નિ પડે છે, અર્થાત્ સમ્યક્ત્વ નાશ પામે છે. ॥૫૫॥

हिन्दी :- "जैन सिद्धान्त में भी कहते हैं कि चैत्य के द्रव्य का विनाश करने से, ऋषि की हत्या करने से, शास्त्रविरुद्ध प्ररुपणा करने से वैसे ही संयमशील साधु के चतुर्थ व्रत का भंग करने से सम्यक्त्व नष्ट हो जाता है।"॥५५॥

मराठी :- चैत्याच्या द्रव्याचा विनाश करण्याने, ऋषींचा घात करण्याने, शास्त्रविरूद्ध प्ररूपणा करण्याने तसेच संयमशील साधूच्या चतुर्थ व्रताचा भंग करण्याने सम्यक्त्वाच्या मुळांमध्येंच आग लागते अर्थात् सम्यक्त्व नष्ट होते.॥५५॥

English :- It is even said that the man who uses God's money, or murders a monk, or speaks against the teachings of the jain religion or the one who impells a restrained monk to break his fourth commandment, (ie-not to indulge in sexual affairs) will and is bound to forfeit his foresight to seperate the good from the bad.

**वरं सेवा वरं दास्यं, वरं भिक्षा वरं मृतिः ।**
**निदानं दीर्घदुःखानां, न तु देवस्वभक्षणम् ॥५६॥**

अन्वयः:- सेवा वरं दास्यं वरम्। भिक्षा वरम्। मृतिः वरम्। किन्तु सर्वदुःखानां निदानं देवस्वभक्षणंन वरम् ॥५६॥

विवरणम्:- *सेवा वरम्। कस्यापि सेवां कृत्वा जीविकाकरणं वरंश्रेष्ठम्। दासस्य भावः दास्यं दासता वरम्। कस्यापि दासत्वं किङ्करत्वं स्वीकृत्य उपजीवनं वरं श्रेष्ठम्। भिक्षा वरम्। भिक्षया आजीविकाकरणं वरं श्रेष्ठम्। परन्तु सर्वाणि च तानि दुःखानि च सर्वदुःखानि, तेषां सर्वदुःखानामाध्यात्मिकाधिदैविकाधिभौतिकानां सर्वेषां दुःखानां निदानं मूलकारणं देवस्वस्य देवद्रव्यस्य भक्षणं न वरम्। देवद्रव्यस्य भक्षणात् सेवया, दास्येन, भिक्षया वा उपजीविकाकरणं मरणं च वरं इत्यर्थः ॥५६॥*

सरलार्थः:- सेवया, दास्येन, भिक्षया च उपजीविकाकरणं वरं श्रेष्ठम्। अन्तेच बुभुक्षया मरणमपि वरम्। किन्तु सर्वेषां दुःखानामादिकारणं देवद्रव्यस्य भक्षणं न वरम् ॥५६॥

ગુજરાતી:- **કોઈની સેવા કરી આજીવિકા ચલાવવી શ્રેષ્ઠ છે, ચાકર થઈને રહેવું સારું છે, ભિક્ષા માગી ઉદરપોષણ કરવું ઉત્તમ છે, અને છેવટે ભૂખ્યા મરી જવું પડે તો તે પણ બહેતર છે, પણ સર્વ પ્રકારનાં દુ:ખોનું કારણ દેવદ્રવ્યનું ભક્ષણ કરવું તે બિલકુલ ઠીક નથી. ॥૫૬॥**

हिन्दी :- किसी की सेवा करके आजीविका चलाना श्रेष्ठ है। नौकर बनकर रहना अच्छा है, भिक्षा मांगकर उदर पोषण करना भी उत्तम है, और ज्यादा से ज्यादा भूखो मरना पडे तो वह भी बेहतर है लेकिन सभी दुःखों की एक ही जड देवद्रव्य का भक्षण करना बिलकुल ठीक नहीं है॥५६॥

मराठी :- कोणाची सेवा करून आजीविका चालविणे बरे आहे, नौकर बनून राहणे सुध्दा बरे आहे, भिक्षा मागून पोट भरणे सुध्दा चांगले आहे. पण सगळ्या प्रकारच्या दुःखांचे एकमात्र कारण ''देवद्रव्याचे'' भक्षण करणे हे बिलकुंल अयोग्य आहे.॥५६॥

English:- Its genuine to earn a living by serving someone or live as a servant or beg for alms or at the most, starve and die, but its blasphemous to devour God's money for one's own wants.

भ्रातुरित्युपदेशेन, मौनी सिंहस्तदोत्थितः ॥
एकान्ते भार्ययाऽभाणि, हा! मौग्ध्याद् वञ्च्यसे कथम् ॥५७॥
कपोलकल्पितैर्यद्वा को नाम न हि वञ्च्यते ॥
वरं यथा तथा सर्वमर्धं वाऽऽदत्स्व तन्निधिम् ॥५८॥

अन्वयः:- तदा भ्रातुः इति उपदेशेन मौनी सिंहः उत्थितः। एकान्ते भार्यया अभाणि हा! मौग्ध्यात् कथं वञ्च्यसे? ॥५७॥

अथवा कपोलकल्पितैः कः नाम न वञ्च्यते। परं यथा तथा सर्वं वा अर्धं वा तं निधिं आदत्स्व ॥५८॥

विवरणम्:- *तदा तस्मिन् समये भ्रातुः बन्धोः समुद्रस्य इति अनन्तरोक्तेन उपदेशेन मौनी मौनमस्यातीति मौनमास्थितः सिंहः तस्मात्स्थानात् उत्थितः। तदा भार्यया स एकान्ते अभाणि-हा! मुग्धस्य भावः मौग्ध्यं तस्मात् मौग्ध्यात् त्वं कथं वञ्च्यसे वञ्चनां प्राप्स्यसे! ॥५७॥*

*अथवा कपोलाभ्यां कल्पितानि कपोलकल्पितानि तैः कपोलकल्पितैः वचनैः कः न वञ्च्यते सर्वः एव वञ्च्यते। परं यथा तथा येन केनापि प्रकारेण त्वं तम् सर्वं निधिमादत्स्व गृहाण। अथवा अर्धं निधिं आदत्स्व गृहाण ॥५८॥*

सरलार्थः:- तदा भ्रातुः इति उपदेशं श्रुत्वा सिंहः मौनमास्थाय ततः उत्थितः। तदा एकान्ते भार्या तमवदत् - हा! त्वं मौग्ध्यात् कथं वञ्चनां प्राप्स्यसे? ॥५७॥

अथवा कपोलकल्पितैः वचनैःकः न वञ्च्यते? त्वं वञ्चनाविषयो मा भूः। येन केन प्रकारेण तं सर्वं निधिं आदत्स्व। सर्वनिधिप्राप्तिः असम्भवा चेत् अर्धं निधिमादत्स्व ॥५८॥

ગુજરાતી:- આ પ્રમાણે ભાઈનો ઉપદેશ સાંભળી મૌન રહેલો સિંહ ત્યાંથી ઊઠયો, એકાંતમાં તેની પત્નીએ કહ્યું કે, "તમે ભોળપણથી કેમ ઠગાઓ છો ? અથવા કપોળકલ્પિત વાતોથી કયો પુરુષ ન ઠગાય ? પરંતુ જેમ તેમ કરીને સર્વ નિધિ આપણે તાબે કરો, અથવા સંપૂર્ણ નિધિ ન આપે તો, છેવટે અરધું ધન પણ તમે ગ્રહણ કરો" ॥૫૮॥

हिन्दी :- इस तरह भाई का उपदेश सुनकर अभी तक मौन रहा सिंह वहाँ से उठकर चला गया तब उसको एकान्त में उसकी पत्नीने कहा, "तुम ऐसे भोलेपन से क्यो ठगे जा रहे हो? अथवा तो, ऐसी कपोलकल्पित बातों से कौनसा पुरुष नहीं ठगा जाता? तुम सिर्फ जैसे तैसे करके पूरा धन अपने कब्जेमे कर लो, यदि पूरा न दे तो कम से कम आधा निधि तुम प्राप्त करो।"॥५८॥

मराठी :- ह्याप्रमाणे भावाचा उपदेश ऐकून आतापर्यंत गप्प राहून ऐकत असलेला सिंह तेथून उठला तेव्हा त्याला एकान्तात त्याच्या पत्नीने म्हटले की, तुम्ही कशाला त्यांच्या भोळेपणामुळे फसता? किंवा अशा कपोलकल्पित गोष्टींनी कोणता मनुष्य नाही फसणार? तुम्ही जसे होईल तसे तो खजाना आपल्या ताब्यात घ्या. जर पूर्ण नाही मिळाला तरी शेवटी अर्धा तरी आपल्या साठी मागून घ्या."॥५८॥

English :- Sihe who was in taciturnity (silence) stood up and walked away after having heard his brother Samudra's percept. Now when Sihe was in his private chamber with his wife, she cast her feminine spell over him, telling him, not to cow down nor be deceptible to his brother's lame and saucy advice. So he should try to grasp all the wealth, or atleast half of it.

**एवं भार्येरितः सिंहो लङ्घनत्रितयं व्यधात् ।**
**अहं पृथग् भविष्यामी-त्युवाच स्वजनानपि ॥५९॥**

अन्वयः :- एवं भार्येरितः सिंहः लङ्घनत्रितयं व्यधात्। अहं पृथक् भविष्यामि इति सः स्वजनान् अपि उवाच ॥५९॥

विवरणम् :- *एवं इत्थं भार्यया पत्न्या ईरितः प्रेरितः भार्येरितः पत्नीप्रेरितः सिंहः, लङ्घनानां त्रितयं लङ्घनत्रितयं दिनत्रयलङ्घनं व्यधात् अकरोत्। ततः अहं पृथग् भविष्यामि इति सः स्वजनान् अपि उवाच ॥५९॥*

सरलार्थः :- एवं भार्यया प्रेरितः सिंहः दिनत्रय-मुल्लङ्घ्य (दिनत्रयानन्तरं) अहं पृथग् भविष्यामि इति स्वजनान् अपि अवदत् ॥५९॥

ગુજરાતી:- એ પ્રમાણે ભાર્યાના સમજાવવાથી પ્રેરાયેલા સિંહે ત્રણ દિવસ લાંઘણ કરી, અને પોતાના સગાંસબંધીઓને કહ્યું કે, હું જુદો થઈશ. ॥૫૯॥

हिन्दी :- इसप्रकार पत्नी के समझाने से सिंह ने लगातार तीन दिन तक उपवास किया और अपने संबंधीओं से कहने लगा, "मुझे अलग होना है।"॥५९॥

मराठी :- ह्याप्रमाणे पत्नीच्या सांगण्यावरुन प्रेरित झालेल्या त्या सिंहाने तीन दिवस उपोषण केले आणि आपल्या नातेवाईकांना सांगत राहिला, ''मला वेगळे व्हायचे आहे.''॥५९॥

English :- Having instigated by his wife, Sihe digested her suggestions. He then abstinated for three days, then calling all his relations, asked for a seperation from his brother.

तेषां बलेन वेश्मार्धं निधानार्धश्च सोऽग्रहीत् ।
समुद्रस्तु ततः शत्रुञ्जययात्राचिकीरभूत् ॥६०॥

अन्वयः- तेषां बलेन सः वेश्मार्धं निधानार्धं च अग्रहीत्। किन्तु समुद्रः ततः शत्रुञ्जययात्राचिकीः अभूत् ॥६०॥

*विवरणम्:- तेषां स्वजनानां बलेन सामर्थ्येन सः वेश्मनः गृहस्य अर्धं वेश्मार्धं गृहार्धं, निधानस्य निधेः अर्धं निधानार्धं निध्यर्धं च अग्रहीत् अगृह्णात्। किन्तु समुद्रः ततः तदनन्तरं गृहनिधिविभागानन्तं शत्रुञ्जयस्य यात्रा शत्रुञ्जययात्रा शत्रुञ्जययात्राम् कर्तुमिच्छति इति शत्रुञ्जययात्राचिकीः अभूत् शत्रुञ्जययात्रां कर्तुमैच्छत् ॥६०॥*

मराठी:- तेषां स्वजनानां बलेन सः सिंहः अर्धं वेश्मं, अर्धनिधिं च अग्रहीत्। किन्तु समुद्रः ततः शत्रुञ्जययात्राम् कर्तुमैच्छत् ॥६०॥

ગુજરાતી:- સગાસબંધીઓની લાગવગ લગાવી તેઓના બળ વડે સિંહે સમુદ્ર પાસેથી ઘર અને નિધીનો અરધો ભાગ ગ્રહણ કર્યો. ત્યાર પછી સમુદ્રે શ્રી શત્રુંજય તીર્થની યાત્રા કરવાનો અભિલાષ કર્યો. ॥૬૦॥

हिन्दी :- रिश्तेदारों की पहचान निकाल कर उनके बल से सिंहने समुद्र से घर और खजाने का आधा हिस्सा मांग लिया। तब समुद्रने शत्रुंजयतीर्थ की यात्रा करने का निश्चय किया॥६०॥

मराठी :- आपल्या नातेवाईकांची ओळख गांठून त्यांच्या जोराने सिंहाने समुद्राकडून घर व खजिन्याची अर्धी वाटणी करवून घेतली. तेव्हा समुद्राने शत्रुंजय तीर्थाची यात्रा करण्याचे ठरविले.

English :- Catching the reins of his relatives support, Sihe asked for his share of the house and the new found wealth. At this juncture, Samudra decided to make a pilgrimage at Satrunjay.

**निधानार्धं व्यये तीर्थे नागपुण्यार्थमित्यसौ ।**
**यावच्चलति सिंहेन, तावद्राज्ञे निवेदितम् ॥६१॥**

अन्वयः- अहं नागपुण्यार्थं तीर्थे निधानार्धं व्यये इति असौ यावत् चलति तावत् सिंहेन राज्ञे निवेदितम् ॥६१॥

विवरणम्:- *अहं नागस्य नागगोष्ठिनः पुण्यार्थं नागपुण्यार्थं नागश्रेयसे तीर्थे शत्रुञ्जयतीर्थे निधानस्य निधेः अर्धं निधानार्धं (अर्धं निधानं ) व्यये व्ययीकरोमि इति विचिन्त्य असौ समुद्रः यावत् यात्रार्थं चलति तावत् सिंहेन राज्ञे नृपाय निवेदितं कथिम् ॥६१॥*

सरलार्थः- अहं नागस्य पुण्यार्थं शत्रुञ्जयतीर्थे निधानार्धस्य व्ययं करोमि इति विचिन्त्य असौ समुद्रः यावत् चलति तावत् सिंहेन नृपाय निवेदितम् ॥६१॥

ગુજરાતી:- શ્રી શત્રુંજય તીર્થમાં જઈ, આ બાકી રહેલા નિધાનમાંના દ્રવ્યનો નાગશ્રેષ્ઠીના પુણ્યને માટે વ્યય કરવો છે એમ વિચાર કરી સમુદ્ર તીર્થયાત્રા કરવા માટે ચાલવાની તૈયારી કરતો હતો. તેવામાં સિંહે તે નગરના રાજાની આગળ જઈને નિવેદન કર્યું કે,

हिन्दी :- "अब शत्रुंजय तीर्थ जाकर बाकी बचे हुए द्रव्य का नागश्रेष्ठी के कल्याण के लिये व्यय करना है," ऐसा सोचकर समुद्र तीर्थयात्रा जाने की तैयारी करने लगा उतने में ही सिंहने नगर के राजा के पास जाकर ऐसा निवेदन किया,॥६१॥

मराठी :- "आता शत्रुंजय तीर्थात जाऊन खजान्यातील बाकी उरलेले धन नागश्रेष्ठीच्या पुण्याईसाठी खर्च करायचे" अशाप्रकारे विचार करून 'समुद्र' तीर्थयात्रेसाठी तयारी करू लागला तोच धाकटा भाऊ सिंहाने राजाकडे जाऊन सांगितले की,॥६१॥

English :- Samudra now decides to go to Satrunjay and declare about the remaining part of the wealth, for the benediction of the Nag family. Having decided thus, Samudra began making preparations for his pilgrimage when Sihe decided to meet the king of their kingdom.

**लेभे निधानं मद्भ्रात्रा, यात्राव्याजादसौ ततः ॥**
**तदादाय व्रजन्नस्ति, न दोषोऽथ मनाग् मम ॥६२॥**

अन्वयः- मद्भ्रात्रा निधानं लेभे। ततः असौ यात्राव्याजात् तद् आदाय व्रजन् अस्ति।अत्र मम मनाग् दोषः न ॥६२॥

विवरणम्:- *मम भ्राता मद्भ्राता तेन मद्भ्रात्रा मम बन्धुना समुद्रेण निधानं भूमौ निहितः निधिः लेभे प्रापे। ततः तस्मात् असौ यात्रायाः व्याजः मिषं यात्राव्याजः तस्मात् यात्राव्याजात् यात्रामिषात् तद् निधानं तं निधिम् आदाय गृहीत्वा व्रजन् गच्छन् अस्ति। मया राज्ञे निवेदनरूपं मत्कर्तव्यं अनुष्ठितमस्ति। अतः सः निधिमादाय गच्छेत् चेत् अत्र मम मनागपि किञ्चिदपि दोषः न वर्तते ॥६२॥*

सरलार्थः- मम भ्रात्रा समुद्रेण भूमौ निहितः निधिः लब्धः अस्ति। सः यात्रामिषात् तं निधिमादाय गच्छन् अस्ति। मया भवते निवेदितम्। यदि सः सर्वं निधिमादाय गच्छेत् तर्हि अत्र मम किञ्चिदपि दोषः न ॥६२॥

ગુજરાતી:- "મારા મોટા ભાઈ સમુદ્રે દાટેલું નિધી મેળવ્યું છે, તે નિધીને લઈને તીર્થયાત્રાનું બહાનુ કરી અહીંથી હવે કદાચ નિધીને લઈને ચાલ્યો જાય, તો તેમાં મારો દોષ નથી. મેં આપને જાહેર કર્યું છે." ॥૬૨॥

हिन्दी :- "मेरे बडे भाई समुद्र को गडा हुआ धन मिला है और वह उस पूरे खजाने को लेकर तीर्थयात्रा का बहाना कर के अभी ही यहाँ से निकलने वाला है। मैने अपना फर्ज समझ कर आपको सच्ची बात बता दी है। अब शायद वह खजाना लेकर निकल भी जाए तो उसमें मेरा कसूर नहीं।"॥६२॥

मराठी :- पहा या माझ्या वडिल भावाला जमिनीत लपविलेला खजिना सापडला आहे. तो तीर्थयात्रेचा बहाणा करून निघण्याच्या तयारीत आहे. मी माझे कर्तव्य म्हणून तुम्हाला जाहिर केले आता कदाचित् तो खजिना घेऊन निघून गेला तर त्यात माझा दोष नाही.॥६२॥

English :- Since this "My elder brother has found some buried wealth by sea and wishes to run away with it by stressing on a false pretext that he wishes to go on a pilgrimage, and is about to leave with it. It is way to tell the king, the truth and it will not be his fault if his brother runs away with it."

मुहूर्तक्षण एवाऽथ, राज्ञाऽऽहूय नियन्त्रितः ।
समुद्रः कारणं ज्ञात्वा, निधानार्धं पुरोऽमुचत् ॥६३॥

अन्वयः- अथ राज्ञा मुहूर्तक्षणे एव आहूय समुद्रः नियन्त्रितः। कारणं ज्ञात्वा समुद्रः निधानार्धं पुरः अमुचत् ॥६३॥

विवरणम्:- *अथ सिंहनिवेदनात् अनन्तरं मुहूर्तस्य क्षणः मुहूर्तक्षणः तस्मिन् मुहूर्तक्षणे निर्गमनसमये एव आहूय समुद्रः नियन्त्रितः निबद्धः। कारणमात्मनः अकस्मात् बन्धनस्य कारणंज्ञात्वा समुद्रः निधानस्य अर्धं निधानार्धं राज्ञः पुरः अग्रे अमुचत् न्यक्षिपत् ॥६३॥*

सरलार्थः- अनन्तरं राज्ञा मुहूर्तक्षणे एव आहूय समुद्रः नियन्त्रितः। आत्मनः अकस्मात् नियन्त्रणस्य कारणं ज्ञात्वा समुद्रः राज्ञः पुरः निधानार्धं अमुचत् ॥६३॥

ગુજરાતી:-સિંહના ભંભેરવાથી કુપિત થયેલા રાજાએ સમુદ્રને મુહૂર્ત ક્ષણમાં જ બોલાવી નિયંત્રિત કર્યો. પોતાને અકસ્માત નિયંત્રિત કરવાનું કારણ જાણીને સમુદ્રે અર્ધું નિધાન રાજાની આગળ મૂક્યું. ॥૬૩॥

हिन्दी :- इस तरह सिंह के बहकाने से गुस्से में आकर राजाने उसी क्षण समुद्र को अपने पास बुलाया और यात्रा के लिये जाने से रोका। अपना यकायक नियंत्रित होने का कारण जानकर तुरंत ही समुद्र ने आधा खजाना राजा के सामने रख दिया ॥६३॥

मराठी :- याप्रकारे सिंहाच्या सांगण्यावरून राजाने क्रोधित होऊन समुद्राला आपल्यासमोर बोलाविले व यात्रेस जाण्याची बंदी घातली. या प्रकाराचे कारण समजताच अर्धा खजाना राजासमोर ठेवला.॥६३॥

English :- Being mislead by Sinh, The King , he atonce ordered that Samudra and controlled over him. When Sumudra understood the reason for him being restrained from attending the pilgrimage, he atonce placed the other half of the wealth in front of the king.

सर्वं स्वरूपं चावेद्य, निधिपत्रमदर्शयत्।
यथावस्थितवक्तेति, समुद्रं मुमुचे नृपः ॥६४॥

अन्वयः:- सर्वं स्वरूपं आवेद्य निधिपत्रं अदर्शयत्। ततः यथास्थितवक्ता इति नृपः समुद्रं मुमुचे ॥६४॥

विवरणम्:- *सर्वं स्वरूपं निधिप्राप्तेः सर्वं वृत्तान्तं नृपाय आवेद्य निवेद्य निधिपत्रं निधिना साकं सम्प्राप्तं पत्रं अदर्शयत्। ततः तदनन्तरम् अवस्थितमनतिक्रम्य यथावस्थितं वक्ता अयं यथाव्यतिक्रमो घटितः तथैव वक्ता अस्ति इति विभाव्य सन्तुष्टः नृपः तं समुद्रं मुमुचे बन्धनात् अमुञ्चत् ॥६४॥*

सरलार्थः:- समुद्रः राज्ञे निधिप्राप्तेः सर्वं वृतान्तं यथायथं न्यवेदयत्। निधिना साकमधिगतम् पत्रमपि अदर्शयत्। तदा अयं यथावस्थितवक्ता अस्ति इति मत्वा सन्तुष्टः राजा तं समुद्रं बन्धनात् अमुञ्चत् ॥६४॥

ગુજરાતી:- તેમજ નિધાન નીકળવા બાબતની સર્વ વાત રાજાને કહીને ભૂમિમાંથી નીકળેલ નિધિપત્ર બતાવ્યો. સત્યવાદી સમુદ્રના વચન ઉપર રાજાને સંપૂર્ણ વિશ્વાસ બેઠો, અને આ સત્ય બોલનાર છે એમ ધારીને છોડી મૂક્યો. ॥૬૪॥

हिन्दी :- और खजाना मिलने की सब बात राजा को शुरू से आखरी तक कही साथमें निकला निधिपत्र भी बतलाया तब राजा को समुद्र सच कह रहा है ऐसा विश्वास बैठने से उसको छोड दिया॥६४॥

मराठी :- तेव्हा खजिना सापडण्याची सर्व गोष्ट राजाला सुरुवातीपासून ते शेवटपर्यंत सांगितली आणि सोबतच निधिपत्र ही दाखविले. समुद्र सत्य म्हणत आहे असा विश्वास बसल्याने राजाने त्याला सोडून दिले.॥६४॥

English :- Samudra then narrated the whole incident and also placed the found letter as evidence, in front of the king. Now the king got full confidence over truthful Samudra's statements. So samudra speaks always truth. He thought in that way and matle him set free.

देवद्रव्यं च तज्ज्ञात्वा, प्रत्यर्थन्यायधर्मवित्।
समुद्रं बहु सत्कृत्य, यात्रार्थं व्यसृजन्नृपः ॥६५॥

अन्वयः- प्रत्यर्थन्यायधर्मविद् नृपः तद् देवद्रव्यं ज्ञात्वा समुद्रं बहु सत्कृत्य यात्रार्थं व्यसृजत् ॥६५॥

विवरणम्:- *प्रत्यर्थश्चासौ न्यायश्च प्रत्यर्थन्यायः। प्रत्यर्थन्यायश्च धर्मश्च प्रत्यर्थन्यायधर्मौ। प्रत्यर्थन्यायधर्मौ वेत्तीति प्रत्यर्थन्यायधर्मविद् सर्वोत्कृष्टां नीतिं धर्मं च जानानः नृपः तद् निधानाधिगतं द्रव्यं देवद्रव्यं वर्तते, इति ज्ञात्वा विज्ञाय समुद्रं बहु अतीव सत्कृत्य सम्मान्य यात्रार्थं शत्रुञ्जययात्रायै व्यसृजत् व्यमुचत् ॥६५॥*

सरलार्थः- सर्वोत्कृष्टं न्यायं धर्मं च जानानः स नृपः तद् देवद्रव्यं वर्तते इति ज्ञात्वा समुद्रं सत्कृत्य तीर्थयात्रार्थम् व्यमुचत् ॥६५॥

ગુજરાતી :- તથા "આ દેવદ્રવ્ય છે" એમ જાણી શ્રેષ્ઠનીતિ પાળનાર અને ધર્મનો જ્ઞાતા એવા રાજાએ સમુદ્રનો ઘણો જ સત્કાર કરીને તીર્થયાત્રા માટે વિદાય કર્યો.॥૬૫॥

हिन्दी :- तब "यह देवद्रव्य है" ऐसा जानकर श्रेष्ठ नीतिका पालन करनेवाले और धर्म को जाननेवाले उस राजाने समुद्र को सबहुमान तीर्थयात्रा के लिये रवाना किया॥६५॥

मराठी :- तेव्हा "हे तर देवद्रव्य आहे" असे प्रतीत झाल्याने नीतीने चालणारा आणि धर्म जाणणाऱ्या अशा त्या राजाने समुद्राचे स्वागत करून त्याला तीर्थयात्रेस जाण्यासाठी निरोप दिला.॥६५॥

English :- "This found wealth is actually God's wealth." By knowing this, observing the best ethic policy and knower of religion such king warmly welcomes Samudra and send him off for the pilgrimage with great pomp.

अथ द्विगुणितोत्साहः, समुद्रः स्वकुटुम्बयुक् ॥
मुहूर्तान्तरमादाय, यात्रार्थं प्रास्थित द्रुतम् ॥६६॥

अन्वयः- अथ द्विगुणितोत्साहः समुद्रः मुहूर्तान्तरमादाय स्वकुटुम्बयुक् द्रुतं यात्रार्थं प्रास्थित ॥६६॥

विवरणम्:- अथ राज्ञा विमोचनात् अनन्तरं द्वाभ्यां गुणितः उत्साहः यस्य सः द्विगुणितोत्साहः समुद्रः अन्यत् मुहूर्तं मुहूर्तान्तरं लग्नान्तरं आदाय गहीत्वा स्वस्य कुटुम्बं स्वकुटुम्बं । स्वकुटुम्बेन युज्यतेऽसौ स्वकुटुम्बयुक् स्वकुटुम्बेन सार्धं द्रुतं शीघ्रतरं यात्रार्थं यात्रायै प्रास्थित प्रातिष्ठत निर्गतः ॥६६॥

सरलार्थः:- अथ अनन्तरं द्विगुणितोत्साहः समुद्रः अन्यत् मुहूर्तमादाय शीघ्रतरं स्वकुटुम्बेन सह यात्रार्थं प्रस्थितः ॥६६॥

ગુજરાતી:- આ પ્રમાણે રાજાનું સન્માન પામવાથી બમણો ઉત્સાહિત થયેલા સમુદ્રે નિમિત્તિયા પાસે બીજું ઉત્તમ મુહૂર્ત કઢાવી પોતાના કુટુંબ સહિત યાત્રાને માટે શીઘ્ર પ્રયાણ કર્યું. ॥૬૬॥

हिन्दी :- इस प्रकार राजा से सन्मान पाकर दुगुने उत्साह से उस समुद्र ने ज्योतिषी के पास दूसरा उत्तम मुहूर्त निकलवाया और अपने कुटुम्बीजनों के साथ यात्रा के लिये शीघ्र प्रयाण किया॥६६॥

मराठी :- याप्रमाणे राजाकडून सन्मानित झाल्यामुळे दुप्पट उत्साहाने त्या समुद्राने ज्योतिषाकडून दुसरा मुहूर्त काढला आणि आपल्या कुटुंबासहित तीर्थयात्रेसाठी सत्वर निघाला.॥६६॥

English :- In this way, after getting honour from the king increased double enthusiasm, Samudra got another best auspicious time *(mahurat)* from *Nimittya*, he immediately started departure for his pilgrimage.

चतुर्भिर्योजनैरर्वाक्, श्रीशत्रुञ्जयतीर्थतः ॥
यावद् भुङ्क्ते सरस्तीरे, श्रीकाञ्चनपुरे पुरे ॥६७॥
तत्राऽपुत्रे मृते भूपे, तावद् मन्त्राऽधिवासितैः ॥
आगत्य पञ्चभिर्दिव्यैः राज्यं तस्मै ददे मुदा ॥६८॥

अन्वयः:- श्री शत्रुञ्जयतीर्थतः चतुर्भिः योजनैः अर्वाक् श्रीकाञ्चनपुरे पुरे सरस्तीरे यावत् भुङ्क्ते तावत् इति अग्रिमेण सम्बन्धः ॥६७॥

तावत् तत्र अपुत्रे भूपे मृते मन्त्राधिवासितैः पञ्चभिः दिव्यैः तत्र आगत्य मुदा तस्मै राज्यं ददौ ॥६८॥

विवरणम्:- श्रिया युक्तं शत्रुञ्जयतीर्थं श्रीशत्रुञ्जयतीर्थं तस्मात् श्रीशत्रुञ्जयतीर्थतः चतुर्भिः योजनैः अर्वाक् पुरे श्रीकाञ्चनपुरं नाम पुरे नगरे सरसः तीरं सरस्तीरम् तस्मिन् सरस्तीरे सरसीतटे सः यावत् भुङ्क्ते भोजनादिकं कुरुते तावत्-- ॥

यावत् सः श्रीकाञ्चनपुरे सरसीतटे भोजनादिकम् करोति तावत् तत्र तस्मिन् पुरे न विद्यते पुत्रः यस्य सः अपुत्रः तस्मिन् अपुत्रे निपुत्रिके भुवं पातीति भूपः तस्मिन् भूपे नृपे मृते पञ्चत्वम् गते सति मन्त्रैः अधिवासितानि मन्त्राधिवासितानि तैः मन्त्राधिवासितैः पञ्चभिः दिव्यैः तत्र आगत्य मुदा हर्षेण तस्मै समुद्राय राज्यं ददे अदीयत ॥६८॥

सरलार्थः:- श्री शत्रुञ्जयतीर्थतः चतुर्भिः योजनैः अर्वाक् श्रीकुसुमपुरे नाम पुरे सः सरसः तीरे यावत् भुङ्क्ते भोजनादिकम् कुरुते तावत् ॥

श्री काञ्चनपुरे सरसीतटे सः यावत् भोजनादिकं करोति तावत् तत्र पुरे निपुत्रिकः नृपः अम्रियत। अतः मन्त्राधिवासितैः पञ्चभिः दिव्यैः तत्र सरसीतीरे आगत्य हर्षेण समुद्राय राज्यम् ददे ॥६८॥

ગુજરાતી:- શ્રી શત્રુંજય તીર્થથી ચાર યોજન દૂર શ્રીકાંચનપુર નામના નગરની નજીકના સરોવરને કાંઠે તે ભોજન કરવા બેઠા છે તેવામાં, ॥૬૭॥

તે નગરમાં પુત્રરહિત રાજા મરણ પામવાથી મંત્ર વડે અધિવાસિત થયેલા પાંચ દિવ્યોએ ત્યાં આવી તેને હર્ષપૂર્વક રાજ્ય અર્પણ કર્યું. ॥૬૮॥

हिन्दी :- जब शत्रुंजय तीर्थ केवल चार योजन दूर रहा, तब श्री कांचनपुर नाम के नगर के पास ही सरोवर के किनारे खाना खा कर ही रहा था, उतने में शहर में पुत्रहीन राजा की मृत्यु होने से मंत्रो द्वारा अधिवासित हुए पांच दिव्यों ने वहां आकर [illegible] हर्ष के साथ राज्य अर्पण किया ॥६८॥

मराठी :- जेव्हा शत्रुंजय तीर्थ फक्त चार योजन दूर राहिले होते तेव्हा कांचनपुर नावाच्या नगराजवळ असलेल्या एका सरोवराकाठी तो जेवत होता. तितक्यात त्या नगरातील निपुत्रिक राजा मरण पावल्याने मंत्राने अधिवासित झालेल्या पांच दिव्यांनी तेथे येऊन त्याला हर्षाने राज्य अर्पण केले.॥६८॥

English :- He went ot the city named Shri Kanchanpur far from Shantrunjay by 4 *yojans* a lake near to the

city and he sat for taking his food, meam while

In that city, the king who had no children dieds five devine souls were there by'mantras, they came there and gave lion a kingdom with great joy.

गजारुढ: सितच्छत्रशाली चामरवीजित: ॥
अन्वीयमान: पूर्लोकै:, स्तूयमान: कवीश्वरै: ॥६१॥

अन्वय:- गजारुढ: सितच्छत्रशाली चामरवीजित: पूर्लोकै: अन्वीयमान: कवीश्वरै: स्तूयमान: - समुद्रपालभूपाल: ॥६१॥

विवरणम्:- गजमारूढ: गजारूढ: गजोपविष्ट:, सितम् श्वेतम् च तत् छत्रम् च सितच्छत्रम्। सितच्छत्रेण शालतेऽसौ सितच्छत्रशाली श्वेतातपत्रशाली, चामराभ्याम् वीजित: चामरवीजित: पुर: लोका: पूर्लोका: तै: पूर्लोकै: नगरवासिभि: जनै: अन्वीयमान: अनुगम्यमान:, कवीनाम् ईश्वरा: कवीश्वरा: तै: कवीश्वरै: कविश्रेष्ठै: स्तूयमान: - समुद्रपालभूपाल: ॥६१॥

सरलार्थ:- गजोपविष्ट: श्वेतच्छत्रधारी, चामराभ्याम् वीजित:, नागरिकजनै: अनुगम्यमान: कविश्रेष्ठै: च स्तूयमान: समुद्रपालभूपाल: ॥६१॥

ગુજરાતી:- પછી શ્રેષ્ઠ હસ્તી પર આરુઢ થયેલ, શ્વેત છત્રથી શોભાયમાન, ચામરો વડે વીંજાતા, જેની પાછળ નગરના પ્રતિષ્ઠિત લોકો ચાલી રહ્યા છે, અને કવીશ્વરો વડે સ્તુતિ કરાતા- ॥૬૧॥

हिन्दी :- उसके बाद श्रेष्ठ हाथी पर बैठा हुआ, श्वेत छत्रों से सुशोभित, चामरों द्वारा विझता हुआ, जिसके पीछे नगर के प्रतिष्ठित लोग चल रहे है, ऐसा कवीश्वरों के द्वारा स्तुति किये जानेवाला॥६१॥

मराठी :- तदनंतर श्रेष्ठ हत्तीवर बसलेला, वरून श्वेत छत्राने सुशोभित, ज्याच्यावर चामर ढाळले जात आहेत. ज्याच्यामागे शहरांचे प्रतिष्ठित लोक चालत आहे, असा व ज्यांची कवीश्वर स्तुति करतात असा॥६१॥

English :- Samudra was seated on an auspicious elephant with the royal umberalla *chhatra* above him, and was fanned *chamar* around with dignified celebrities walking behind him and the Poets singing out pslams of praise in his name.

चतुरङ्गचमूचारविचित्राखिलसत्पथः ॥
राज्यतूर्यध्वानपूर्यमाणब्रह्माण्डमण्डपः ॥७०॥

अन्वयः:- चतुरङ्गचमूचारविचित्राखिलसत्पथः, राज्यतूर्यध्वानपूर्यमाणब्रह्माण्ड मण्डपः समुद्रपालभूपालः ॥७०॥

विवरणम्:- चत्वारि अङ्गानि यस्याः सा चतुरङ्गा। चतुरङ्गा चासौ चमूः सेना च चतुरङ्गाचमूः। चतुरङ्गचम्वाः चारः गतिः चतुरङ्गचमूचारः। चतुरङ्गचंचारेण विचित्रः अखिलः सर्वः सन् चाऽसौ पन्थाः च सत्पथः यस्य सः चतुरङ्गचमूचारविचित्राखिलसत्पथः चतुरङ्गसेनायाः मधुरेण चारेण गत्या यस्य अखिलः सन्मार्गः विचित्रीकृतः अस्ति सः, राज्यस्य तूर्याणि मङ्गलवाद्यानि राज्यतूर्याणि। राज्यतूर्याणां ध्वानैः ध्वनिभिः पूर्यमाणः भ्रियमाणः ब्रह्माण्डं एव मण्डपः यस्य सः राज्यतूर्यध्वानपूर्यमाण ब्रह्माण्डमण्डपः समुद्रपालभूपालः ॥

सरलार्थः:- चतुरङ्गसेनायाः मनोहरगत्या यस्य अखिलः सन्मार्गः विचित्रः अभवत्। तथा राज्यस्य मङ्गलवाद्यध्वनिभिः यस्य ब्रह्माण्डमण्डपः पूर्यते स्म। सः समुद्रपालभूपालः ॥७०॥

ગુજરાતી :- ચતુરંગી સેનાની મંદ મંદ મનોહર ગતિથી સમગ્ર સુંદર માર્ગ જેણે વિચિત્ર કરેલો છે, અને રાજ્યના વાજિંત્રોના મધુર નિર્ઘોષથી બ્રહ્માંડરૂપી મંડપ જેણે ભરી દીધો છે એવા સમુદ્રપાલ રાજાએ- ॥૭૦॥

हिन्दी : चतुरंगी सेना की मंद मंद मनोहर गति से विचित्र किया है सुंदर मार्ग जिसने और राज्य के वाद्यों के मधुर ध्वनि से भर दिया है ब्रह्माण्डरूपी मंडप जिसने ऐसे उस समुद्रपाल राजाने,॥७०॥

मराठी :- तसेच चतुरंगी सेनेच्या मंदमंद गतीने विचित्र केला आहे समग्र सुंदर मार्ग ज्याने, राजकीय वाजिंत्र्यांच्या मधुर आवाजाने भरून टाकला आहे ब्रह्माण्डरूपी मंडप ज्याने, अशा त्या समुद्रपाल राजाने,॥७०॥

English :- The army consisting of horses, elephants, chariots and infantry was parading behind with the slow soothing beat of the drums that made the roads look so very different. Even the dusty roads seemed so beautiful, with the army parading, all at once, in the same rhythm. The whole canopy that was raised for the ceremony was filled with the sounds of these drumbeats, which made one

feel that the whole universe was filled with the sounds of the drumbeats. It all seemed so very enchanting.

विलसत्तोरणं प्रोच्चपताकं प्रेक्ष्यनाटकम् ॥
वर्णाम्भःसिक्तभूपीठव्यक्तस्वस्तिकसङ्कुलम् ॥७१॥

अन्वयः:- विलसत्तोरणं प्रोच्चपताकं प्रेक्ष्यनाटकं, वर्णाम्भःसिक्तभूपीठव्यक्तस्वस्तिक सङ्कुलं पुरं प्राविशत् ॥

विवरणम्:- *विलसन्ति तोरणानि यस्मिन् तद् विलसत्तोरणं, प्रकर्षेण उच्चाः प्रोच्चाः पताकाः ध्वजाः यस्मिन् तत् प्रोच्चपताकं, प्रेक्षितुम् योग्यानि प्रेक्ष्याणि प्रेक्षणीयानि नाटकानि यस्मिन् तत् प्रेक्ष्यनाटकं, विविधवर्णैः अम्भोभिः जलैः सिक्तमार्द्रीकृतं यद् भुवः पीठं भूपीठं तस्मिन्, व्यक्तानि स्पष्टानि च तानि स्वस्तिकानि च व्यक्तस्वस्तिकानि तैः सङ्कुलं व्याप्तं पुरं प्राविशत् ॥७१॥*

सरलार्थः:- समुद्रपालभूपालः यस्मिन् तोरणानि विलसन्ति, प्रोच्चाः पताकाः स्फुरन्ति, प्रेक्षणीयानि नाटकानि प्रचलन्ति, विविधवर्णैः सुगन्धिभिः जलैः सिक्ते भूपृष्ठे स्पष्टानि स्वस्तिकानि सन्ति तादृशं पुरं प्राविशत् ॥

ગુજરાતી :- વિવિધ રંગના તોરણોથી રમણીય, ગગનમંડળમાં ફરકી રહેલી ઉચ્ચ પતાકાઓયુક્ત, દર્શનીય મનોહર નાટકો સહિત, અનેક રંગના સુગંધી જલથી સિંચાતી પૃથ્વી પીઠિકા ઉપર સ્પષ્ટ જણાતા સાથીયાઓથી વ્યાપ્ત- ॥૭૧॥

हिन्दी :- तरह तरह के रंगों के तोरणों से सुशोभित गगन मंडल में फहराती हुई पताकाओं से युक्त, दर्शनीय नाटकोसहित, अनेक रंगो के सुगंधित जल से छिडकी हुई पृथ्वी पीठिका के ऊपर स्पष्ट दिखनेवाले स्वस्तिकों से व्याप्त,॥७०॥

मराठी :- विविध रंगांच्या तोरणांनी सुंदर गगन मंडलात फडकून राहिलेल्या पताकांनी युक्त, दर्शनीय मनोहर नाटकांनीं युक्त, नाना रंगांच्या जलाने सिंचन केलेल्या पृथ्वीपीठिकेवर स्पष्ट उमटलेल्या स्वस्तिक चिन्हांनी व्याप्त.॥७१॥

English :- The canopy, that was raised for the ceremony was emblished with multi-coloured festoons. The flags that were hoisted seemed to be fluttering, high up in the sky. There were melodramas worth

watching. Aromatic liquids were being sprinkled on the ground on which clear 'tilols' (Swastikas) were drawn.

विचित्रोल्लोचसम्पूर्णाऽऽपणश्रेणिविराजितम् ॥
समुद्रपालभूपालः सोत्सवं प्राविशत् पुरम् ॥७२॥

अन्वयः- समुद्रपालभूपालः विचित्रोल्लोचसम्पूर्णाऽऽपणश्रेणिविराजितं पुरं सोत्सवं प्राविशत् ॥७२॥

विवरणम्:- *समुद्रपालभूपालः विचित्राः उल्लोचाः येषु ते विचित्रोल्लोचाः विचित्रोल्लोचा श्चतेसम्पूर्णाश्च आपणाश्च विचित्रोल्लोचसम्पूर्णाः। विचित्रोल्लोचसम्पूर्णाश्च ते आपणाश्च विचित्रोल्लोचसम्पूर्णापणाः। विचित्रोल्लोचसम्पूर्णापणानां श्रेणिभिः पङ्क्तिभिःविराजितं विचित्रोल्लोचसम्पूर्णापणश्रेणिविराजितं श्रीकाञ्चनपुरं पुरं उत्सवेन सह यथा स्यात् तथा सोत्सवं प्राविशत् प्रविवेश ॥७२॥*

सरलार्थः- समुद्रपालभूपालः यस्मिन् पुरे आपणाः विचित्रैः उल्लोचैः चन्द्रकैः विराजमानाः, विविधैः वस्तुभिश्चपूर्णाः सन्ति। एतादृशानामापणानां श्रेणिभिः यत्पुरं विराजितमस्ति। तत्पुरं सोत्सवं प्राविशत् ॥७२॥

ગુજરાતી :- રંગીબેરંગી વિવિધ પ્રકારના કિંમતી ચંદરવા લગાવી દીધા છે, એવી માલથી ભરપૂર બનેલી દુકાનોની પંક્તિથી શોભી રહેલ શ્રીકાંચનપુર નગરમાં પ્રવેશ કર્યો. ॥૭૨॥

हिन्दी :- समुद्रभूपाल राजा ने जिसके अंदर रंगबिरंगी विविध प्रकार की कीमती चादरें लगा दी गई है ऐसे माल से भरपूर बनी हुई दुकानों की श्रेणियों से शोभायमान श्री कांचनपुर में प्रवेश किया ॥७२॥

मराठी :- समुद्रभूपालराजाने, जेथे विविध रंगाच्या मूल्यवान चादरी लावलेल्या आहेत अश्या मालांनी भरपूर असलेल्या दुकानांच्या रांगांनी शोभायमान झालेल्या त्या कांचनपुरांत प्रवेश केला.॥७२॥

English :- The shops that contained exquisite types of polychromatic canopies of cloth, decorated their shops with them, in order to increase the radiance and magnificance of the city, Kanchanpur, he entered in it.

राज्यकार्याणि कृत्वाऽह्न-स्त्रितयेन स सैन्ययुक् ॥
ऋद्ध्या महत्याऽध्यारोहत्, श्रीशत्रुञ्जयपर्वतम् ॥७३॥

अन्वय:- अहस्त्रितयेन राज्यकार्याणि कृत्वा स: सैन्ययुक् महत्या ऋद्ध्या श्री शत्रुञ्जयपर्वतम् अध्यारोहत ॥७३॥

विवरणम्:- *अह्नां दिनानां त्रितयं अहस्त्रितयं दिनत्रयं तेन अहस्त्रितयेन दिनत्रयेण राज्यस्य कार्याणि राज्यकार्याणि कृत्वा स: समुद्रपाल: सैन्येन युज्यतेऽसौ सैन्ययुक् सैन्यसहित: महत्या ऋद्ध्या महता वैभवेन श्री शत्रुञ्जयपर्वतं श्री शत्रुञ्जयगिरिं अध्यारोहत् आरोहत् ॥७३॥*

सरलार्थ:- तत: दिनत्रयेण सर्वाणि राज्यकार्याणि कृत्वा स: समुद्रपाल: सैन्येन सह महता वैभवेन श्री शत्रुञ्जयगिरिंअध्यारोहत् ॥७३॥

ગુજરાતી:- ત્રણ દિવસમાં તમામ રાજ્યકાર્ય આટોપી, તે સમુદ્રપાલ રાજા પોતાના સૈન્યયુક્ત મોટી ઋદ્ધિ સહિત તીર્થાધિરાજ શ્રી શત્રુંજય પર્વત પર ચડ્યો.॥

हिन्दी :- उसके बाद तीन दिनों में ही राजकाज समेटकर, वह समुद्रपाल राजा अपने सैन्यसहित बड़े ठाठबाटसे तीर्थाधिराज श्री शत्रुंजय पर्वत पर चढा॥७३॥

मराठी :- नंतर तीन दिवसात राज्यकारभाराचा बंदोबस्त करुन, तो समुद्रपाल राजा आपल्या सैन्याबरोबर मोठ्या थाटाने तीर्थाधिराज श्री शत्रुंजय पर्वतावर चढला.॥७३॥

English :- In 3 days completing all his royal matters the king Samudrapal began climbing the mountain of Satrunjay, with great splendour and granduer, along with his army.

स्नात्रादिसप्तदशभिर्भेदै: सिद्धान्तभाषितै: ॥
स तत्र सूत्रयामास पूजामादिजिनेशितु: ॥७४॥

अन्वय:- स तत्र सिद्धान्तभाषितै: स्नात्रादिसप्तदशभि: भेदै: आदिजिनेशितु: पूजां सूत्रयामास ॥

*विवरणम्:-* *सः समुद्रपालः नृपः तत्र श्री शत्रुञ्जयगिरौ सिद्धान्ते समये भाषिताः सिद्धान्तभाषिताः तैः सिद्धान्तभाषितैः आगमकथितैः स्नात्रं स्नानं आदौ येषां ते स्नात्रादयः। स्नात्रादयश्च ते सप्तदशच्च स्नात्रादिसप्तदश, तैः स्नात्रादिसप्तदशभिः भंगैः प्रकारैः जिनानामीशिता जिनेशिता। आदिश्चासौ जिनेशिता च आदिजिनेशिता, तस्य आदिजिनेशितुः आदिनाथस्य ऋषभदेवस्य पूजां अर्चां सूत्रयामास रचयामास ॥७४॥*

सरलार्थ:- सः समुद्रपालः तत्र श्री शत्रुञ्जयगिरौ सिद्धान्तेऽभिहितैः स्नात्रादि सप्तदशभिः प्रकारैःआदिनाथस्य पूजां रचयामास॥७४॥

ગુજરાતી :- તે પર્વત ઉપર વિરાજમાન પ્રભુશ્રી આદીશ્વર જિનેન્દ્રની સિદ્ધાંતમાં પ્રસ્થાપેલ સ્નાત્ર વિગેરે સત્તરભેદે પૂજા કરી. ॥૭૪॥

हिन्दी :- उस पर्वत उपर विराजमान प्रभु श्री आदिनाथ जिनेन्द्र की सिद्धांत में कही हुई स्नात्र इत्यादिक सत्रह प्रकार से पूजा की॥७४॥

मराठी :- त्या पर्वतावर विराजमान असलेल्या प्रभू श्री आदिनाथ जिनेन्द्राची सिद्धांतमध्ये सांगितलेली स्नात्र इत्यादि सतरा प्रकारांची पूजा केली.॥७४॥

English :- Having climbed the mountain, the king worshipped Lord Jinendra devoutly, performed the *Snatra puja*, as it is mentioned in the holy books and also performed the seventeen types of *pujas*.

**महापूजाध्वजारोपा-दिषु कृत्येष्वसौ तथा ॥**
**ददौ दानं यथा श्यामो, जज्ञे मेघोऽपि लज्जया ॥७५॥**

अन्वय:- असौ महापूजाध्वजारोपादिषु कृत्येषु कार्येषु तथा दानं ददौ यथा मेघः अपि लज्जया श्यामः जज्ञे ॥७५॥

*विवरणम्:-* *असौ समुद्रपालः नृपः महती चासौ पूजा च महापूजा। ध्वजस्य आरोपः ध्वजारोपः। महापूजाच ध्वजारोपश्च महापूजाध्वजारोपौ। महापूजाध्वजारोपौ आदौ येषां तानि, महापूजाध्वजारोपादीनि, तेषु महापूजाध्वजारोपादिषु कृत्येषु कार्येषु तथा तेन प्रकारेण दानं ददौ यथाऽनवरतं वर्षं मेघः अपि (जलदानं कुर्वन् मेघः अपि) लज्जया श्यामः कृष्णवर्णः जज्ञे बभूव ॥७५॥*

सरलार्थ:- असौ समुद्रपालः श्री शत्रुञ्जयतीर्थे महापूजाध्वजारोपणादिकृत्येषु तथा भृशं दानं ददौ यथाऽनवरतं जलदानं कुर्वन्नपि

मेघः लज्जया कृष्णवर्णः बभूव ॥७५॥

गुजराती:- સમુદ્રપાલ રાજાએ તે શત્રુંજયગિરિ ઉપર મહાપૂજાઓ, ધ્વજારોપણ વિગેરે પવિત્ર કાર્યોમાં એટલું તો પુષ્કળ દાન આપ્યું કે જે દાન જોઈને વૃષ્ટિદાન કરતો મેઘ પણ લજ્જા વડે શ્યામ થઈ ગયો, અર્થાત્ અખુટ વૃષ્ટિદાન કરતો મેઘ પણ આ રાજાના દાન આગળ પોતાને તુચ્છ માનતો લજ્જા પામી શ્યામ થઈ ગયો.॥૭૫॥

हिन्दी :- समुद्रपाल राजाने शत्रुंजय पर्वत पर भगवान की महापूजा और ध्वजारोपण इत्यादि पवित्र कार्योमें इतना दान दिया कि उसको देखकर सतत वृष्टिदान करनेवाला बादल भी शर्म के कारण श्याम हो गया ॥७५॥

मराठी :- समुद्रपाल राजाने शत्रुंजय पर्वतावर अर्हन्ताची महापूजा व ध्वजारोहण इत्यादी कार्यक्रमात इतकी संपत्ती खर्च केली की ते पाहून सतत वृष्टिदान करणारा मेघ सुद्धा लाजून श्याम वर्णाचा झाला.॥७५॥

English :- King Samudrapal performed the propitious *puja* of Lord Jinendra on the mountain, hoisted the sacred flag etc. The donation came fully in the holy actions. By seeing the donation, the Megh (cloud-king) became ashamed by showering rain and became black. It means that inexhaustible donation of shower of rainwater, the Megh also became black, comparing the donation of the king considering himself frail, felt ashameel and became black.

विधायाष्टाह्निकां नागनामग्राहं जगत्पतेः ॥
पूजादानादिसत्कृत्यैः स निधानार्धमव्ययत् ॥७६॥

अन्वयः:- नागनामग्राहं जगत्पतेः अष्टाह्निकां विधाय पूजादानादिसत्कृत्यैः सः निधानार्धं अव्ययत् ॥७६॥

*विवरणम्:- नागस्य नामानि नागनामानि। नागनामानि गृहीत्वा नागनामग्राहं जगतां पतिःजगत्पतिः, तस्य जगत्पतेः जगत्प्रभोः आदिनाथस्य अष्टाह्निकामहोत्सवं विधाय कृत्वा पूजाश्च दानानि च पूजादानानि पूजादानानि आदौ येषाम् तानि पूजादानादीनि च तानि सन्ति च तानि कृत्यानि च पूजादानादिसत्कृत्यानि, तैः पूजादानादिसत्कृत्यैः निधानस्यार्धं निधानार्धं अव्ययत् व्ययीचकार ॥७६॥*

सरलार्थ:- शत्रुञ्जयतीर्थे नागस्य नामानि गृहीत्वा जगत्प्रभो: आदिनाथस्य अष्टाह्निकामहोत्सवं कृत्वा पूजादानादिभि: सुकृतै: स निधानार्धमव्ययत् ।।७६।।

ગુજરાતી:- નાગશ્રેષ્ઠીનું નામ લઈને શ્રી જિનેન્દ્રનો આઠ દિવસ અઠ્ઠાઈ મહોત્સવ કરી, પૂજા દાન વિગેરે સુકૃત્યો કરવામાં તે નાગશ્રેષ્ઠીના નિધાનનો બચેલો અરધો ભાગ સમુદ્રપાલ રાજાએ વાપર્યો. ।।૭૬।।

हिन्दी :- नागश्रेष्ठी का नाम लेकर श्री जिनेन्द्र का आठ दिन का अठ्ठाई महोत्सव कर पूजा, दान इत्यादि सुकृत्य करने में उस नागश्रेष्ठी के खजाने का बचा हुआ आधा हिस्सा समुद्रपाल राजाने खर्च किया।।७६।।

मराठी :- नागश्रेष्ठीचे नाव घेऊन, श्री जिनेन्द्राचा आठ दिवसांचा अठाई महोत्सव करून पूजा, दान इत्यादि सुकृत्य करून त्या नागश्रेष्ठीच्या खजिन्यातील उरलेला अर्धा वाटा (हिस्सा) त्या समुद्रपाल राजाने खर्च केला.।।७६।।

English :- By accepting the name of Nagashrasthi, celebrating *Aththai Mahotsva* of eight days of Lord Jinendra, thus the king Samudrapal spent remaining half of the wealth of Nagashreshthi in charity and pertarming pious deeds.

**सिद्धक्षेत्रादथोत्तीर्य, स्वपुरं प्राविशन्नृप: ।।**
**रुद्धो राज्यासहिष्णुत्वाद्, वाणिजो दुष्टपार्थिवै: ।।७७।।**

अन्वय:- अथ सिद्धक्षेत्रात् उत्तीर्य नृप: स्वपुरं प्राविशत्। वाणिज: राज्याऽसहिष्णुत्वात् दुष्टपार्थिवै: रुद्ध: ।।७७।।

विवरणम्:- *अथ अनन्तरं सिद्धं च तत् क्षेत्रश्च सिद्धक्षेत्रं, तस्मात् सिद्धक्षेत्रात् श्रीशत्रुञ्जयगिरे: उत्तीर्य नृन् पातीति नृप: भूप: समुद्रपाल: स्वस्य पुरं स्वपुरं स्वनगरं प्राविशत्। तावत् वाणिज: वैश्यस्य राज्यस्य न सहिष्णव: राज्यासहिष्णव: राज्यासहिष्णूनां भाव: राज्यासहिष्णुत्वं तस्मात् राज्यासहिष्णुत्वात्, दुष्टाश्च ते पार्थिवाश्च दुष्टपार्थिवा: तै: दुष्टपार्थिवै: दुष्टराजभि: रुद्ध: ।।७७।।*

सरलार्थ:- अनन्तं स: नृप: सिद्धक्षेत्रात् उत्तीर्य यावत् स्वपुरं प्राविशत् तावत् वैश्य: राज्यं कर्तुं नार्हति इति मत्वा वैश्यस्य राज्यासहिष्णव: दुष्टा: पार्थिवा: तं नृपं अरुन्धन् ।।७७।।

ગુજરાતી:- હવે સમુદ્રપાલ સિદ્ધક્ષેત્રથી ઉતરીને જેવો પોતાના નગરમાં પ્રવેશ કરતો હતો, તેવામાં તે વૈશ્ય હોવાથી તેને મળેલા રાજ્યને સહન નહીં કરનારા આસપાસના ઈર્ષાળુ દુષ્ટ રાજાઓએ તેને ઘેરી લીધો. ॥૭૭॥

हिन्दी :- बाद में समुद्रपाल जैसे ही सिद्धक्षेत्र से उतरकर अपने नगर में प्रवेश करने लगा उतनेमें उस वैश्य को प्राप्त हुआ राज्य सहन न करनेवाले आसपास के ईर्ष्यालु दुष्ट राजाओने घेर लिया. ॥७७॥

मराठी :- आता समुद्रपाल जसा ही सिद्धक्षेत्रातून परतून आपल्या नगरात शिरणार होता तोच त्या वैश्याला मिळालेल्या राज्याची गोष्ट सहन न करणाऱ्या जवळपासच्या ईर्ष्याळू दुष्ट राजांनी त्याला येऊन घेरले.॥७७॥

English : After having alighted from the *Siddhe-Shetra*, King Samudrapal began entering his city. Just then some ill-minded kings who could not bear the fact that a mere trader as Samudra had achieved a kingdom, surrounded his city.

**मिथः प्रवृत्ते युद्धेऽथ, भग्नां वीक्ष्य निजां चमूम् ॥**
**श्रीसमुद्रनृपो यावत्, किंकर्तव्यजडोऽजनि॥७८॥**

अन्वयः- अथ मिथः युद्धे प्रवृत्ते निजां चमूं भग्नां वीक्ष्य श्रीसमुद्रदत्तः नृपः यावत् किंकर्तव्यताजडः अजनि ॥७८॥.

*विवरणम्:- अथ अनन्तरं मिथः परस्परं युद्धे प्रवृत्ते सति निजां स्वाम् चमूं सेनां भग्नां विच्छिन्नां वीक्ष्य दृष्ट्वा श्रीसमुद्रदत्तः नृपः भूपः यावत् किंकर्तव्य यस्य सः किङ्कर्तव्यः। किङ्कर्तव्यस्य भावः किङ्कर्तव्यता। किङ्कर्तव्यतायां जडः मुग्धः अजनि अजायता। यदा द्वयोः सैन्ययोः युद्धं प्रावर्तत तदा तस्मिन् युद्धे स्वं सैन्यं भग्नं वीक्ष्य श्रीसमुद्रनृपः किङ्कर्तव्यतामूढः समजनि ॥७८॥*

सरलार्थ:- अनन्तरं अन्योन्यं युद्धे प्रवृत्ते सति निजं सैन्यं भग्नमवलोक्य श्री समुद्रनृपः अधुना किं - कर्तव्यमित्यत्र यावत् विमूढः अजनि ॥७८॥

ગુજરાતી:- પરસ્પર બન્ને સેના વચ્ચે યુદ્ધ થયું. પણ છેવટે દુશ્મનોના પરાક્રમથી પોતાની સેનાને વીખરાઈ ગયેલી જોઈ સમુદ્રપાલ રાજા હવે શું કરવું? એ પ્રમાણે વિચાર-વમળમાં ગુંચવાયો. ॥૭૮॥

हिन्दी :- बाद में दोनों सेनाओं में युद्ध हुआ और अंत में (दुश्मनो के पराक्रम से) अपनी सेना को बिखरा हुआ देखकर समुद्रपाल राजा "अब क्या करना?" ऐसी उधेडबुन में पड गया॥७८॥

मराठी :- नंतर दोन्ही सैन्यामध्ये युद्ध झाले आणि शेवटी (शत्रूंच्या पराक्रमाने) आपल्या सेनेला अस्ताव्यस्त झालेली पाहून राजा समुद्रपाल किंकर्तव्यमूढ झाला, तेवढ्यात॥७९॥

English :-There began a war between the two cities, but ultimetly when King Samudrapal seen that his army was being scattered and defeat was at hand, he was controlled by feelings of perplexity and fright.

तावन्निबिडबन्धेन निबद्धान् योजिताञ्जलीन् ॥
पादाग्रे लुठतो वीक्ष्य रक्ष रक्षेति जल्पतः ॥७९॥

अन्वयः- तावत् निबिडबन्धेन निबद्धान् योजिताञ्जलीन् पादाग्रे लुठतः रक्ष रक्ष इति जल्पतः विद्वेषिभूपतीन् वीक्ष्य॥७९॥

*विवरणम्:- तावत् निबिडःदृढश्चासौ बन्धश्च निबिडबन्धः तेन निबिडबन्धेन दृढबन्धेन नियद्धान्, योजितः बद्धः अञ्जलिः यैः ते योजिताञ्जलयः बद्धाञ्जलयः तान् योजिताञ्जलीन् बद्धाञ्जलीन्, पादयोः अग्रे पादाग्रे लुठतः रक्ष रक्ष इति जल्पतःवदतः विद्वेषिभूपतीन् वीक्ष्य अवलोक्य... ॥७९॥*

सरलार्थः- तावत् दृढबन्धेन बद्धान् बद्धाञ्जलीन् पादाग्रे लुठतः, रक्ष रक्ष इति जल्पतःविद्वेषिनृपान् अवलोक्य....॥७९॥

ગુજરાતી :- તેટલામાં મજબૂત બંધનોથી બંધાએલા અને બે હાથ જોડી પગમાં આળોટતા શત્રુરાજાઓને પોતાની સન્મુખ "રક્ષણ કરો રક્ષણ કરો" એ પ્રમાણે બોલતા જોઈને- ॥૭૯॥

हिन्दी :- उतनेमें ही मजबूत बंधनो से बांधे गये और दो हाथ जोडकर उसके सामने आ कर पैरों में पडते हुए और "बचाओ, बचाओ" ऐसी विनंती करते हुए उन्ही शत्रु राजाओं को देखकर ॥७९॥

मराठी :- तेवढ्यात दृढ बंधनानी बांधलेल्या, दोन्ही हाथ जोडून पायांत लोटांगण घालणाऱ्या, त्या शत्रुराजांना आपल्या समोर पाहून आणि ''वाचवा, वाचवा'' अशी विनंती करणारे पाहून,॥७९॥

English :- Suddenly he seen the enemy king being tied vigourously and running towards him, was screaming for mercy, with joint hands.

विद्वेषिभूपतीन् सर्वान् प्रोन्मुच्य निजपुरुषैः ॥
अहो! किमिति साश्चर्योऽपृच्छत्तानेव भूपतीन् ॥८०॥

अन्वयः- रक्ष रक्ष इति जल्पतः सर्वान् विद्वेषिभूपतीन् वीक्ष्य निजपुरुषैः प्रोन्मुच्य अहो! किमिति साश्चर्यः तान् एव भूपतीन् अपृच्छत् ॥८०॥

*विवरणम्:- रक्ष रक्ष इति जल्पतः सर्वान् विशेषेण द्विषन्तीत्येवम्शीलाःविद्वेषिणः। विद्वेषिणश्च ते भुवः पतयः भूपतयःनृपाःचेति विद्वेषिभूपतयः, तान् विद्वेषिभूपतीन् विद्वेषिनृपान् निजाश्च ते पुरुषाश्च निजपुरुषाः तैः निजपुरुषैः निजसेवकैः प्रोन्मुच्य बन्धनमुक्तान् विधाय अहो! किमिदम् इति आश्चर्येण सह वर्ततेऽसौ साश्चर्यः सः तानेव भूपतीन् नृपान् अपृच्छत् ॥८०॥*

सरलार्थः- पूर्वश्लोकोक्तविशेषण विशिष्टान् सर्वान् विद्वेषिनृपान् स्वसेवकैः बन्धनात् विमोच्य अहो! इदं किम्? इति सः तानेव भूपतीन् साश्चर्यमपृच्छत् ॥८०॥

ગુજરાતી :- પોતાના ઉપર દ્વેષ કરનાર અને યુદ્ધ કરનાર તે સર્વ શત્રુરાજાઓને પોતાના માણસો દ્વારા છોડાવીને "અહો! આ શું આશ્ચર્ય બન્યું ?" એ પ્રમાણે તે રાજાઓને પૂછ્યું. ॥૮૦॥

हिन्दी :- अपने उपर द्वेष करनेवाले और युद्ध करनेवाले उन सब शत्रु राजाओं को अपने आदमियों द्वारा छुडवा कर "ओहो! यह क्या आश्चर्य है?" ऐसा उन्ही राजाओं से पूछा॥८०॥

मराठी :- आपला द्वेष करणाऱ्या आणि युद्ध करणाऱ्या त्या सगळ्या शत्रू राजांना आपल्या माणसांना सांगून मोकळे केले आणि ''अहो! हे काय आश्चर्य आहे?'' असे त्यांनाच विचारले.॥८०॥

English :- The king then asked his men to set free all the kings who were war with him and were jealous of him and asked the reason for such an astounding incident.

ते प्रोचुर्नापरं विभो, विशेषं किन्तु सङ्गरे।
अबध्यामहि दुर्बुद्ध्या, युध्यमानाः स्वयं वयम् ॥८१॥

अन्वयः:- ते प्रोचुः, वयं अपरं विशेषं न विद्मः। किन्तु सङ्गरे दुर्बुद्ध्या युध्यमानाः वयं स्वयं अबध्यामहि ॥८१॥

विवरणम्:- *ते विद्वेषिनृपाः प्रोचुः अब्रुवन्। वयं अपरं विशेषं न विद्मः जानीमः। किन्तु सङ्गरे युद्धे दुष्टा चासौ बुद्धिश्च दुर्बुद्धिः, तया दुर्बुद्ध्या, युध्यमानाः युद्धं कुर्वाणाः वयं स्वयमेव अबध्यामहि ॥८१॥*

सरलार्थः:- ते विद्वेषिनृपाः अब्रुवन् - वयमपरं विशेषं न जानीमः। किन्तु युद्धे दुष्टबुद्ध्या युध्यमानाः वयं स्वयमेव अबध्यामहि बद्धाः ॥८१॥

गुजराती :- त्यारे सर्व राजाओए प्रत्युत्तर आप्यो के अमे आम बनवानुं बीजुं तो कोई विशेष कारण जाणता नथी, परंतु दुष्टबुद्धिथी युद्ध करता अमे रणांगणमां स्वयं बंधाई गया छीए ॥८१॥

हिन्दी :- तब सभी राजाओने जवाब दिया, "वैसे तो हमे इस घटना का और कोई विशेष कारण मालूम नहीं है, लेकिन द्वेष बुद्धि से लडनेवाले हम स्वयं बंध गये हैं ॥८१॥

मराठी :- तेव्हा त्या राजांनी प्रत्युत्तर दिले, असे घडण्याचे विशेष कोणते ही कारण आम्हांला माहीत नाही, पण द्वेषबुद्धीने लढत असतांना आम्ही स्वतं रणक्षेत्रात बांधले गेलो आहोत.॥८१॥

English :- At this, the kings answered that, they did not know the reason to this astounding incident, but they were being bound on the battle-field themselves when they were carressing ill-feelings of jealousy.

परं भवत्प्रसादेन, च्छुटिता नाऽत्र सम्शय: ॥
अत: स्वसेवकान् यावज्जीवं स्वीकुरु नोऽधुना ॥८२॥

अन्वय:- परं भवत: प्रसाद: भवत्प्रसाद:, तेन भवत्प्रसादेन तव कृपया वयं च्छुटिता: मुक्ता: अभवाम् इत्यत्र संशय: न अस्ति। अधुना न: यावज्जीवं स्वसेवकान् स्वीकुरु ॥८२॥

विवरणम्:- परं भवत: प्रसाद: भवत्प्रसाद:, तेन भवत्प्रसादेन तव कृपया वयं च्छुटिता: बन्धनात् मुक्ता: अभवाम्। इत्यत्र संशय: सन्देह: नाऽस्ति। अत: अधुना इदानीं त्वं न: अस्मान् यावत् जीवाम: तावत् यावज्जीवं स्वस्य सेवका: स्वसेवका: तान् स्वसेवकान् स्वीकुरु, अस्मान् स्वसेवकत्वेन अङ्गीकुरुष्व ॥८२॥

सरलार्थ:- परन्तु भवत: कृपया एव वयं बन्धनात् मुक्ता: अभवाम्। इत्यत्र सन्देह: नास्ति। अत: इदानीं त्वं अस्मान् यावज्जीवं स्वसेवकत्वेन स्वीकुरु ॥८२॥

ગુજરાતી :- પરંતુ હે રાજન् ! આપની જ કૃપાદૃષ્ટિથી અમે છુટ્યા છીએ, એમાં સંશય નથી, માટે હવે આપ અમો સર્વને જીવનપર્યંત આપના સેવક તરીકે સ્વીકારો॥૮૨॥

हिन्दी :- "लेकिन हे महाराज! आपकी ही कृपा से हम छूट गये हैं इसमें कोई शक नहीं है। अब आप हम सबको जिन्दगीभर के लिये दास के रूप में स्वीकार कर लो।"॥८२॥

मराठी :- परंतु हे महाराज! आपल्याच कृपेने आम्ही सगळे सुटलो आहोत यात काही संशय नाही. म्हणून आपण आम्हा सर्वांना जीवन असेपर्यंत दास म्हणून स्वीकारा.॥८२॥

English :- But then they all agreed that, they were free just because of the king. So they surrendered themselves to the king and asked him to accept them as his humble servants.

**इत्युक्त्वा सेवकीभूते-स्तैरेवाऽसौ परिवृतः ॥**
**स्वपुरं प्राविशत् प्राज्य-प्रवेशोत्सवपूर्वकम् ॥८३॥**

अन्वयः:- इति उक्त्वा सेवकीभूतेः तैः एव परिवृतः असौ प्राज्यप्रवेशोत्सवपूर्वकं स्वपुरं प्राविशत्॥८३॥

विवरणम्:- *इति एवम् उक्त्वा भाषित्वा न सेवकाः असेवकाः। असेवकाः सेवकाः भूताः सेवकीभूताः तैः सेवकीभूतेः सेवकतां प्राप्तैः तैः एव विद्वेषिनृपैः परिवृतः रुद्धः असौ समुद्रनृपः प्राज्यः समृद्धश्चासौ प्रवेशस्योत्सवश्च प्राज्यसमृद्धोत्सवः। प्राज्यसमृद्धप्रवेशोत्सवः पूर्वम् यस्मिन् कर्मणि यथा स्यात् तथा प्राप्यसमृद्धप्रवेशोत्सवपूर्वकं महता उत्सवेन सह इत्यर्थः स्वपुरं प्राविशत् ॥८३॥*

सरलार्थः:- एवमुक्त्वा सेवकीभूतेः तैः राजभिः एव परिवृतः असौ समुद्रनृपः महता उत्सवेन सह स्वपुरं प्राविशत् ॥८३॥

ગુજરાતી :- આવી રીતે સેવક તરીકે પોતાને વશ થયેલ સર્વ રાજાઓ સાથે સમુદ્રપાલ રાજાએ મોટા ઉત્સવપૂર્વક પોતાના નગરમાં પ્રવેશ કર્યો. ॥૮૩॥

हिन्दी :- इस तरह सेवक की तरह अपने आधीन हुए उन सब राजाओं से घिरे हुए उस समुद्रपाल राजाने बडे उत्सव के साथ नगर में प्रवेश किया ॥८३॥

मराठी :- अशारीतीने सेवक म्हणून आपल्या अधीन झालेल्या त्या राजासमवेत त्या समुद्रपाल राजाने मोठ्या उत्साहाने नगरामध्ये प्रवेश केला.॥८३॥

English :- Thus the King entered the city with great pomp and style surrounded by these docile Kings.

**सभ्यान् सभायामाभाष्य, विसृज्य च नृपानसौ ॥**
**सौधान्तः पूजयन् देवान्, ददर्श व्यन्तरं पुरः ॥८४॥**

अन्वयः:- सभायां सभ्यान् आभाष्य नृपान् विसृज्य च सौधान्तः देवान् पूजयन् असौ पुरः व्यन्तरम् ददर्श ॥८४॥

विवरणम्:- *सभायां राजपरिषदि सभायां साधवः सभ्याः तान् सभ्यान् सभासदः आभाष्य आ समन्तात् भाषित्वा नॄन् पान्तीति नृपाः तान् नृपान् राज्ञः विसृज्य विमुच्य सौधस्य प्रासादस्य अन्तः सौधान्तः प्रासादमध्ये देवान् पूजयन् अर्चन् असौ समुद्रनृपः पुरः अग्रे व्यन्तरं देवं ददर्श अद्राक्षीत् ॥८४॥*

सरलार्थः- तथा सभायामुपस्थितान् सभ्यान् किञ्चित् आभाष्य नृपान् विसृज्य चाऽसौ समुद्रनृपः सौधमध्ये देवान् अपूजयत्। तदा पुरः एकम् व्यन्तरं अद्राक्षीत् ॥८४॥

ગુજરાતી :- ત્યાર બાદ કચેરીમાં સભ્યો સાથે કેટલીક વાતચીત કરી, રાજાઓને સન્માનપૂર્વક વિદાય કરી, તે પોતાના ગૃહમંદિરમાં દેવોની પૂજા કરવા બેઠો, તેવામાં પોતાની સન્મુખ તેણે એક વ્યંતર જોયો.॥૮૪॥

हिन्दी :- उसके बाद कचहरी में सभासदो के साथ कुछ बातचीत कर के, राजाओं को सम्मानपूर्वक बिदा कर के अपने गृहमंदिरमें ज्यों ही देवों की पूजा के लिये प्रवृत्त हुआ, त्यों ही अपने सामने एक व्यंतर को देखा॥८४॥

मराठी :- नंतर दरबारात सभासदांशी काही गोष्टी करून, सोबत आलेल्या राजांना सन्मानपूर्वक निरोप देऊन आपल्या देवघरात देवाची पूजा करू लागतो. तेव्हा त्याला समोर एक व्यंतर दिसला.॥८४॥

English :- The king then spoke to the kings in the royal court and then bidding them farewell, went to his temple made in his residence. On entering he happened to see a God (*Vyantar* - a type of a God)

**पृष्टः कस्त्वमिति क्षोणि-भृता स व्यन्तरोऽवदत् ॥**
**तामलिप्त्यामहं नाग-नामा प्राग् गोष्ठिकोऽभवम् ॥८५॥**

अन्वयः- क्षोणिभृता त्वं कः इति पृष्टः सः व्यन्तरः अवदत्। अहं प्राक् तामलिप्त्याम् नागनामा गोष्ठिकः अभवम् ॥

*विवरणम्:- क्षोणिं पृथ्वीं बिभर्तीति क्षोणिभृत् तेन क्षोणिभृता भूभृता त्वं कः असि? इति पृष्टः विचारितः स व्यन्तरः अवदत् - अवादीत्-अहं प्राक् पुरा तामलिप्त्यां नाम नगर्यानागः नाम यस्य सः नागनामा नागाभिधानः गोष्ठिकः अभवम् अभूवम् ॥८५॥*

सरलार्थः- राज्ञा समुद्रेण त्वं कः असि? इति पृष्टः सः व्यन्तरः अवादीत् अहं पुरा तामलिप्त्यां नगर्यां नागनामा गोष्ठिकः अभवम् ॥८५॥

ગુજરાતી :- સમુદ્રપાલ રાજાએ પુછ્યું કે - "તું કોણ છે ?" ત્યારે તે વ્યંતરદેવે કહ્યું કે - 'હું તામલિપ્તિ નગરીમાં પ્રથમ નાગ નામનો ગોષ્ઠિક હતો.' ॥૮૫॥

हिन्दी :- तब समुद्रपाल राजाने उससे पूछा, "तुम कौन हो?" तब वह व्यंतर बोला, "हे राजन्! मैं तामलिसी नगरी में पहले नाग नाम का गोष्ठिक था॥८५॥

मराठी :- तेव्हा समुद्रपाल राजाने त्याला विचारले, "तू कोण आहेस?" तेव्हा तो व्यंतर म्हणाला, "मी तामलिसी नगरीमध्ये प्रथम नाग नावाचा गोष्ठिक होतो."॥८५॥

English :- The king asked the God *(Vyantar)* to identify himself. At this, he replied that he was a conversationalist named Nag, in a city named Tamlipti.

**पूर्वजैः कारिते चैत्ये, सारां विदधतो मम।**
**कुटुम्बं सकलं क्षीणं देवस्वेनैव पोषितम् ॥८६॥**

अन्वयः- पूर्वजैः कारिते चैत्ये सारां विदधतः मम देवस्वेन एव पोषितं सकलं कुटुम्बं क्षीणम् ॥८६॥

विवरणम्:- *पूर्वं जायन्ते इति पूर्वजाः, तैः पूर्वजैः वमृशजैः कारिते निर्मापिते चैत्ये- जिनमन्दिरे सारां मन्दिरव्यवस्थां विदधतः कुर्वतः मम देवस्य स्वं धनं देवस्वं तेन देवस्वेन देवद्रव्येण एव पोषितं पालितं सकलं सर्वं कुटुम्बं क्षीणं नष्टम् अनश्यत् ॥८६॥*

सरलार्थः- मम पूर्वजैः कारिते चैत्ये मन्दिरव्यवस्थां कुर्वतः मम देवद्रव्येण एव पोषितं सकलं कुटुम्बम् अनश्यत् ॥८६॥

ગુજરાતી :- મારા પૂર્વજોએ બંધાવેલા જિનમંદિરની સારસંભાળ કરતાં દેવદ્રવ્યથી જ પોષણ પામેલું મારું સઘળું કુટુંબ નાશ પામ્યું. ॥૮૬॥

हिन्दी :- मैं मेरे पूर्वजो के द्वारा निर्मित जिनमंदिर की निगरानी करते हुए मेरे परिवार का देवद्रव्य से ही निर्वाह (गुजारा) करता था। लेकिन उससे मेरा पूरा परिवार नष्ट हो गया ॥८६॥

मराठी :- माझ्या पूर्वजांनी बांधून ठेवलेल्या जिनमंदिराची देखरेख करतांना देवद्रव्यानेच कुटुंबाचे पालनपोषण मी करीत होतो. त्यामुळे माझा पूर्ण कुटुंब नाश झाला.॥८६॥

English :- "I am a caretaker of the temple of Lord Jineshwar that was built by his ancestors. I and my family subsisted on God's money, due to which my family experienced damnation."

देवद्रव्योपभोगेन, कुटुम्बस्य क्षयो भवेत् ॥
नैमित्तिकादिति श्रुत्वा, भीतः कर्म तदत्यजम् ॥८७॥

अन्वयः- देवद्रव्योपभोगेन कुटुम्बस्य क्षयः भवेत् । इति नैमित्तिकात् श्रुत्वा भीतः अहं तत् कर्म अत्यजम् ॥८७॥

विवरणम्:- *देवस्य द्रव्यं देवद्रव्यं । देवद्रव्यस्य उपभोगः देवद्रव्योपभोगः, तेन देवद्रव्योपभोगेन कुटुम्बस्य क्षयः विनाशः भवेत् । कुटुम्बम् विनश्यति। इति निमित्तं जानातीति नैमित्तिकः तस्मात् नैमित्तिकात् शकुनज्ञात् श्रुत्वा निशम्य भीतः भयं प्राप्तः अहं तत् कर्म देवद्रव्योपभोगलक्षणं कर्म अत्यजम् अजहाम् ॥८७॥*

सरलार्थः- देवद्रव्यस्य उपभोगेन सकलं कुटुम्बं नश्यति इति निमित्तविदः मुखात् श्रुत्वा भीतः अहं देवद्रव्योपभोगम् अत्याक्षम् ॥८७॥

ગુજરાતી :- હવે કોઈક સમયે નિમિત્તિયાના મુખથી સાંભળ્યું કે - "દેવદ્રવ્યનો ઉપભોગ કરવાથી કુટુંબનો નાશ થાય છે," આ પ્રમાણે સાંભળી હું ડર પામ્યો અને તેથી મેં તે કાર્ય (દેવદ્રવ્યનો ઉપભોગ) કરવું છોડી દીધું.॥૮૭॥

हिन्दी :- जब एक बार किसी ज्योतिष के मुख से सुना कि, "देवद्रव्य का उपभोग करने से समस्त परिवार का नाश होता है।" तब यह सुनकर मुझे डर लगा और मैंने वह काम (देवद्रव्य का उपभोग) करना छोड दिया ॥८७॥

मराठी :- नंतर एके दिवशी कोणत्या एका ज्योतिषाच्या तोंडून मी ऐकले की, "देवद्रव्याचा उपभोग केल्याने कुटुंबाचा नाश होतो." हे ऐकून मला भीती वाटली आणि नंतर ते काम (देवद्रव्यांचा उपभोग) मी सोडून दिले.॥८७॥

ગુજરાતી :- સમુદ્રપાલ રાજાએ પુછ્યું કે - "તું કોણ છે ?" ત્યારે તે વ્યંતરદેવે કહ્યું કે - 'હું તામલિપ્તિ નગરીમાં પ્રથમ નાગ નામનો ગોષ્ઠિક હતો.' ॥૮૫॥

हिन्दी :- तब समुद्रपाल राजाने उससे पूछा, "तुम कौन हो?" तब वह व्यंतर बोला, "हे राजन्! मैं तामलिसी नगरी में पहले नाग नाम का गोष्ठिक था।।८५।।

मराठी :- तेव्हा समुद्रपाल राजाने त्याला विचारले, "तू कोण आहेस?" तेव्हा तो व्यंतर म्हणाला, "मी तामलिप्ती नगरीमध्ये प्रथम नाग नावाचा गोष्ठिक होतो."।।८५।।

English :- The king asked the God *(Vyantar)* to identify himself. At this, he replied that he was a conversationalist named Nag, in a city named Tamlipti.

**पूर्वजैः कारिते चैत्ये, सारां विदधतो मम।**
**कुटुम्बं सकलं क्षीणं देवस्वेनैव पोषितम् ॥८६॥**

अन्वयः- पूर्वजैः कारिते चैत्ये सारां विदधतः मम देवस्वेन एव पोषितं सकलं कुटुम्बं क्षीणम् ॥८६॥

विवरणम्:- *पूर्वं जायन्ते इति पूर्वजाः, तैः पूर्वजैः वंशजैः कारिते निर्मापिते चैत्ये- जिनमन्दिरे सारां मन्दिरव्यवस्थां विदधतः कुर्वतः मम देवस्य स्वं धनं देवस्वं तेन देवस्वेन देवद्रव्येण एव पोषितं पालितं सकलं सर्वं कुटुम्बं क्षीणं नष्टम् अनश्यत् ॥८६॥*

सरलार्थः- मम पूर्वजैः कारिते चैत्ये मन्दिरव्यवस्थां कुर्वतः मम देवद्रव्येण एव पोषितं सकलं कुटुम्बम् अनश्यत् ॥८६॥

ગુજરાતી :- મારા પૂર્વજોએ બંધાવેલા જિનમંદિરની સારસંભાળ કરતાં દેવદ્રવ્યથી જ પોષણ પામેલું મારું સઘળું કુટુંબ નાશ પામ્યું. ॥૮૬॥

हिन्दी :- मैं मेरे पूर्वजो के द्वारा निर्मित जिनमंदिर की निगरानी करते हुए मेरे परिवार का देवद्रव्य से ही निर्वाह (गुजारा) करता था। लेकिन उससे मेरा पूरा परिवार नष्ट हो गया ॥८६॥

मराठी :- माझ्या पूर्वजांनी बांधून ठेवलेल्या जिनमंदिराची देखरेख करतांना देवद्रव्यानेच कुटुंबाचे पालनपोषण मी करीत होतो. त्यामुळे माझा पूर्ण कुटुंब नाश झाला.॥८६॥

English :- "I am a caretaker of the temple of Lord Jineshwar that was built by his ancestors. I and my family subsisted on God's money, due to which my family experienced damnation."

देवद्रव्योपभोगेन, कुटुम्बस्य क्षयो भवेत् ॥
नैमित्तिकादिति श्रुत्वा, भीतः कर्म तदत्यजम् ॥८७॥

अन्वयः- देवद्रव्योपभोगेन कुटुम्बस्य क्षयः भवेत् । इति नैमित्तिकात् श्रुत्वा भीतः अहं तत् कर्म अत्यजम् ॥८७॥

विवरणम्:- *देवस्य द्रव्यं देवद्रव्यं । देवद्रव्यस्य उपभोगः देवद्रव्योपभोगः, तेन देवद्रव्योपभोगेन कुटुम्बस्य क्षयः विनाशः भवेत् । कुटुम्बम् विनश्यति। इति निमित्तं जानातीति नैमित्तिकः तस्मात् नैमित्तिकात् शकुनज्ञात् श्रुत्वा निशम्य भीतः भयं प्राप्तः अहं तत् कर्म देवद्रव्योपभोगलक्षणं कर्म अत्यजम् अजहाम् ॥८७॥*

सरलार्थः- देवद्रव्यस्य उपभोगेन सकलं कुटुम्बं नश्यति इति निमित्तविदः मुखात् श्रुत्वा भीतः अहं देवद्रव्योपभोगम् अत्याक्षम् ॥८७॥

ગુજરાતી :- હવે કોઈક સમયે નિમિત્તિયાના મુખથી સાંભળ્યું કે - "દેવદ્રવ્યનો ઉપભોગ કરવાથી કુટુંબનો નાશ થાય છે," આ પ્રમાણે સાંભળી હું ડર પામ્યો અને તેથી મેં તે કાર્ય (દેવદ્રવ્યનો ઉપભોગ) કરવું છોડી દીધું.॥૮૭॥

हिन्दी :- जब एक बार किसी ज्योतिष के मुख से सुना कि, "देवद्रव्य का उपभोग करने से समस्त परिवार का नाश होता है।" तब यह सुनकर मुझे डर लगा और मैंने वह काम (देवद्रव्य का उपभोग) करना छोड दिया ॥८७॥

मराठी :- नंतर एके दिवशी कोणत्या एका ज्योतिषाच्या तोंडून मी ऐकले की, "देवद्रव्याचा उपभोग केल्याने कुटुंबाचा नाश होतो." हे ऐकून मला भीती वाटली आणि नंतर ते काम (देवद्रव्यांचा उपभोग) मी सोडून दिले.॥८७॥

English :- Then once he had happened to hear from an astrologer,"The one who utilizes God's money is bound to be irradicated along with his family. So overcome with fright, he stopped the use of God's money."

चतुर्विंशतिदीनार-सहस्त्री याऽन्तिकेऽभवत् ॥
देवसत्काऽवशिष्टा सा, क्षितौ क्षिप्ताऽथ पत्रयुक् ॥८८॥

अन्वय:- अन्तिके देवसत्का या चतुर्विंशतिदीनारसहस्त्री अवशिष्टाऽभवत् सा मया पत्रयुक् क्षितौ क्षिप्ता ॥८८॥

विवरणम्:- *अन्तिके मम समीपे देवसत्का देवद्रव्यरूपा या दीनाराणां सुवर्णमुद्राणां सहस्त्राणि दीनारसहस्त्राणि। चतुरधिका विंशति: चतुर्विंशति:। चतुर्विंशते: दीनार सहस्त्राणां समाहार: चतुर्विंशतिदीनारसहस्त्री चतुर्विंशतिसहस्त्रं दीनारा: निष्का: इत्यर्थ: अवशिष्टा अभवत् । अवशिष्टा: अभवन्। सा मया पत्रयुक् पत्रेण साकं क्षितौ भूमौ निक्षिप्ता स्थापिता ॥८८॥*

सरलार्थ:- मम अन्तिके समीपे अन्ते चतुर्विंशतिसहस्त्रमिता: निष्का: सुवर्णमुद्रा: अवशिष्टा: अभवन्। ता: सुवर्णमुद्रा: मया पत्रेण सह भूमौ निखाता: ॥८८॥

ગુજરાતી :- મારી પાસે દેવદ્રવ્ય તરીકેની ચોવીશ હજાર સોનમહોરો જે બાકી રહી હતી, તે લિખિત પત્ર સહિત પૃથ્વીમાં દાટી. ॥૮૮॥

हिन्दी :- उस समय मेरे पास देवद्रव्य के नाम पर चौबीस हजार सोना मुहरें जमा थी, जिसे लिखित पत्र के साथ जमीन में गाड़ दी ॥८८॥

मराठी :- त्या वेळी माझ्या जवळ देवद्रव्य म्हणून एकूण चौवीस हजार सोन्याच्या मुद्रा शिल्लक होत्या. त्या मुद्रा मी एका पत्रा सोबत जमीनीत पुरून (गाडून)ठेवल्या.॥८८॥

English :- "I had twenty four thousand gold coins as God's money, which I had buried in the ground, along with a note."

कृत्यैर्यथोचितैर्जीवन् । प्रान्तेऽहम् कष्टतो निशि ॥
स्थविर्या प्रातिवेश्मिक्या, पठ्यमानम् मृदुस्वरम् ॥८९॥
श्रीशत्रुञ्जयमाहात्म्यम्, शृण्वन्नेकाग्रमानसः ॥
मृत्वा तद्ध्यानतोऽभूवम् व्यन्तरोऽत्रैव पर्वते ॥९०॥

अन्वयः- यथोचितैः कृत्यैः जीवन् अहम् प्रान्ते निशि कष्टतः प्रातिवेश्मिक्या स्थविर्या मृदुस्वरम् पठ्यमानम्- ॥८९॥

श्री शत्रुञ्जयमाहात्म्यम् एकाग्रमानसः शृण्वन् अहम् तद्ध्यानतः मृत्वाऽत्र एव पर्वते व्यन्तरः अभूवम् ॥९०॥

विवरणम्:- *उचितमनतिक्रम्य वर्तन्ते इति यथोचितानि तैः यथोचितैः कृत्यैः कार्यैः जीवन् उपजीविकाम् कुर्वन् अहम् प्रान्ते मरणसमये निशि निशायाम् कष्टतः दुःखात् प्रतिवेश्म वसतीति प्रातिवेश्मिकी तया प्रातिवेश्मिक्या स्थविर्या वृद्धया मृदुः स्वरः यस्मिन् कर्मणि यथास्यात् तथा मृदुस्वरम् मृदुस्वरेण इत्यर्थः पठ्यमानम् गीयमानम् ॥८९॥*

*श्री शत्रुञ्जयस्य माहात्म्यम् महत्त्वम् एकाग्रम् मानसम् यस्य सः एकाग्रमानसः (एकाग्रेण मनसा) शृण्वन् आकर्णयन् अहम् तस्य शत्रुञ्जयस्य ध्यानम् तद्ध्यानम् तस्मात् तद्ध्यानतः शत्रुञ्जयध्यानात् मृत्वा मरणम् प्राप्य अत्र अस्मिन् पर्वते एव शत्रुञ्जयगिरौ एव व्यन्तरः अभूवम् ॥९०॥*

सरलार्थः- ततः यथोचितैः कर्मभिःउपजीवन् अहम् अन्तकाले निशायाम् महता कष्टेन प्रातिवेश्मिक्या वृद्धया मृदुस्वरेण पठ्यमानम् गीयमानम् ॥८९॥

वृद्धया मृदुस्वरेण गीयमानम् श्री शत्रुञ्जयस्य माहात्म्यम् एकाग्रेण मनसा शृण्वन् अहम् श्रीशत्रुञ्जयस्य ध्यानात् मृत्वा अस्मिन् श्रीशत्रुञ्जयपर्वते एव व्यन्तरः अभवम् ॥९०॥

ગુજરાતી :-ત્યાર પછી યથાયોગ્ય કાર્યો વડે ધન મેળવી આજીવિકા ચલાવતો હું મરણ સમયે દુઃખપૂર્વક રાત્રિમાં નજીકના પાડોશમાં રહેતી એક વૃદ્ધ સ્ત્રીના મુખ દ્વારા કોમળ સ્વરથી કહેવાતા - ॥૮૯॥

ગુજરાતી:- આ પર્વત પર પૂજા સમયે તમારા મુખથી મારું નામ સાંભળીને પૂર્વભવનો વૃત્તાન્ત સ્મરણ કરી મારું ચિત્ત ઘણું પ્રસન્ન થયું, અને મેં વિચાર્યું કે ॥૯૧॥

हिन्दी :- इस पर्वत के ऊपर पूजा के समय तुम्हारे मुँह से मेरा नाम सुनकर मुझे पूर्वभव का वृत्तान्त याद आया और मेरा चित्त बहुत प्रसन्न हुआ और फिर मैंने सोचा कि,॥९१॥

मराठी :- या पर्वतावर पूजेच्या वेळी तुमच्या तोंडातून माझे नाव ऐकून मला पूर्वजन्माच्या वृत्तान्ताचे स्मरण झाले. आणि आज माझे चित्त प्रसन्न झाले आणि मग मी विचार केला की,॥९१॥

English :- On the mountain, when Samudra was performing the *puja*, Nag happened to hear his name being repeated. He then recollected his past life and its happenings. He was thus filled with feelings of bliss and tranquillity.

साध्विदम् विदधे देव - द्रव्यं यद्देवपूजने ॥
व्ययितं तत् किमप्यस्य, सान्निध्यम् विदधेऽधुना ॥९२॥

अन्वय:- यद् देवद्रव्यं देवपूजने व्ययितं इदं साधु विदधे । तद् अधुना अस्य किमपि सान्निध्यं विदधे.॥९१॥

विवरणम्:- *यद् इदं देवद्रव्यं त्वया देवस्य पूजनं देवपूजनं तस्मिन् देवपूजने देवार्चने व्ययितं व्ययीकृतम् इदम् साधु विदधे चक्रे । तत् तस्मात्कारणात् अधुना अस्य किमपि सान्निध्यमहं विदधे कुर्वे ॥९२॥*

सरलार्थ:- देवद्रव्यं देवपूजने व्ययितमिदं साधु विदधे। अत: अहमस्य किमपि सान्निध्यं विदधे ॥९२॥

ગુજરાતી :- (મેં વિચાર્યું કે) આ રાજાએ દેવપૂજામાં દેવદ્રવ્યનો વ્યય કર્યો તે ઘણું જ સારું કર્યું, માટે એને હવે કાંઇક સહાયકારી થાઉં.॥૯૨॥

हिन्दी :- इस राजा ने देवपूजा में ही देवद्रव्य का खर्च किया है यह बहुत ही अच्छा किया है और इसलिये मैं उसे किसी न किसी प्रकार से सहायक बनूं॥९२॥

શ્રી શત્રુંજય તીર્થના અદ્ભુત માહાત્મ્યને એકાગ્રચિત્તે સાંભળતાં સાંભળતાં મૃત્યુ પામ્યો અને શ્રી શત્રુંજયના ધ્યાનથી આજ પર્વત ઉપર વ્યંતરદેવ થયો છું.॥૯૦॥

हिन्दी :- बाद में यथायोग्य कार्यो द्वारा धन प्राप्त कर के आजीविका चलाते हुए मैंने मरण के समय रात में पडोस की एक वृद्धा के मुख से मधुर स्वर में कहा जानेवाला श्री शत्रुंजय तीर्थका अद्भुत माहात्म्य एकाग्र चित्त से सुना और मैंने मृत्यु पाया। श्री शत्रुंजय के ध्यान के कारण आज इसी पर्वत पर व्यंतर देव बना हूं॥८९॥

मराठी :- नंतर यथायोग्य कार्य करून धन प्राप्त करून आजीविका चालवीत असतांना, मृत्यूच्या वेळी रात्री शेजारी एक म्हातारी मधुर कंठाने मोठया कष्टाने श्री शत्रुंजय तीर्थाचे अद्भुत माहात्म्य म्हणत होती. एकाग्र मनाने ते ऐकतांना माझे प्राण गेले आणि श्री शत्रुंजयाच्या ध्यानामुळे आज त्याच पर्वतावर व्यंतर देव बनलो.॥८९॥

English :- Then he earned my living, through proper means and is due course reached my death bed, when I happened to hear from a neighbouring old woman, in a melodious tone about the auspiciousness of the mountain Satrunjay. As my mind was engrossed in the thoughts of the sacred pilgrim spot, he became a God (*Vyantar*) on the mountain, after my death.

तत्र पूजाक्षणे स्वीयं, नाम श्रुत्वा भवन्मुखात् ॥
स्मृत्वा च पूर्ववृत्तान्तमं, प्रीतचेता व्यचिन्तयम् ॥९१॥

अन्वयः- तत्र पूजाक्षणे भवन्मुखात् स्वीयं नाम श्रुत्वा प्रीतचेताः अहम् पूर्ववृत्तान्तं स्मृत्वा व्यचिन्तयम् ॥९१॥

*विवरणम्:- तत्र शत्रुञयगिरौ पूजायाः क्षणः पूजाक्षणः, तस्मिन् पूजाक्षणे पूजासमये भवतः मुख भवन्मुखं तस्मात् भवन्मुखात् त व मुखात् स्वीयमात्मनः नाम नामधेयं श्रुत्वा आकर्ण्य प्रीतं चेतः मनः यस्य सः प्रीतचेताः प्रीतमनाः अहं पूर्वश्चासौ वृत्तान्तश्च पूर्ववृत्तान्तः तं पूर्ववृत्तान्तं पूर्वभववृत्तान्तं स्मृत्वा व्यचिन्तयं व्यचारयम् ॥९१॥*

सरलार्थ:- तस्मिन् शत्रुञ्जयतीर्थे पूजासमये तव मुखात् मम नाम श्रुत्वा सन्तुष्टमानसः अहम् पूर्वभववृत्तान्तं स्मृत्वा विचिन्तितवान् ॥९१॥

मराठी :- या राजाने देवपूजेत देवद्रव्याचा वापर केला ते खरोखर फारच छान केले आहे, आता मी त्याला कोणत्या तरी प्रकाराने सहाय करिन.॥९२॥

English :- Then he thought to himself saying that this King Samudra has spent the money wholly on religious deeds, which is excellent, so he should, in some way or another, help him out.

अतः सहागतेनैव, यन्त्रितास्ते मयाऽरयः॥
अल्पशक्तिः परं नाऽह - मन्यत्र स्थातुमीश्वरः ॥९३॥

अन्वयः- अतः सह आगतेन एव मया ते अरयः यन्त्रिताः। परम् अहमल्पशक्तिः अस्मि। अतः अन्यत्र स्थातुमीश्वरः नाऽस्मि ॥९३॥

*विवरणम्:- अतः शत्रुञ्जयतीर्थात् त्वया सह आगतेन मया एव ते तव अरयः शत्रवः यन्त्रिताः रुद्धाः बद्धाः। परन्तु अहम् अल्पा शक्तिः यस्य सः अल्पशक्तिः अस्मि अल्पबलः भवामि। तस्मात् अहं मम स्थानात् अन्यत्र मत्स्थानम् परित्यज्य अन्यस्मिन् स्थाने स्थातुं ईश्वरः समर्थः क्षमः न अस्मि॥९३॥*

सरलार्थः- अतः शत्रुञ्जयतीर्थात् तव साहाय्यार्थं त्वया सह आगतेन मया एव तव अरयः नियन्त्रिताः बद्धाः। किन्तु अहमल्पबलः अस्मि। तस्मात् मम स्थानम् परित्यज्य अहमन्यत्र स्थातुं समर्थः नाऽस्मि ॥९३॥

ગુજરાતી :- એમ વિચાર કરી શ્રી શત્રુંજયતીર્થથી તારી સાથે આવી મેં તમારા શત્રુઓને દૃઢ બંધનોથી બાંધી લીધા હતા. પરંતુ હું અલ્પ શક્તિવાળો છું તેથી મારા સ્થાન સિવાય અન્ય સ્થાને રહેવા સમર્થ નથી. ॥૯૩॥

हिन्दी :- ऐसा विचार कर के, शत्रुंजय तीर्थ से तुम्हारे साथ चल कर मैंने ही तुम्हारे शत्रुओं को दृढ - बंधनों से बांध लिया था। लेकिन मैं अल्प शक्तिशाली होने के कारण अपना स्थान छोडकर और कहीं भी रह नहीं सकता ॥९३॥

मराठी :- असा विचार करून शत्रुंजय तीर्थापासून तुमच्या बरोबर येऊन मी स्वतःच तुमच्या शत्रूंना मजबूत बंधनांनी बांधून घेतले. पण मी अल्पशक्तीशाली असून माझी जागा सोडून दुसऱ्या जागी राहू शकत नाही.॥९३॥

English :- Having thought thus, he himself came along with the king from the mountain and vigorously tied up the enemies. But because he had limited powers, he could not stay at any other place, than his own.

**अतो यातास्मि तत्रैव, परं यात्राद्वयस्य मे ॥**
**प्रत्यब्दं सुकृतम् देयं, प्रपेदे सोऽपि तद्वचः ॥९४॥**

अन्वयः- अतः अहं तत्रैव यातास्मि । परं त्वया मे प्रत्यब्दं यात्राद्वयस्य सुकृतं देयम्। सोऽपि तद्वचः प्रपेदे ॥९४॥

विवरणम्:- *अतः अल्पबलत्वेन अन्यत्र स्थातुमशक्यत्वात् अहं तत्र एव मम निवासभूते शत्रुंजयगिरौ एव यातास्मि, यामि गच्छामि परम् त्वया मे मह्यम अब्दे अब्दे प्रत्यब्दं प्रतिवर्षम् यात्रयोः द्वयम् यात्राद्वयम् तस्य यात्राद्वयस्य द्वयोः यात्रयोः सुकृतं पुण्यम् देयम्। सः समुद्रनृपः अपि तस्य तद् वचः प्रपेदे स्वीचकार ॥९४॥*

सरलार्थः- अल्पबलत्वेन अन्यत्र स्थातुमशक्तत्वात् अहं तत्र एव मम निवासस्थाने शत्रुंजयपर्वते गच्छामि। परम् त्वया प्रतिवर्षं मह्यं यात्राद्वयस्य पुण्यम् प्रदेयम् । सः समुद्रनृपः अपि तस्य तद् वचः स्वीचकार ॥९४॥

ગુજરાતી :- **માટે હું મારા સ્થાનકે જાઉં છું. પણ છેલ્લે મારે તમોને એટલું જણાવવાનું કે, તમારે દર વર્ષે મારા નિમિત્તે બે યાત્રાનું પુણ્ય કરવું. આ પ્રમાણે જ્યારે વ્યંતર દેવે પોતાનું સમસ્ત વૃત્તાંત રાજાને સ્પષ્ટ કહી બતાવ્યું, અને છેવટે બે યાત્રાના પુણ્યની માગણી કરી ત્યારે રાજાએ પણ તેનું વચન માન્ય કર્યું. ॥૯૪॥**

हिन्दी :- अब मैं मेरे स्थान पर जाता हूँ। लेकिन अन्तमें तुम्हें इतना बताता हूँ कि, हर साल मेरे निमित्त दो यात्रा का पुण्य करना। इस तरह जब व्यंतर देवने अपनी पूरी कहानी राजा को कह सुनाई और अन्तमें दो यात्रा के पुण्य की मांग की, तब राजाने भी उसका वचन मान्य किया ॥९४॥

मराठी :- आता मी माझ्या ठिकाणी जातो. पण शेवटी तुम्हाला असं सांगतो की तुम्ही मला प्रतिवर्षी दोन यात्रेचे फळ देत रहा. याप्रमाणे जेव्हा व्यंतरदेवाने आपला सर्व वृत्तांत राजाला सांगितला आणि शेवटी दोन यात्रेच्या पुण्याची मागणी केली, तेव्हा राजानेही त्याचे वचन मान्य केले.॥९४॥

English :- Saying thus the God *(Vyantar)* said that it was time for him to leave. Before leaving he asked the king to always carry out two pilgrimages every year, in his name. The king readily complied to this request.

**यद्वस्तु दीयते चेत्तत्, सहस्रगुणमाप्यते ॥**
**तद्दत्ते सुकृते पुण्यं, पापे पापं च तद्गुणम् ॥९५॥**

अन्वयः- यद् वस्तु दीयते तत् सहस्रगुणम् आप्यते । तत् सुकृते दत्ते चेत् पुण्यं सहस्रगुणमाप्यते पापे दत्ते चेत् पापम् तद्गुणं (सहस्रगुणम्) आप्यते॥९५॥

विवरणम्:- *यद् वस्तु दानरूपेण दीयते तत् सहस्रगुणम् आप्यते प्राप्यते । शोभनं कृतम् सुकृतं तस्मिन् सुकृते पुण्ये कर्मणि दत्ते चेत् पुण्यं सहस्रगुणमाप्यते । पापे पापकर्मणि दत्ते चेत् पापं तद्गुणं सहस्रगुणमाप्नोति॥*

सरलार्थः- यद्वस्तु दाने दीयते तत्सहस्रगुणमाप्यते। पुण्ये कर्मणि वस्तु दत्तं चेत् पुण्यं सहस्रगुणमाप्नोति। पापे कर्मणि दत्तम् चेत् पापं सहस्रगुणमाप्यते ॥९५॥

ગુજરાતી :- જે વસ્તુ દાન તરીકે આપવામાં આવે છે, તેની હજારગણી પ્રાપ્ત થાય છે. વળી જે સુકૃત માટે અપાય છે તે પુણ્ય આપે છે અને જે પાપ-આરંભકારી કાર્યમાં અપાય છે તે તેટલા જ ગણું પાપ આપે છે. ॥૯૫॥

हिन्दी :- जो वस्तु दान के रूप दी जाती है, उससे हजारगुनी प्राप्त होती है वैसे ही जो सुकृत के लिये दी जाती है वह पुण्य देनेवाली होती है और जो पापारंभ मे दी जाती है वह उतना ही गुना पाप देनेवाली हो जाती है॥९५॥

मराठी :- जी वस्तु दान म्हणून देण्यात येते, ती हजार पटीने प्राप्त होते. तर जी सुकृतांसाठी देण्यात येते, ती पुण्य देणारी बनते, तसेच जी पापांच्या आरंभासाठी देण्यात येते ती तितक्या पटीने पाप देणारी बनते.॥९५॥

English :- A thing given as charity, shall be received in a thousand-fold, a pious deed is a merit earned and what is given for committing a sinful act, shall receive it in the same-fold.

दीयमानं धनम् किञ्च, धनिकस्याऽपचीयते ॥
सुकृतं दीयमानं तु, धनिकस्योपचीयते ॥९६॥

अन्वयः:- किं च धनिकस्य दीयमानं धनम् अपचीयते। किन्तु धनिकस्य दीयमानं सुकृतम् उपचीयते ॥९६॥

विवरणम्:- *किंच धनिकस्य धनवतः पुरुषस्य दीयमानं वितीर्यमाणं धनं तु अपचीयते क्षीयते। परन्तु धनिकस्य दीयमानं सुकृतं पुण्यं न अपचीयते प्रत्युत यथा यथा दीयते तथा तथा उपचीयते वर्धते एव ॥९६॥*

सरलार्थः:- किम् च धनिकस्य यद् धनम् दीयते तत्तु अपचीयते क्षीयते। किन्तु यत्सुकृतम् पुण्यम् दीयते तत्तु यथा यथा दीयते तथा तथा उपचीयते वर्धते एव ॥९६॥

ગુજરાતી :- વળી ધનિક પુરુષનું દાન કરાતું ધન તો ઓછું થાય છે, પણ દાન કરાતું સુકૃત તો વૃદ્ધિ જ પામે છે. સુકૃતનું જેમ જેમ દાન કરીએ તેમ તેમ ઘટવાને બદલે તે વધતું જ જાય છે. ॥૯૬॥

हिन्दी :- और, यदि धनिक (दाता) धन का दान करे, तो उसका धन कम हो जाता है, किन्तु यदि वह सुकृत्य (पुण्य) का दान करे तो उसका सुकृत (पुण्य) वृद्धि ही पाता है। सुकृत का जैसे जैसे दान करते हैं, वैसे वैसे वह घटने के बजाय बढता ही जाता है। ॥९६॥

मराठी :- आणि हे ही खरं की जरं कोणी धनिक (दाता) धनाचे दान करतो तर त्यांचे धन कमी होत पण जर तो सुकृताचे (पुण्याचे) दान करतो, तर त्यांचे पुण्य आणखी वृध्दिंगत होत. सुकृतांचे जसे जसे दान करण्यात येते तसे तसे ते कमी होण्याऐवजी वाढत जाते.॥९६॥

English :- A wealthly man shall experience a decrease in his wealth if he gives it as charity. But if a man gives his wealth for any virtuous deeds shall always experience an increase in his wealth. Thus wealth given out on charity will of course decrease his wealth, but it shall increase his merit double-fold.

**श्राव्यते सुकृतं यावद्, योऽन्तकालेऽपि तावतः ॥**
**निजश्रद्धानुमानेन, स तदैवाऽश्नुते फलम् ॥९७॥**

अन्वयः:- यः अन्तकाले अपि यावत् सुकृतं श्राव्यते । सः निजश्रद्धानुमानेन तावतः सुकृतस्य फलम् अश्नुते ॥९७॥

विवरणम्:- *यः पुरुषः अन्तस्य काल· अन्तकालः तस्मिन् अन्तकाले मरणसमये यावत् यत्प्रमाणमं सुकृतम् पुण्यं श्राव्यते । सः पुरुषः निजस्य स्वस्य श्रद्धा निजश्रद्धा स्वश्रद्धा। निजश्रद्धायाः अनुमानेन निजश्रद्धानुमानेन स्वश्रद्धानुमानेन तावतः तत्प्रमाणस्य सुकृतस्य पुण्यस्य फलम् अश्नुते प्राप्नोति ॥९७॥*

सरलार्थः:- यः पुरुषः अन्तकालेऽपि यावत् सुकृतं श्राव्यते। सः निजश्रद्धानुमानेन तावतः सुकृतस्य पुण्यस्य फलमाप्नोति ॥९७॥

**ગુજરાતી :- જે માણસને અંત વખતે પણ જેટલું સુકૃત સંભળાવાય છે તે મનુષ્ય પોતાની શ્રદ્ધાના અનુમાને કરીને તેટલા સુકૃતના ફળને તે જ વખતે પ્રાપ્ત કરે છે. ॥૯૭॥**

हिन्दी :- जिस आदमी को अंत समय में जितना सुकृत सुनाया जाता है, उतने सुकृत के फल को वह आदमी अपनी श्रद्धा के अनुमान द्वारा उसी वक्त प्राप्त कर लेता है॥९७॥

मराठी :- ज्या माणसांना अंतिम वेळी जितके सुकृत सांगण्यात येते, तितक्या सुकृतांचे फळ त्याला आपल्या श्रद्धेनुसार त्याच वेळी प्राप्त होते.॥९७॥

English :- The man who during his last hour, hears about the good works that shall be done in his name, shall attain its fruit according to his faith in God and his doings.

**ततः श्रावयिता पश्चाद्, विधत्ते मानितम् यदि।**
**तदा सोऽप्यनृणः पुण्य-भाग् भवेदन्यथा न तु ॥९८॥**

अन्वयः:- ततः श्रावयिता यदि मानितं पश्चात् विधत्ते तदा सः अपि अनृणः पुण्यभाग् भवेत्। किन्तु न करोति चेत् अन्यथा भवेत् ॥९८॥

विवरणम्:- ततः सुकृतं श्रावयिता यदि मानितं सुकृतं पश्चात् विधत्ते कुरुते तदा सः अपि न विद्यते ऋणं यस्य सः अनृणः ऋणरहितः पुण्यं भजतीति पुण्यभाक् भवेत्। किन्तु मानितं सुकृतम् न करोति चेत् अन्यथा विपरीतं भवेत् ॥९८॥

सरलार्थः:- ततः सुकृतं श्रावयिता यदि मानितं सुकृतं पश्चात् विधत्ते। तदा स अनृणः पुण्यभाक् भवति। न कुरुते तर्हि विपरीतं भवति ९८॥

ગુજરાતી :- ત્યાર પછી સુકૃત સંભળાવનાર જો માનેલું સુકૃત પાછળથી કરે તો તે માણસ પોતાના દેવામાંથી છૂટે છે અને પોતે પણ પુણ્યનો ભાગી બને છે, પણ જો ન કરે તો તેથી વિપરીત ફળ પામે છે. ॥૯૮॥

हिन्दी :- उसके बाद सुकृत सुनानेवाला यदि वह माना हुआ सुकृत बाद में कर ले तो वह मनुष्य अपने कर्ज में से छुट जाता है और वह भी (संकल्प लेनेवाला) पुण्य का भागीदार बनता है, लेकिन यदि वह न कर पायें तो उल्टा ही फल मिलता है॥९८॥

मराठी :- त्यानंतर सुकृत करण्याचे सांगणारा माणूस जर ते संकल्पित सुकृत नंतर करतो तर तो माणूस ऋणमुक्त होतो आणि स्वतःसुद्धा पुण्याचा हक्कदार होतो, पण तसें न केल्याने विपरीत परिणाम भोगावा लागतो.॥९८॥

English :- If the man who says that he shall perform virtuous deeds, taking it as a solemn volition for a dying man then he shall be free from the bondage of his sins and thus becomes a claimant of his resolved merits. But if the man is not able to do thus, he shall inherit a very severe punishment for having wrongly pacified the dying man.

**अश्रावितोऽपि श्रद्धत्ते, सुकृतं यः क्वचिद्गतौ ॥**
**जानन् ज्ञानादिभावेन, सोऽपि तत्फलमाप्नुयात् ॥९९॥**

अन्वयः:- यः अश्रावितः अपि सुकृतं श्रद्धत्ते, क्वचिद्, गतौ ज्ञानाविभावेन जानन् सोऽपि तत्फलम् आप्नुयात् ॥९९॥

विवरणम्:- यः सुकृतम् न श्रावितः तथापि सुकृतम् श्रद्धत्ते। ततः क्वचिद् कस्याञ्चित् गतौ ज्ञानभावो यस्य सः ज्ञानादिः। ज्ञानादिश्चासौ

*भावश्च ज्ञानादिभाव: तेन ज्ञानादिभावेन जानन् (जानाति) सोऽपि तस्य सुकृतस्य फलम् तत्फलम् सुकृतफलम् आप्नुयात्*

सरलार्थ:- य: सुकृतं न श्रावित: परं स्वयमेव सुकृतं श्रद्धत्ते। कस्याञ्चित् गतौ ज्ञानादिभावेन तद् जानाति सोऽपि तस्य सुकृतस्यफलमाप्नोति ॥९९॥

ગુજરાતી :- જે પ્રાણીને સુકૃત સંભળાવ્યું ન હોય, તો પણ જો તે સ્વયંમેવ સુકૃતની શ્રદ્ધા કરે અને પછી કોઈ પણ ગતિમાં જ્ઞાનાદિ ભાવથી જાણે તો તે પણ તે સુકૃતનું ફળ પ્રાપ્ત કરે છે. ॥૯૯॥

हिन्दी :- जिस प्राणी को सुकृत सुनाया न गया हो, फिर भी यदि वह स्वयंमेव सुकृत की श्रद्धा करेगा और बाद में कोई भी गति में ज्ञानादिभाव से जानेगा तो भी वह सुकृत का फल प्राप्त करता है।९९॥

मराठी :- ज्या प्राण्याला (अंतिम वेळी) सुकृत ऐकविलेले नसेल, तो सुध्दा जर सुकृतांवर श्रध्दा करील आणि नंतर कोणत्याही गतीमध्ये ज्ञानादिभावाने जाणून येईल तर तो सुध्दा सुकृत्यांचे फळ प्राप्त करील.॥९९॥

English :- But the man who has'nt mentioned about the virtuous deeds before a dying man but still performes what he had resolved to do for the dying man, then he shall surely receive his meritorious fruit, even if he goes into any levels of life, but only when he recollects about his good deed through, any of his *gyans* (knowledges).

Note - check note no - 39, for the four gyans.

अन्यथा सुकृतं तन्वन्, स्वजनः स्वजनाख्यया ॥
व्यवहारप्रीतिभक्ती-रेव ज्ञापयति ध्रुवम् ॥१००॥

अन्वयः:- अन्यथा स्वजनाख्यया सुकृतं तन्वन् स्वजनः व्यवहारप्रीतिभक्तीःएव ज्ञापयति ध्रुवम् ॥

विवरणम्:- येन कुटुम्बिना कुटुम्बिनः मरणकाले सुकृतं न श्रावितम् । सः कुटुम्बी तत् सुकृतं पश्चात् स्वजनस्य आख्यया स्वकुटुम्बिनः नाम्ना तनोति चेत् सः स्वजनः व्यवहारश्च प्रीतिश्च भक्तिश्च व्यवहारप्रीतिभक्तयः ताः व्यवहारप्रीतिभक्तीः व्यवहारं, मृते प्रीतिं भक्तिम् एव ज्ञापयति, इत्यत्र नास्ति सन्देहः ॥

ગુજરાતી :- જે કુટુંબીએ પોતાના કુટુંબીના અંતકાળે જે સુકૃત સંભળાવ્યું ન હોય તે સુકૃત પાછળથી પોતાના કુટુંબીના નામે કરે તો તે ખરેખર વ્યવહાર સાચવે છે, અને મરનાર ઉપરની પોતાની પ્રીતી અને ભક્તિ જ વ્યક્ત કરે છે. ॥૧૦૦॥

हिन्दी :- जिस कुटुम्बी ने अपने कुटुम्बी के अन्तकाल में सुकृत (पुण्य) सुनाया नहीं वह कुटुम्बी बाद में अपने कुटुम्बी के नाम से सुकृत करता है तो वह सचमुच व्यवहार संभालता है और मरनेवाले के ऊपर अपना प्रेम और भक्ति प्रकट करता है ॥१००॥

मराठी :- ज्यां गृहस्थाने आपल्या कुटुंबातील व्यवतीला अन्तकाळीं पुण्य ऐकविले नाही, तो गृहस्थ नंतर आपल्या कुटुंबातील त्या व्यवतीच्या नांवाने पुण्य करतो तर तो खरोखर व्यवहार सांभाळतो. आणि मेलेल्या व्यवतीवरील आपलें प्रेम आणि भवतीच प्रकट करतो.॥१००॥

English :- The householder who has'nt preached to his family regarding virtuous deeds in their long span of life, but then in future does the virtuous deeds on behalf of his family means, he has carried out in practice, the law of observance and has manifested his love and devotion on the dying man.

अथ तस्मिंस्तिरोभूते, व्यन्तरे क्षोणिनायकः॥
साक्षात् पुण्यफलं दृष्ट्वा-ऽभवत्तत्रैव सादरः ॥१०१॥

अन्वयः- अथ तस्मिन् व्यन्तरे तिरोभूते सति क्षोणिनायकः पुण्यफलं साक्षात् दृष्ट्वा तत्रैव सादरः अभवत् ॥१०१॥

*विवरणम्:- अथ अनन्तरं तस्मिन् व्यन्तरे तिरोभूते अदृश्ये सति क्षोणेः पृथ्व्याः नायकः क्षोणिनायकः पृथ्वीनाथः समुद्रनृपः पुण्यस्य सुकृतस्य फलं पुण्यफलं साक्षात् प्रत्यक्षतः वैरिसन्धरूपेण दृष्ट्वाऽवलोक्य तत्र तस्मिन् पुण्यकर्मणि एव आदरेण सह वर्ततेऽसौ सादरः आदरवान् अभवत् अभूत् ॥१०१॥*

सरलार्थः- अनन्तरम् तस्मिन् व्यन्तरेऽदर्शनताम् गते सति सः समुद्रनृपः पुण्यस्य फलं साक्षात् दृष्ट्वा पुण्यकर्मणि एव आदरवान् अभवत् ॥१०१॥

ગુજરાતી :- હવે તે વ્યંતરદેવ અદૃશ્ય થઈ ગયા પછી, રાજા સમુદ્રપાલ પુણ્યનું પ્રત્યક્ષ ફલ દેખી પુણ્યોપાર્જન કરવામાં જ આદરયુક્ત થયો. ॥૧૦૧॥

हिन्दी :- तब वह व्यंतर देव अदृश्य हो जाने के बाद राजा समुद्रपाल, पुण्य का ऐसा प्रत्यक्ष फल देखकर पुण्योपार्जन करने की प्रवृत्तियों में और भी आदरयुक्त हो गया॥१०१॥

मराठी :- जेव्हा तो व्यंतरदेव अदृश्य झाला तेव्हां, राजा समुद्रपाल पुण्याचे असे प्रत्यक्ष फळ पाहून पुण्योपार्जन करण्यामध्ये आणखी आदरयुक्त झाला.॥१०१॥

English :- After the divine being had dissappeared, King Samudrapal who had personally tasted the fruit of practicing meritorious deeds, was now passionately enthusiastical to demonstrate a continuous flow of meirtable actions.

**बुद्धिम् बन्धोरपि श्रेयो-विषये काङ्क्षताऽन्यदा ॥**
**तामलिप्त्याम् तदाहूति-हेतोः प्रैषि निजो नरः ॥१०२॥**

अन्वयः:- बन्धोः अपि श्रेयोविषये बुद्धिम् काङ्क्षता समुद्रनृपेण अन्यदा तामलिप्त्याम् तदाहुतिहेतोः निजः नरः प्रैषि ॥१०२॥

विवरणम्:- *बन्धोः अपि स्वानिष्टकारिणः भ्रातुः सिम्हस्य अपि श्रेयसः कल्याणस्य विषयः श्रेयोविषयः तस्मिन् श्रेयोविषये कल्याणविषये बुद्धिम् काङ्क्षता बन्धोः कल्याणमिच्छता समुद्रनृपेण अन्यदा एकस्मिन् दिवसे तामलिप्त्याम् नगर्याम् तस्य आहूतिः आह्वानम् तदाहूतिः। तदाहूतेः हेतोः तदाहूतिहेतोः तमाह्वातुम् निजः नरः सेवकः प्रैषि प्राहीयत॥१०२॥*

सरलार्थ:- स्वानिष्टकारिणः अपि आत्मनः कनीयसो भ्रातुः सिम्हस्य कल्याणम् इच्छन् समुद्रनृपः एकस्मिन् दिने तम् भ्रातरमाह्वातुम् निजम् सेवकम् तामलिप्त्याम् प्राहिणोत् ॥१०२॥

ગુજરાતી :- પોતાના લઘુ બાંધવ સિંહે જો કે પોતાનું અનિષ્ટ કરેલું હતું, છતાં "કોઇ પણ રીતે તેનું શ્રેય થાય તો સારું" એમ વિચારી તેનું કલ્યાણ કરવાની બુદ્ધિથી સજ્જન સ્વભાવી સમુદ્રપાલે એક દિવસ તામલિપ્તી નગરીમાં તેને બોલાવવા માટે પોતાના વિશ્વાસુ માણસને મોકલ્યો. ॥૧૦૨॥

हिन्दी :- यद्यपि अपने छोटे भाई सिंह ने अपना अनिष्ट ही किया था फिर भी "किसी भी तरह से उसका कल्याण हो तो अच्छा" ऐसा सोच के उसका कल्याण करने की इच्छा से सज्जन स्वभाववाले समुद्रपाल ने एक दिन तामलिमी नगरीं मे उसको बुला लाने के लिये अपने एक विश्वासु आदमी को भेजा ॥१०२॥

मराठी :- जरी आपल्या धाकट्या भावाने सिंहाने आपले अनिष्ट्च केले होते तरी, "कोणत्या ही तऱ्हेने त्याचे कल्याण झाले पाहिजे." असा विचार करून त्या सज्जन स्वभावांच्या समुद्रपाल राजाने एके दिवशी तामलिप्ती नगराहून त्याला बोलवण्यासाठी आपल्या एका विश्वासू माणसाला 'तामलिप्ती' नगराला पाठविले.॥१०२॥

English :- Now King Samudrapal, who always had a soft corner for his brother Sinh (who had done obnoxious and forbidding deeds) began craving for the wellbeing of his brother. So he send his trusted man to the city of Tamlipati to fetch him.

स तत्र गत्वाऽऽगत्यार्थम्, प्रोचे सिम्होऽस्ति तत्र न ॥
प्रपलाय्य गतः क्वापी-त्यापि शुद्धिः पुरे न तु ॥१०३॥

अन्वयः:- अथ सः तत्र गत्वा आगत्य म् प्रोचे सिम्हः तत्र नाऽस्ति। प्रपलाय्य क्व अपि गतः। पुरे तस्य शुद्धिः न आपि ॥

विवरणम्:- अथ सः सेवकः तत्र तस्याम् तामलिप्त्याम् नगर्याम् गत्वा प्रत्यागत्याऽर्थम् प्रोचे प्राब्रवीत्। सिम्हः तत्र तामलिप्त्याम् न अस्ति। स. प्रपलाय्य क्वापि गतः अस्ति। पुरे नगर्यामन्विष्यमाणेऽपि तस्य शुद्धिः शोधः न आपि न प्राप्यत, इति ॥१०३॥

सरलार्थः:- अनन्तरम् सः सेवकः तामलिप्त्याम् गत्वा प्रत्यागत्य प्राब्रवीत् - सिम्हः तस्याम् तामलिप्त्याम् नास्ति। स प्रपलाय्य क्वापि गतः। नगर्याम् शुद्धौ कृतायामपि क्वापि शुद्धिः न प्राप्यत ॥१०३॥

ગુજરાતી :- તે માણસ તામ્રલિપ્તી નગરીમાં જઇને પાછો આવ્યો, અને કહ્યું કે - "સિંહ તામ્રલિપ્તી નગરીમાં નથી અને નાસીને ક્યાં ગયો છે તેની પણ તપાસ કરવા છતાં પણ ભાળ મળી શકી નથી."॥૧૦૩॥

हिन्दी :- वह आदमी तामलिसी नगरी में जाकर वापस आ गया और उसने बताया कि, "सिंह तामलिसी नगरीमें नहीं है और वह भागकर कहीं चला गया है उसकी बहुत तलाश करने के बाद भी वह मिला नहीं॥१०३॥

मराठी :- तो माणूस तामलिप्ती नगरीत जाऊन परत आला आणि म्हणाला, "सिंह तामलिप्ती नगरीमध्ये नाही आणि तेथून तो पळून कुठे आहे त्याचा खुप शोध घेतला तरी ही तो सापडला नाही." ॥१०३॥

English :- The man in due course returned with the news that he had searched for Sinh high and low, but to no avail, as he had run away to some unknown place.

न्यायेन पालयन् राज्यम्, प्रत्यब्दम् स्वकुटुम्बयुक् ॥
यात्रा अनेकशः कुर्वम्-श्चिरम् सौख्यमभुङ्क्त सः॥१०४॥

अन्वयः- न्यायेन राज्यम् पालयन् प्रत्यब्दम् स्वकुटुम्बयुक् अनेकशः यात्राः कुर्वन् सः चिरम् सौख्यम् अभुङ्क्त ॥१०४॥

*विवरणम्:- न्यायेन राज्यम् पालयन् रक्षन् प्रत्यब्द प्रतिवर्षम् स्वस्य कुटुम्बम् स्वकुटुम्बम् तेन स्वकुटुम्बेन युज्यतेऽसौ स्वकुटुम्बयुक्, स्वकुटुम्बेन साकम् अनेकशः अनेकाः यात्राः कुर्वन् विदधत् सः समुद्रनृपः चिरम् चिरकालम् सुखमेव सौख्यम् अभुङ्क्त भुक्तवान् ॥०४॥*

सरलार्थ:- सः समुद्रनृपः न्यायेन राज्यम् अपालयत्। प्रतिवर्षम् कुटुम्बेन सह अनेकाः यात्राः अकरोत्। चिरम् सुखम् अभुङ्क्त च ॥१०४॥

ગુજરાતી :- સમુદ્રપાલ નીતિથી પોતાના રાજ્યનું પાલન કરવા લાગ્યો અને પ્રત્યેક વર્ષે શત્રુંજયાદિ તીર્થોની અનેક યાત્રાઓ કરી સુખ ભોગવવા લાગ્યો. ॥૧૦૪॥

हिन्दी :- समुद्रपाल राजा नीति से राज्य का पालन करने लगा और हर साल शत्रुंजय आदि तीर्थों की अनेक यात्राएँ करते हुए बहुत लंबे काल तक सुख भोगता रहा॥१०४॥

मराठी :- समुद्रपाल राजा नीतीने राज्याचे पालन करू लागला आणि प्रतिवर्षी शत्रुंजय इत्यादी तीर्थांची परिवारासह यात्रा करीत पुष्कळ वर्षापर्यंत सुख भोगू लागला.॥१०४॥

English :- Now King Samudrapal began nuturing his Kingdom and carried out several pilgrimages every year thus attaining untold bliss to come.

अभूतपूर्वम् - श्रुत्वा त-द्वैरनिर्यातनम् नृपाः ॥
कम्पमानाः साभिमाना, अप्यस्मै नेमिरे स्वयम् ॥१०५॥

अन्वयः- साभिमानाः नृपाः अपि तद् अभूतपूर्वम् वैरनिर्यातनम् श्रुत्वा कम्पमानाः स्वयम् अस्मै नेमिरे ॥१०५॥

*विवरणम्:-* *अभिमानेन गर्वेण सह वर्तन्ते इति साभिमाना: सगर्वा: अपि इतरे नृपा: राजान:तद् पूर्वम् न भूतम् इति अभूतपूर्वम् वैरस्य निर्यातनम् वैरनिर्यातनम् वैरप्रतिशोधम् श्रुत्वा आकर्ण्य तस्य पुण्यप्रभावात् कम्पमाना: वेपमाना: सन्त: स्वयम् अस्मै समुद्रनृपाय नेमिरे नेमु:॥१०५॥*

सरलार्थ:- इतरे नृपा: अभिमानेन सहवर्तमाना: अपि तस्य अभूतपूर्वम् वैरनिर्यातनम् श्रुत्वा कम्पमाना: सन्त: स्वयमेव तम् समुद्रनृपम् प्रणेमु: ॥१०५॥

ગુજરાતી :- ભિન્ન ભિન્ન દેશના રાજાઓ અભિમાની અને પરાક્રમી હોવા છતાં પણ, પૂર્વે કદાપિ નહીં અનુભવેલો વેરનો બદલો સાંભળી, તેના પુણ્યપ્રતાપથી કંપાયમાન થતા પોતાની મેળે જ નમવા લાગ્યા. ॥૧૦૫॥

हिन्दी :- भिन्न भिन्न देश के राजा अभिमानी और पराक्रमी होने पर भी, पहले कभी अनुभव नहीं की हुई दुश्मनी के बदले की बात सुनकर, उसके पुण्यप्रताप से कांपते हुए स्वयं उसको नमन करने लगे ॥१०५॥

मराठी :- वेगवेगळ्या देशांचे राजा, यद्यपि अभिमानी व पराक्रमी होते, तरीसुद्धा आधी कधीही अनुभवात न आलेली वैराच्या बदलाची गोष्ट ऐकून, त्याच्या पुण्याने कांपत स्वत:च त्याला नमस्कार करू लागले.॥१०५॥

English :- The Kings of different states who were arrogant and valiant and who had never experienced or heard about any other king who had never carressed feelings of revenge, other than Samudrapal, began shivering with fright after personally experiencing the majestic splendour of King Samudrapal's meritable deeds and thus bowed down to him with utmost respect.

**राज्ये न्यस्य सुतम् ज्येष्ठम्, लक्ष्मीम् कृत्वाथ पुण्यसात् ॥**
**समुद्रपालो वैराग्याद्, व्रतमादत्त सद्गुरोः ॥१०६॥**

अन्वय:- अथ समुद्रपाल: राज्ये ज्येष्ठम् सुतम् न्यस्य लक्ष्मीम् पुण्यसात् कृत्वा वैराग्यात् सद्गुरो: व्रतम् आदत्त ॥१०६॥

*विवरणम्:-* *अथ अनन्तरम् समुद्रपाल: राज्ये ज्येष्ठम् सुतम् पुत्रम् न्यस्य निवेश्य लक्ष्मीम् सम्पदम् पुण्यसात् पुण्यकर्माधीनाम् (तदधीने*

सात्) कृत्वा विधाय विगतः रागः यस्मात् यस्य वा सः विरागः। विरागस्य भावः वैराग्यम् तस्मात् वैराग्यात् सर्वत्र विरागभावतः सन् चासौ गुरुश्च सद्गुरुः, तस्मात् सद्गुरोः व्रतम् दीक्षामादत्त जग्राह।।१०६।।

**सरलार्थः-** अनन्तरम् समुद्रपालः ज्येष्ठम् पुत्रम् राज्ये समस्थाप्य लक्ष्मीम् पुण्यकर्मसु व्ययिताम् कृत्वा वैराग्यात् सद्गुरोः दीक्षाम् जग्राह।।१०६।।

**गुजराती :-** पवित्रात्मा समुद्रपाल राजाओ नीतिपूर्वक घणां वर्ष राज्य कर्युं. छेवटे पोताने वैराग्य थवाथी मोटा पुत्रने राज्य उपर स्थापन कर्यो, अने पुण्यार्थे सारां कार्योमां लक्ष्मीनो व्यय करी सद्गुरु पासे दीक्षा अंगीकार करी. ।।१०६।।

**हिन्दी :-** पवित्र आत्मा समुद्रपाल राजाने नीति से बहुत साल तक राज्य किया। अंत में स्वयं को वैराग्य होने पर बड़े पुत्र को राज्य देकर, पुण्य के लिये अच्छे कामों में लक्ष्मी का व्यय करके सद्गुरु से दीक्षा ली।।१०६।।

**मराठी :-** पवित्र आत्मा अशा त्या समुद्रपालाने नीतीने खूप वर्ष राज्य केले. नंतर वैराग्य प्राप्त झाल्यामुळे मोठ्या पुत्राला राज्य देऊन, पुण्यासाठी चांगल्या कामात लक्ष्मीचा खर्च करून स्वतः सद्गुरू कडून दीक्षा घेतली.।।१०६।।

**English :-** The incontaminated and pure soul of Samudrapal ruled his kingdom for many years. Then he began developing feelings of asceticism. So he placed his elder son on the throne, lavishly spend money on meritocratic deeds and then in due-course renounced the worldly life and embraced asceticism, in the presence of the priest Sadguru.

अथैकविंशतिधनान्, साधितानशनः शमी।।
जज्ञे सर्वार्थसिद्धाख्ये, विमानेऽनुत्तरे सुरः ।।१०७।।

**अन्वयः-** अथ शमी एकविंशतिधनान् साधितानशनः सर्वार्थसिद्धाख्ये अनुत्तरे विमाने सुरः जज्ञे।।१०७।।

**विवरणम्:-** अथ अनन्तरम् शमः अस्यास्तीति शमी मनोनिग्रहवान् साधितम् विहितम् अनशनम् येन सः साधितानशनः विहितोपवासः सर्वार्थसिद्धनाम्नि देवलोके अनुत्तरे विमाने सुरः देवः जज्ञे अजनि।।१०७।।

सरलार्थ:- अनन्तरम् मनोनिग्रहवान् स समुद्रपाल: एकविम्शतिदिनानि अनशनम् कृत्वा सर्वार्थसिद्धदेवलोके अनुत्तरे विमाने अमरत्वेन अजनि ॥१०७॥

ગુજરાતી :- વૈરાગ્યમાં મગ્ન બનેલા તે સમુદ્રપાલ મહામુનિ શાંતિપૂર્વક એકવીશ દિવસ અનશન કરી સર્વાર્થસિદ્ધ નામના દેવલોકમાં અનુત્તર વિમાનમાં દેવપણે ઉત્પન્ન થયા.॥૧૦૭॥

हिन्दी :- वैराग्य में मग्न बनकर वह समुद्रपाल महामुनि शांतिपूर्वक एक्कीस दिन अनशन कर के ''सर्वार्थसिद्ध'' नाम के देवलोक में अनुत्तर विमान में देव बना॥१०७॥

मराठी :- वैराग्यात मग्न झालेले समुद्रपाल महामुनि शांतीने एकवीस दिवसपर्यंत उपोषण करून सर्वार्थ सिद्ध नावांच्या देवलोकांत अनुत्तर विमानांत देव् झाले.॥१०७॥

English :- Samudra who was now a priest, was plunged in the joy of meditation and thus experienced utmost peace. He abstinated for twenty one days and then became a God in a heaven named "Sarvarthsiddh" and in a Viman named anuttar.

Note : Viman - There are in all twelve devloks (heavens) Above these heavens there are nine Greiveyeake's. Above these there are five anuthtars. In the fifth anuthtar lies "Sarvarthesidde" which is the name of a Viman.

The people who enters this fifth Viman has to only take birth on the earth once after they have completed their age in this Viman. Then when death devours them on this earth, they attain salvation.

ततश्च्युत्वा कुलम् शुद्धम्, लब्ध्वा सम्यमराज्यत: ॥
आसाद्य केवलम् ज्ञानम्, मोक्षसौख्यमवाप स: ॥१०८॥

अन्वय:- तत:च्युत्वा सम्यमराज्यत: शुद्धम् कुलम् लब्ध्वा केवलम् ज्ञानम् आसाद्य स: मोक्षसौख्यम् अवाप ॥१०८॥

विवरणम्:- ततः अनुत्तरविमानतः च्युत्वा स्खलित्वा सम्यमस्य राज्यम् सम्यमराज्यम् तस्मात् सम्यमराज्यात् पूर्वस्मिन् भवेऽधिगतसम्यमराज्यप्रभावात् शुद्धम् विशुद्धम् पवित्रम् कुलम् लब्ध्वा प्राप्य केवलम् ज्ञानम् आसाद्य अधिगम्य मोक्षस्य सुखमेव सौख्यम् मोक्षसौख्यम् अव्याबाधसुखमवाप प्राप्नोत्॥१०८॥

सरलार्थ:- ततोऽनुत्तरविमानतः च्युत्वा सम्यमप्रभावात् विशुद्धम् कुलम् लब्ध्वा केवलम् ज्ञानमासाद्य सः मोक्षसुखमवाप ॥१०८॥

ગુજરાતી :- ત્યાંથી ચ્યવીને પૂર્વ ભવમાં પ્રાપ્ત કરેલા શ્રેષ્ઠ ચારિત્ર્યરુપ રાજ્યના બળથી ઉત્તમ કુળ પામીને કેવલજ્ઞાન પ્રાપ્ત કરી મોક્ષે ગયા. ॥૧૦૮॥

हिन्दी :- वहाँ से आयुष्य पूर्ण करके पूर्वभव में प्राप्त किये हुए श्रेष्ठ चारित्र्यरूपी राज्य के बल से उत्तम कुल में जनम लेकर केवलज्ञान प्राप्त कर मोक्ष में गए॥१०८॥

मराठी :- तेथून च्युत होऊन, पूर्वजन्मांत प्राप्त केलेल्या श्रेष्ठ चारित्रस्वरूपी राज्याच्या बळामुळे उत्तम कुळात जन्म घेऊन केवल ज्ञान प्राप्त करून मोक्षांत गेला.॥१०८॥

English :- After having consumated his life-time there in heaven he was born in an illustrious family, because of his past character that excelled beyond limits and due to which he procured a kingdom. And when he had consumated his age here he attained supreme knowledge and in due course obtained kevalgyan.

इतश्च तामलिप्त्याम् स, सिम्हः श्रुत्वा स्वबान्धवम् ॥
राज्ञा विसृष्टम् सत्कृत्य, यात्रार्थम् सत्यभाषणात् ॥१०९॥
निजाऽऽगःशङ्कया सर्वमादाय सपरिच्छदः ॥
जगाम सिम्हलद्वीपम्, पोतमारुह्य तत्क्षणात् ॥११०॥

अन्वय:- इतः तामलिप्त्याम् सः सिम्हः स्वबान्धवम् सत्यभाषणात् सत्कृत्य राज्ञा यात्रार्थम् विसृष्टम् श्रुत्वा - ॥१०९॥ निजागःशङ्कया सपरिच्छदः सर्वमादाय पोतम् आरुह्य तत्क्षणात् सिम्हलद्वीपम् जगाम ॥११०॥

विवरणम्:- इत: तामलिप्त्याम् नाम नगर्याम् स: सिम्हः (समुद्रपालस्य कनीयान् भ्राता) स्वस्य बान्धवः स्वबान्धवः तम् स्वबान्धवम् स्वबन्धुम् समुद्रम् सत्यस्य भाषणम् सत्यभाषणम् तस्मात् सत्यभाषणात् सत्यवृतान्तकथनात् सत्कृत्य सम्मान्य राज्ञा नृपेण यात्रार्थम् यात्रायै विसृष्टम् विमुक्तम् श्रुत्वा पोतमारुह्य सिम्हलद्वीपम् जगाम ॥१०९॥

निजस्य आगः निजागः निजागसः शङ्का निजागःशङ्का तया निजागःशङ्कया निजापराधभीत्या परिच्छदेन परिवारेण सह वर्ततेऽसौ सपरिच्छदः सपरिवारः सर्वम् वस्तुजातम् आदाय गृहीत्वा पोतम् नावम् आरुह्य तत्क्षण एव सिम्हलनामानम् द्वीपम् जगाम ययौ ॥११०॥

सरलार्थ:- इतः तामलिप्त्याम् नगर्याम् स: सिम्हः स्वभ्रातरम् समुद्रम् सत्यभाषणात् नृपः अमुश्चत्। सत्कारम् कृत्वा च यात्रायै व्यसृजत् इति श्रुत्वा सिम्हलद्वीपम् जगाम ॥१०९॥।

निजापराधभयेन स सिम्हः परिवारेण सह सर्वम् वस्तुजातम् आदाय नावमारुह्य तत्क्षण एव सिम्हलद्वीपम् जगाम ॥११०॥

ગુજરાતી :- હવે તામલિપ્તી નગરીમાં સમુદ્રપાલનો નાનો ભાઈ સિંહ હતો તેણે પોતાના મોટા ભાઈને કષ્ટમાં નાખવા માટે રાજાને ભંભેર્યો હતો, પણ સમુદ્રપાલે સત્ય હકીકત જાહેર કરવાથી છેવટે સત્યનો વિજય થયો, અને તેથી સમુદ્રપાલને દંડ કરવાને બદલે તેનો ઉલટો સત્કાર કરી રાજાએ શત્રુંજયની યાત્રા માટે વિદાય કર્યો હતો.॥૧૧૦॥

हिन्दी :- अब तामलिप्ती नगरी में समुद्रपाल का छोटाभाई सिंह था, उसने ही बडेभाई को तकलीफ देने के इरादे से राजा को भडकाया था, लेकिन वास्तव में उसके सत्य बोलने से राजा ने उसका सत्कार कर उसे यात्रा जाने के लिये विदा किया यह सुनकर स्वयं गुन्हेगार बन जाने की शंका से सिंहने परिवारसहित अपना सब कुछ साथ लेकर उसी क्षण जहाज पर चढकर समुद्र के रास्ते से सिंहलद्वीप को प्रयाण किया ॥११०॥

मराठी :- आता तामलिप्ती नगरामध्ये समुद्रपालांचा लहान भाऊ सिंह होता त्यांनेच मोठ्या भावाना अडचणीत टाकण्यासाठी राजाला त्यांच्या विरूद्ध सांगितले होते पण घडले असे की राजाने त्यांच्या सत्य बोलण्याने त्याचा बहुमान करून त्याला तीर्थयात्रेस जाण्यासाठी निरोप दिला. हे ऐकतानाच स्वतः गुन्हेगार ठरण्याच्या भीतीने सिंहाने आपली सर्व मालमत्ता गुंडाळून

परिवारासोबत जहाजावर चढून सिंहलद्वीपाकडे जाण्यासाठी प्रयाण केले.॥११०॥

English :- Now Samudrapal's younger brother Sinh, who had evil intentious of putting his brother in distress by instigating the king against him. But when the king realized the truth, he atonce felicitated Samudrapal and bid him farewell, for the pilgrimage. Now when Sinh found himself in the lurch, he atonce collected his belongings and his family and sailed towards Sinhaldveep.

**राजप्रसादम् तत्राप्य, दन्तिदन्तजिघृक्षया ॥**
**घोरे स्वयमरण्येऽगा-दलाभादन्यवस्तुनः ॥१११॥**

अन्वयः- स तत्र राजप्रसादम् आप्य अन्यवस्तुनः अलाभात् दन्तिदन्तजिघृक्षया स्वयम् घोरे अरण्ये अगात् ॥१११॥

विवरणम्:- *सः सिम्हः तत्र तस्मिन् सिम्हलद्वीपे राज्ञः प्रसादः राजप्रसादः तम् राजप्रसादम् राजकृपाम् आप्य अन्यत् च तद् वस्तु चाऽन्यवस्तु तस्य अन्यवस्तुनः लाभो न भविष्यतीति कृत्वा दन्तौ एषाम् स्तः इति दन्तिनः द्विरदाः गजाः दन्तिनाम् हस्तिनाम् दन्ताः दन्तिदन्ताः हस्तिदन्ताः। दन्तिदन्तान् ग्रहीतुम् इच्छा दन्तिदन्तजिघृक्षा, तया दन्तिदन्तजिघृक्षया हस्तिदन्तान् ग्रहीतुम् इच्छया स्वयमेव घोरे भयानके अरण्ये वने अगात् अयात् ॥१११॥*

सरलार्थ:- स सिम्हःतस्मिन् सिम्हलद्वीपे राजप्रसादम् अधिगम्य अन्यवस्तूनाम् क्रयणात् लाभो न भविष्यतीति मत्वा हस्तिदन्तान् ग्रहीतुमिच्छया स्वयम् घोरे वने अगात् इयाय. ॥१११॥

ગુજરાતી :- સિંહલદ્વીપમાં સિંહે ત્યાંના રાજાની મહેરબાની મેળવી. પછી અન્ય વસ્તુઓની ખરીદીથી લાભ ન થતાં હાથીદાંત ગ્રહણ કરવાની ઈચ્છાથી પોતે ઘોર અરણ્યમાં ગયો.॥૧૧૧॥

हिन्दी :- सिम्हल द्वीपमें जा कर सिंह ने वहाँ के राजा की मेहरबानी प्राप्त कर ली। फिर अन्य वस्तु की खरीदी से कोई लाभ नही होगा ऐसा जानकर हाथीदाँत जमा करने की, इच्छा से स्वयं एक घने जंगल में गया ॥१११॥

मराठी :- सिंहलद्वीपांत जाऊन सिंहाने तेथील राजाची कृपा (मर्जी) संपादन केली. नंतर इतर वस्तूंच्या खरेदीमुळे काही लाभ होणार नाही असे वाटल्याने तो हत्तीदात गोळा करण्याच्या इच्छेने स्वयं एका निबिड अरण्यात गेला.॥१११॥

English :- After having settled in Sihaldueep, he gained the goodwill of the king of that dueep. Now Sinh realized that he would'nt gain profit in mere trade so he decided to engage himself in an extraordinary trade, as trading in tusks. So with the intention of collecting them, he entered a thick forest.

स तत्र दन्तिवधकै - र्दन्तवृन्दान्यथाऽऽनयत् ॥
पापद्रव्येण यत् पापे-ष्वेव बुद्धिः प्रजायते ॥११२॥

अन्वयः- अथ स तत्र दन्तिवधकैः दन्तवृन्दानि आनयत्। यत् पापद्रव्येण पापेषु एव बुद्धिः प्रजायते॥११२॥

*विवरणम्:- अथ वनगमनात् अनन्तरम् सः सिम्हः तत्र तस्मिन् विपिने दन्तिनाम् हस्तिनाम् वधकाः घातकाः दन्तिवधकाः तैः दन्तिवधकैः हस्तिघातकैः दन्तानाम् वृन्दानि समूहाः दन्तवृन्दानि हस्तिदन्तसमूहान् आनयत्, यतः पापश्चम् तद् द्रव्यम् च पापद्रव्यम् तेन पापद्रव्येण पापधनेन पापेषु पापकर्मसु एव बुद्धिः मतिः प्रजायते उत्पद्यते ॥११२॥*

सरलार्थः- वनगमनात् अनन्तरम् सः सिम्हः तस्मिन् विपिने दन्तिवधकैः हस्तिदन्तान् आनयत् । यतः पापद्रव्येण पापकर्मसु एव बुद्धिः प्रजायते ॥११२॥

ગુજરાતી :- તે જંગલમાં હાથીનો વધ કરનાર માણસો દ્વારા હાથીદાંત મંગાવીને ખરીદ કર્યા. ખરેખર શાસ્ત્રકારોએ સત્ય જ વચન કહ્યું છે કે પાપથી સંચય કરેલ ધનથી પાપકારી અધમ કૃત્યો કરવાની જ બુદ્ધિ ઉત્પન્ન થાય છે. આપણામાં પણ એક સાદી કહેવત છે કે, 'અન્ન તેવો ઓડકાર' માટે નીતિયુક્ત ધન ઉપાર્જન કરવામાં પ્રયત્નશીલ બનવું જોઈએ.॥૧૧૨॥

हिन्दी :- उस जंगल में हाथी का शिकार करनेवाले आदमियों द्वारा हाथीदाँत मंगाकर खरीदे। सचमुच शास्त्रकारों ने सत्य ही कहा है कि, "पाप से संचित किया हुआ धन, पापकारी अधम कार्य करने की ही प्रेरणा देगा।" अपने में भी एक लौकिक सादी

कहावत है, "जैसा अन्न वैसा ही डकार"। इसलिये समझदार लोगों को नीतियुक्त धन उपार्जन करने में ही उद्यत रहना चाहिये॥११२॥

मराठी :- त्या जंगलात हत्तीचा वध करणाऱ्या लोकांकडून त्याने हत्तीदात मागवून खरेदी केले. खरच शास्त्रकारांनी म्हटलं आहे की "पापाने एकत्रित केलेले धन पापकारी अधर्म कार्य करण्याचीच प्रेरणा देते." दुसरी साधी लौकिक म्हण अशी की "जसे अन्न तसेच त्याचे ढेकर" म्हणून बुद्धिमान् लोकांनी नीतीने धनाची उपार्जना करण्यात उद्यत राहावे.॥११२॥

English :- He purchased those tusks from those men who used to capture elephants, in that forest. It is actually mentioned in the holy books, that wealth obtained by wicked means, will command a man to commit only trangressive (sinful) deeds. A popular proverb quotes that one gets blurbs as per his food he has eaten. Therfore intelligent men should always aquire wealth through proper and an appropriate manner.

भृत्वा चत्वारि यानानि, दन्तैर्वारिधिवर्त्मना ॥
मुक्त्वा कुटुम्बम् तत्रैव, सुराष्ट्रान् प्रति सोऽचलत् ॥११३॥

अन्वयः- सः दन्तैः चत्वारि यानानि भृत्वा कुटुम्बम् तत्र एव मुक्त्वा वारिधिवर्त्मना सुराष्ट्रान् प्रति अचलत् ॥११३॥

*विवरणम्:- सः सिम्हः दन्तैः हस्तिदन्तैः चत्वारि यानानि प्रवहणानि भृत्वा आपूर्य कुटुम्बम् परिवारम् तत्र एव सिम्हलद्वीपे एव मुक्त्वा वारीणि धीयन्ते यस्मिन् सः वारिधिः समुद्रः। वारिधेः समुद्रस्य मार्गः अध्वा वारिधिमार्गः तेन वारिधिमार्गेण समुद्राध्वना सुराष्ट्रान् देशान् प्रति अचलत् अचालीत् ॥११३॥*

सरलार्थः- सः सिम्हः हस्तिदन्तैः चत्वारि यानानि आपूर्य कुटुम्बम् सिम्हलद्वीपे एव मुक्त्वा वारिधिमार्गेण सौराष्ट्रान् अचलत् ॥

ગુજરાતી :- હવે સિંહે ત્યાં હાથીદાંત ખરીદ કરી ચાર વહાણ ભર્યા અને પોતાના કુટુંબને ત્યાં જ મુકી સમુદ્રમાર્ગે સોરઠ દેશ તરફ ચાલ્યો. ॥૧૧૩॥

हिन्दी :- अब सिंहने वहाँ हाथीदांत की खरीदी कर के चार जहाज भरे, और अपने परिवार को वहीं छोडकर समुद्र के मार्ग मे सोरठ देश की तरफ चल निकला॥११३॥

मराठी :- त्या सिंहाने तेथे हाथीदातांची खरेदी करुन त्यांचे चार जहाज भरले आणि आपल्या कुटुंबाला तिथेच ठेवून तो समुद्रमार्गाने सोरठ देशाकडे रवाना झाला.॥११३॥

English :- Now Sinh purchased about four ships full of tusks and departed towards the state of Sorat to trade, leaving his family behind.

**तीर्त्वा समुद्रम् क्षेमेण, सुराष्ट्रतटसङ्कटे ॥**
**भग्नानि तानि यानानि, न हि श्रेयोऽतिपापिनाम् ॥११४॥**

अन्वयः- क्षेमेण समुद्रम् तीर्त्वा सुराष्ट्रतटसङ्कटे तानि यानानि भग्नानि। तथाहि अतिपापिनाम् श्रेयः न भवति ॥११४॥

विवरणम्:- *क्षेमेण कल्याणेन समुद्रम् तीर्त्वा सुराष्ट्राणाम् तटः सुराष्ट्रतटः, सुराष्ट्रतटस्य सङ्कटे समीपे सुराष्ट्रतटसङ्कटे सुराष्ट्रतटसमीपे तानि यानानि प्रवहणानि भग्नानि छिन्नानि अभज्यन्त। तथाहि अतिशयेन पापमेषामस्तीति अतिपापिनः तेषामतिपापिनाम् श्रेयः कल्याणम् न भवति॥११४॥*

सरलार्थः- समुद्रमार्गेण गच्छन् स सिम्हः क्षेत्रेण समुद्रमतरत्। परम् यदा सुराष्ट्रतटसमीपमागतः, तदा तस्य वाहनानि भग्नानि। तथाहि अतिपापिनाम् श्रेयः (कल्याणम्) न भवति ॥११४॥

ગુજરાતી :- સમુદ્રમાર્ગે જતાં જતાં ઠેઠ સુધી જલમાર્ગ કુશલતાપૂર્વક ઓળંગ્યો, પણ સોરઠ દેશના કિનારા નજીક આવતા અચાનક કોઈ ખરાબા સાથે અથડાવાથી ચારે વહાણ ભાંગી ગયાં, ખરેખર પાપકર્મથી આજીવિકા ચલાવનાર અતિ પાપી પુરુષોનું કદાપિ કલ્યાણ થતું નથી. ॥૧૧૪॥

हिन्दी :- समुद्रमार्ग से जाते जाते आखिर तक समुद्रमार्ग कुशलता से पार हुआ, लेकिन सोरठ देश के किनारे तक आते हुए अचानक

किसी पत्थर से टकराने से वे चारों के चारों जहाज टूट कर चूर हो गये। आखिर पापकर्म से आजीविका चलानेवाले अतिपापी पुरुषों का कदापि कल्याण नहीं होता।।११४।।

मराठी :- समुद्रमार्गाने जातां जातां शेवटपर्यंत तर जलमार्ग कुशलतेने पार पडला पण सोरठ देशाच्या किनाऱ्याजवळ येताच एका दगडाशी टक्कर झाल्याने ते चारही जहाज तुटून चुर्णचुर्ण झाले. कारण पापाने आजीविका चालवणाऱ्या पुरुषांचे कधीही कल्याण होत नाही.॥११४॥

English :- Sinh crossed the sea with utmost skill and manoevrability. But as he reached the shores of Sorath, his four ships hit against some rocks and were destroyed completely. Thus this incident proved that livelihood earned through sinful deeds will only drag away these sinful men away from the Goddess of good fortune and prosperity.

**ततः सिम्हो विपद्याऽऽद्य-नरकम् तत्र वेदनाः ॥**
**विषह्योद्धृत्य सञ्जातः सिम्हो हिंसापरायणः ॥११५॥**

अन्वयः- ततः सिम्हः विपद्य आद्यनरकम् गतः। तत्र वेदनाःविषह्य ततः उद्धृत्य हिम्सापरायणः सिम्हः सञ्जातः ॥११५॥

विवरणम्:- *ततः चतुर्णाम् यानानाम् भङ्गात् सिम्हः विपद्य मृत्वा आदौ भवः आद्यः। आद्यश्चासौ नरकश्च आद्यनरकः तम् आद्यनरकम् प्रथमनरकम् गतः। तत्र तस्मिन् नरके वेदनाः पीडाःविषह्य ततः तस्मात् नरकात् उद्धृत्य निष्क्रम्य हिम्सायाम् परायणः हिम्सापरायणः हिम्साकारी सिम्हः सञ्जातः जज्ञे ॥११५॥*

सरलार्थः- ततः चतुर्णा यानानाम् भङ्गात् सिम्हः मृत्वा प्रथमम् नरकम् गतः। तत्र वेदनाः विषह्य ततः निष्क्रम्य हिम्सापरायणः सिम्हः अजनि ॥११५॥

ગુજરાતી :- ચારે વહાણ ભાંગી જવાથી સિંહ સમુદ્રમાં ડૂબી મરણને શરણ થયો, અને પહેલી નારકીમાં ઉત્પન્ન થયો. ત્યાં અત્યંત

તીવ્ર વેદનાઓ સહન કરી, આયુષ્ય પૂર્ણ થતાં ત્યાંથી નીકળી તિર્યંચના ભવમાં હિંસાને વિષે તત્પર એવો સિંહ થયો. ॥૧૧૫॥

हिन्दी :- चारो जहाज टूट जाने से सिंह भी मर गया और पहली नर्क में चला गया। वहाँ अत्यंत तीव्र यातनाएं सहन कर के, आयुष्य पुरा होते ही वहाँ से छुटकर तिर्यंच (प्राणियों की) योनि में सदा हिंसा में ही लीन ऐसा सिंह बना॥११५॥

मराठी :- चार ही जहाज नष्ट झाले. त्यांच्या सोबत सिंह सुद्धा मरण पावला. आपल्या कर्मामुळे तो सिंह नरकात गेला आणि तेथील अत्यंत तीव्र यातना भोगत भोगत आयुष्य संपताच तेथून मोकळा झाला. पण तिर्यञ्च प्राण्यांच्या योनीमध्ये सदा हिंसेत परायण असा सिंह बनला.॥११५॥

English :- As all the four ships were destroyed, Sinh too was killed and had to go to the first hell. After having lived through dire agonies and torments, Sihe was then born in the animal world as a lion who is always rapt in causing hurt and slaying the other beings.

आद्यम् गत्वा पुनः श्वभ्रम्, जज्ञे दुष्टसरीसृपः ॥
द्वितीयनरकम् भुक्त्वा, दुष्टपक्षी बभूव सः ॥११६॥

अन्वयः- पुनः आद्यम् श्वभ्रम् गत्वा दुष्टसरीसृपः जज्ञे। द्वितीयनरकम् भुक्त्वा सः दुष्टपक्षी बभूव॥

*विवरणम्:- सिम्हस्य जन्मनि पुनः हिम्सादिकर्माणि कृत्वा सः पुनरपि आद्यम् प्रथमम् श्वभ्रम् नरकम् गत्वा दुष्टश्चासौ सरीसृपश्च दुष्टसरीसृपः दुष्टसर्पः जज्ञे। तत्रापि हिंसादिकर्म कृत्वा स द्वितीयम् नरकम् गतः। तत्र विविधाः वेदनाः भुक्त्वा ततः निष्क्रम्य सः दुष्टश्चासौ पक्षी च दुष्टपक्षी बभूव सञ्जातः ॥११६॥*

सरलार्थः- सिम्हजन्मनः अनन्तरम् स पुनः प्रथमम् नरकम् गतः वेदनाः अनुभूय ततः निष्क्रम्य दुष्टसर्पः जज्ञे। ततः द्वितीयनरकम् भुक्त्वा सः दुष्टपक्षी बभूव ॥११६॥

ગુજરાતી :- સિંહનાં ભવમાં પણ અનેક પ્રકારનાં હિંસાદિ કૃત્યો કરી કરી પહેલી નરકીમાં ગયો, ત્યાંથી નીકળી દુષ્ટ સાપ તરીકે ઉત્પન્ન થયો. ત્યાંથી બીજી નરકીમાં ગયો, ત્યાં પણ અપાર દુ:ખો ભોગવી દુષ્ટ પક્ષી થયો.॥

हिन्दी :- सिंह की योनि में भी अनेक प्रकार के हिंसादि कृत्य कर के, फिर से पहली नरक में गया। वहाँ से निकलकर दुष्ट सांप की योनि में उत्पन्न हुआ। वहाँ से दूसरे नर्क में गया। वहां भी अपार दुःख भोगकर फिर दुष्ट पक्षी बना॥११६॥

मराठी :- सिंहाच्या योनीमध्ये सुद्धा अनेक प्रकारचे हिंसादि कृत्य करून पुन्हा पहिल्या नरकात गेला. तेथून सुटून त्याला दुष्ट सापाची योनि मिळाली. त्यानंतर तो दुसऱ्या नरकात गेला. तेथे सुद्धा खूप यातना भोगून नंतर तो दुष्ट पक्षी बनला.॥११६॥

English :- Sihe in the form of a lion performed many disastrous deeds and then after his death went back into the first hell. Then after completing his life in hell, he was given a form of an infamous snake. From here he went to the second hell. Even here he had to undergo terrible tortures and was then given the form of a vicious bird.

तृतीयनरकम् प्राप्य, दुष्टसिम्होऽभवद् वने॥
चतुर्थनरकम् गत्वा, सर्पोऽजायत दृग्विषः ॥११७॥

अन्वयः- तृतीयनरकम् प्राप्य वने दुष्टसिम्हः अभवत्। चतुर्थनरकम् गत्वा दृग्विषः सर्पः अजायत॥

विवरणम्:- *ततः सः तृतीयम् नरकम् गत्वा ततः निष्क्रम्य वने दुष्टश्चासौ सिम्हश्च दुष्टसिम्हः अभवत्। ततः चतुर्थम् नरकम् गत्वा ततः निष्क्रम्य दृशि दृष्टौ विषम् गरलम् यस्य सः दृग्विषः दृष्टिगरलः सर्पः अजायत उदपद्यत ॥११७॥*

सरलार्थः- ततः सः तृतीयनरकम् अगच्छत्। ततः निष्क्रम्य विपिने दुष्टसिम्हः अभवत्। अनन्तरम् चतुर्थनरकम् गत्वा दृष्टिविषः सर्पः अजायत ॥११७॥

ગુજરાતી :- ત્યાર બાદ ત્રીજી નારકીમાં ગયો. ત્યાંથી વનમાં દુષ્ટ સિંહ થયો. સિંહનું આયુષ્ય પૂર્ણ કરી ચોથી નારકીમાં ગયો, ત્યાં

કષ્ટકારક દુઃખો ભોગવી દષ્ટિવિષ સર્પ થયો. ॥૧૧૭॥

हिन्दी :- बाद में वह तीसरी नर्क में गया। वहाँ से फिर वह वन में दुष्ट सिंह हुआ। सिंह का आयुष्य पूरा कर के चौथे नर्क में गया, वहाँ अपार कष्टदायक दुःखों को भोगकर वह दृष्टिविष सांप हुआ।

मराठी :- नंतर तो तिसऱ्या नरकांत गेला तेथून पुन्हा तो दुष्ट सिंह झाला. सिंहाचे आयुष्य पूर्ण करून चौथ्या नरकात गेला. तेथे अपरंपार कष्टदायक दुःख भोगून तो दृष्टिविष (धारी) साप झाला.

English :- Then he went to the third hell. From here he again attained the form of an impious lion. From here he had to go to the fourth hell. Here after undergoing acute vexation and tribulation, he was given the form of a vicious and a poisonous snake.

पञ्चमम् नरकम् लब्ध्वा, चण्डालस्त्री ततोऽजनि ॥
अवाप्य नरकम् षष्ठ-मजनिष्टाऽर्णवे तिमिः ॥११८॥

अन्वयः- ततः पञ्चमम् नरकम् लब्ध्वा चण्डालस्त्री अजनि। षष्ठम् नरकमवाप्य अर्णवे तिमिः अजनिष्ट॥

*विवरणम्:- ततः सर्पजन्मनः अनन्तरम् पञ्चमम् नरकम् लब्ध्वा ततः निष्क्रम्य चण्डालस्य मातङ्गस्य स्त्री चण्डालस्त्री मातङ्गस्त्री अजनि। अजायत। तदनन्तरम् षष्ठम् नरकमवाप्य अर्णवे सागरे तिमिः मत्स्यः अजनिष्ट ॥११८॥*

सरलार्थः- सर्पजन्मानन्तरम् पञ्चमम् नरकम् लब्ध्वा तदनन्तरम् चण्डालस्त्री अजायत। ततः षष्ठम् नरकम् प्राप्य समुद्रे तिमिः (मत्स्यः) अजायत॥११८॥

ગુજરાતી :- ત્યાંથી પાંચમી નારકીમાં ગયો, ત્યારબાદ ચંડાલની સ્ત્રી થયો. પછી છઠ્ઠી નારકીમાં ગયો. ત્યાંથી સમુદ્રમાં મત્સ્ય થયો.॥૧૧૮॥

हिन्दी :- उसके बाद वह पांचवी नर्क में गया। बाद में एक चांडाल की स्त्री के रूप मे जन्म हुआ। बाद में छट्ठे नर्क में गया। वहाँ से समुद्र

में मछली (मत्स्य) बना॥११८॥

मराठी :- नंतर तो पाचव्या नरकात गेला. नंतर एका चांडाळाची स्त्री म्हणून जन्म झाला. त्यानंतर सहाव्या नरकांत गेला. ते संपल्या नंतर पुन्हा एका समुद्रामध्ये मासा झाला.॥११८॥

English :- Then he had to go to the fifth hell. From here he was allowed to take birth as a wicked women. Then he went to the sixth hell. From here he was given the form of a fish in an ocean.

**सप्तमम् नरकम् गत्वा, मत्स्योऽजायत तन्दुलः ॥**
**पुनः सप्तममेवाऽगा-न्नरकम् दुःखसागरम् ॥११९॥**

अन्वयः- सप्तमम् नरकम् गत्वा तन्दुलः मत्स्यःअजायत। पुनः दुःखसागरम् सप्तमम् नरकमेव अगात् ॥११९॥

विवरणम्:- *ततः सप्तमम् नरकम् गत्वा तन्दुलः मत्स्यःअजायत। मत्यस्य जन्मानन्तरम् पुनः दुःखानाम् सागरः दुःखसागरः तम् दुःखसागरम् दुःखनिधिम् सप्तमम् नरकमेव अगात् अयात् ॥११९॥*

सरलार्थः- ततः सप्तमम् नरकम् गत्वा तन्दुलः मत्स्यः अजायत। तदनन्तरम् पुनः दुःखसागरम् सप्तमम् नरकमगात् ॥११९॥

ગુજરાતી :- મત્સ્યનું આયુષ્ય પૂર્ણ કરી સાતમી નારકીમાં ગયો. ત્યાંથી નીકળી તંદુલીયો મત્સ્ય થયો. ત્યાંથી વળી પાછો દુ:ખના સાગર સમાન સાતમી જ નારકીમાં ગયો.॥૧૧૯॥

हिन्दी :- बाद में मच्छली का आयुष्य पूर्ण कर के सातवी नर्क में गया। वहाँ से निकलकर तंदुल मच्छ बना। वहाँ से फिर वही दुःख के सागर समान सातवी नर्क में गया॥११९॥

मराठी :- नंतर त्यां मासोळ्याचे आयुष्य पूर्ण करून सातव्या नरकांमध्ये गेला तेथून निघून तो तंदुल मासा बनला. त्यानंतर पुन्हा दुःखाच्या सागरासमान सातव्या नरकात गेला.॥११९॥

કષ્ટકારક દુ:ખો ભોગવી દષ્ટિવિષ સર્પ થયો. ॥૧૧૭॥

हिन्दी :- बाद में वह तीसरी नर्क में गया। वहाँ से फिर वह वन में दुष्ट सिंह हुआ। सिंह का आयुष्य पूर्ण कर के चौथे नर्क में गया, वहाँ अपार कष्टदायक दु:खों को भोगकर वह दृष्टिविष सांप हुआ।

मराठी :- नंतर तो तिसऱ्या नरकांत गेला तेथून पुन्हा तो दुष्ट सिंह झाला. सिंहाचे आयुष्य पूर्ण करून चौथ्या नरकात गेला. तेथे अपरंपार कष्टदायक दु:ख भोगून तो दृष्टिविष (धारी) साप झाला.

English :- Then he went to the third hell. From here he again attained the form of an impious lion. From here he had to go to the fourth hell. Here after undergoing acute vexation and tribulation, he was given the form of a vicious and a poisonous snake.

**पञ्चमम् नरकम् लब्ध्वा, चण्डालस्त्री ततोऽजनि ॥**
**अवाप्य नरकम् षष्ठ-मजनिष्टाऽर्णवे तिमिः ॥११८॥**

अन्वयः- ततः पञ्चमम् नरकम् लब्ध्वा चण्डालस्त्री अजनि। षष्ठम् नरकमवाप्य अर्णवे तिमिः अजनिष्ट॥

*विवरणम्:- ततः सर्पजन्मनः अनन्तरम् पञ्चमम् नरकम् लब्ध्वा ततः निष्क्रम्य चण्डालस्य मातङ्गस्य स्त्री चण्डालस्त्री मातङ्गस्त्री अजनि। अजायत। तदनन्तरम् षष्ठम् नरकमवाप्य अर्णवे सागरे तिमिः मत्स्यः अजनिष्ट ॥११८॥*

सरलार्थ:- सर्पजन्मानन्तरम् पञ्चमम् नरकम् लब्ध्वा तदनन्तरम् चण्डालस्त्री अजायत। ततः षष्ठम् नरकम् प्राप्य समुद्रे तिमिः (मत्स्यः) अजायत॥११८॥

**ગુજરાતી :- ત્યાંથી પાંચમી નારકીમાં ગયો, ત્યારબાદ ચંડાલની સ્ત્રી થયો. પછી છઠ્ઠી નારકીમાં ગયો. ત્યાંથી સમુદ્રમાં મત્સ્ય થયો.॥૧૧૮॥**

हिन्दी :- उसके बाद वह पांचवी नर्क में गया। बाद में एक चांडाल की स्त्री के रूप मे जन्म हुआ। बाद में छट्ठे नर्क में गया। वहाँ से समुद्र

में मछली (मत्स्य) बना॥११८॥

मराठी :- नंतर तो पाचव्या नरकात गेला. नंतर एका चांडाळाची स्त्री म्हणून जन्म झाला. त्यानंतर सहाव्या नरकांत गेला. ते संपल्या नंतर पुन्हा एका समुद्रामध्ये मासा झाला.॥११८॥

English :- Then he had to go to the fifth hell. From here he was allowed to take birth as a wicked women. Then he went to the sixth hell. From here he was given the form of a fish in an ocean.

**सप्तमम् नरकम् गत्वा, मत्स्योऽजायत तन्दुलः ॥**
**पुनः सप्तममेवाऽगा-न्नरकम् दुःखसागरम् ॥११९॥**

अन्वय:- सप्तमम् नरकम् गत्वा तन्दुलः मत्स्यःअजायत। पुनः दुःखसागरम् सप्तमम् नरकमेव अगात् ॥११९॥

*विवरणम्:- ततः सप्तमम् नरकम् गत्वा तन्दुलः मत्स्यःअजायत। मत्यस्य जन्मानन्तरम् पुनः दुःखानाम् सागरः दुःखसागरः तम् दुःखसागरम् दुःखनिधिम् सप्तमम् नरकमेव अगात् अयात् ॥११९॥*

सरलार्थ:- ततः सप्तमम् नरकम् गत्वा तन्दुलः मत्स्यः अजायत। तदनन्तरम् पुनः दुःखसागरम् सप्तमम् नरकमगात् ॥११९॥

ગુજરાતી :- મત્સ્યનું આયુષ્ય પૂર્ણ કરી સાતમી નારકીમાં ગયો. ત્યાંથી નીકળી તંદુલીયો મત્સ્ય થયો. ત્યાંથી વળી પાછો દુ:ખના સાગર સમાન સાતમી જ નારકીમાં ગયો.॥૧૧૯॥

हिन्दी :- बाद में मच्छली का आयुष्य पूर्ण कर के सातवी नर्क में गया। वहाँ से निकलकर तंदुल मच्छ बना। वहाँ से फिर वही दुःख के सागर समान सातवी नर्क में गया॥११९॥

मराठी :- नंतर त्यां मासोळ्याचे आयुष्य पूर्ण करून सातव्या नरकांमध्ये गेला तेथून निघून तो तंदुल मासा बनला. त्यानंतर पुन्हा दुःखाच्या सागरासमान सातव्या नरकात गेला.॥११९॥

English :- Then he had to go to the seventh hell after completing his life as a fish. From there he was given the form of a small fish (the size of a grain of rice) Then he had to enter the seventh hell again to swim throught the sea of turmoils and acute torments.

**विपर्यासेन चण्डाल - स्त्र्यादियोनिषु पूर्ववत् ॥**
**क्रमेण सेहे कष्टानि, षष्ठादिनरकेषु च ॥१२०॥**

अन्वयः- विपर्यासेन चण्डालस्त्र्यादियोनिषु पूर्ववत् क्रमेण षष्ठादिनरकेषु च कष्टानि सेहे॥१२०॥

विवरणम्:- *ततः विपर्यासेन वैपरीत्येन चण्डालस्य स्त्री चण्डालस्त्री। चण्डालस्त्री आदौ यासाम् ताः चण्डालस्त्र्यादयः। चण्डालस्त्र्यादयश्चताः योनयश्च चण्डालस्त्र्यादियोनयः। तासु चण्डालस्त्र्यादियोनिषु पूर्ववत् क्रमेण व्युत्क्रमेण कष्टानि सेहे॥१२०॥*

सरलार्थः- ततः विपर्यासेन वैपरीत्येन पुनः पूर्ववत् चण्डालस्त्र्यादियोनिषु क्रमेण षष्ठादिनरकेषुच जन्म प्राप्य सः कष्टानि असहत ॥१२०॥

ગુજરાતી :- વળી પાછો વિપર્યાસ વડે (ઉલટી રીતે) ચંડાલ સ્ત્રી વિગેરે યોનિમાં તથા ક્રમસર છઠ્ઠી વિગેરે નારકીમાં પૂર્વની જેમ ઉત્પન્ન થઈ અસહ્ય કષ્ટ સહન કર્યાં. ॥૧૨૦॥

हिन्दी :- बाद में वापस विपर्यास से (उलटे क्रमसे) चांडाल स्त्री इत्यादि योनि से तथा क्रम से छठ्ठे वगैरे नर्कोमें पहले के जैसे ही उत्पन्न होकर असह्य कष्ट सहन किया॥१२०॥

मराठी :- नंतर परत विपर्यासाने (उलट्याक्रमाने) तो चांडाल स्त्री इत्यादी योनीतून आणि सहावे नरक वगैरे मध्ये पहिल्या सारखाच उत्पन्न होत होत असंख्य कष्ट सहन करीत होता.॥१२०॥

English :- Then he had to swim back through all the turmoils of hell and the other forms numberically. From the womb of the level of a female seavenger, to the wombs of all the seven hells. Thus experiencing utmost torments and turmoils through all the levels.

**ततो निपतितो घोरे, संसारे दुःखसागरे ।**
**देवद्रव्यविनाशस्य, ज्ञेयम् सर्वमिदम् फलम् ॥१२१॥**

अन्वयः:- ततः दुःखसागरे घोरे समसारे निपतितः। इदम् सर्वम् देवद्रव्यविनाशस्य फलम् ज्ञेयम् ॥१२१॥

विवरणम्:- *ततः तदनन्तरम् दुःखानाम् सागरः दुःखसागरः तस्मिन् दुःखसागरे घोरे भयङ्करे समसारे निपतितः सः दारुणानि दुःखानि असहत। इदम् सर्वम् देवस्य द्रव्यम् देवद्रव्यम्। देवद्रव्यस्य विनाशः देवद्रव्यविनाशः तस्य देवद्रव्यविनाशस्य फलम् वर्तते। इति ज्ञेयम् ज्ञातव्यम् ॥१२१॥*

सरलार्थः:- तदन्तरम् सः दुःखसागरे घोरे समसारे विविधयोनिषु जन्म प्राप्य घोराणि दुःखानि अन्वभवत्। इदम् सर्वम् देवद्रव्यविनाशस्य फलम् ज्ञेयम् ॥१२१॥

ગુજરાતી :-ત્યાર પછી દુઃખના સાગર એવા ઘોર સંસારમાં ભિન્ન ભિન્ન સ્થળે ઉત્પન્ન થઈ અપાર કષ્ટો સહન કરતો ખૂબ રઝળ્યો. આ સર્વ દેવદ્રવ્યના વિનાશકારી ઉપયોગનું જ ફળ જાણવું. ॥૧૨૧॥

हिन्दी :- फिर से वह दुःखसागर समान घोर संसार में अलग अलग जगह पर उत्पन्न हो कर असंख्य कष्ट सहन करता हुआ भटकने लगा। यह सब देवद्रव्य के विनाशकारी उपयोग का ही परिणाम जानना चाहिये॥१२१॥

मराठी :- नंतर तो त्याच दुःखाचा सागर समान अशा घोर संसारात वेगवेगळ्या जागी उत्पन्न होत असंख्यात कष्ट सहन करीत हिंडू लागला. हे सगळे देवद्रव्याच्या विनाशाचेच परिणाम मानले पाहिजे.॥१२१॥

English :- Then he had to take birth on earth in different forms and in different places just to undergo acute tribulation and torments. One should know that these are the consequences of utilizing God's money in an improper way.

अन्यायात् स्वल्पदेवस्व - भक्षणादपि यद्यभूत् ॥
शैवः श्रेष्ठी सप्तकृत्वः, श्वाऽतो वै त्याज्यमेव ततः ॥१२२॥

अन्वयः:- यदि अन्यायात् स्वल्पदेवश्वाभक्षणात् अपि शैवः श्रेष्ठी सप्तकृत्वः अभूत्। अतः तत् ,याज्यमेव ॥१२२॥

विवरणम्:- यदि न न्यायः अन्यायः तस्मात् अन्यायात् सुष्ठु अल्पम् स्वल्पम्। देवस्य स्वम् धनम् देवस्वम्, स्वल्पम् च तद् देवस्वम् च स्वल्पदेवस्वम्। अतीव अल्पम् देवधनम्। स्वल्पदेवस्वस्य भक्षणम्, तस्मात् स्वल्पदेवस्वभक्षणात् अतीव अल्पदेवधनभक्षणात् शैवः श्रेष्ठी सप्तकृत्वः सप्तवारम् श्वा कुक्कुरः अभूत्। अतः तद् देवद्रव्यम् सर्वथा त्यक्तुम् योग्यम् त्याज्यमेव त्यक्तव्यमेव ॥

सरलार्थ:- अन्यायात् अतीव अल्पदेवद्रव्यभक्षणात् अपि शैवः श्रेष्ठी सप्तवारम् श्वा कुकुरः अभवत्। अतः देवद्रव्यम् सर्वथा त्याज्यम् ॥१२२॥

ગુજરાતી :-અન્યાયથી જરા પણ દેવદ્રવ્યનું ભક્ષણ કરવાથી શૈવ શેઠ સાતવાર કૂતરાના ભવમાં ઉત્પન્ન થયો, માટે ખરેખર તે ત્યજવા યોગ્ય છે. ॥૧૨૨॥

हिन्दी :- अन्याय से अत्यंत अल्पमात्रभी देवद्रव्य का भक्षण कर लेने से शैव शेठ को सात बार कुत्ते की योनि में जनम लेना पडा, इसलिये अवश्य ही वह त्याग करने योग्य है॥१२२॥

मराठी :- अन्यायाने देवद्रव्याचा एक घास सुद्धा भक्षण केल्याने शैव शेठाला सात वेळा कुत्र्याचा जन्म घ्यावा लागला. म्हणून निश्चित ही त्यांचा सर्वथा त्याग करणे हेच योग्य आहे.॥१२२॥

English :- A richman who was very devoted to Lord Shiva and who is called as Shaiv, had to take the form of a dog seven times because he had utilized a part of God's wealth in an unjust manner. Therfore one should never ever cherish the thought of utilizing God's money.

अत्रान्तरे विभो! कोऽसौ, श्रेष्ठी जातश्च श्वा कथम्?
इति नाभाकभूपेन, पृष्टे गुरुरभाषत ॥१२३॥

**अन्वयः-** अत्रान्तरे विभो! असौ श्रेष्ठी कः? सः श्वा कथम् जातः? इति नाभाकभूपेन पृष्टे गुरुः अभाषत॥१२२॥

**विवरणम्:-** अत्रान्तरे हे विभो! हे प्रभो! असौ शैवः श्रेष्ठी कः? सः श्वा कुक्कुरः कथं जातः अजायत। इति नाभाकः भूपः नृपः नाभाकभूपः तेन नाभाकभूपेन नाभाकनृपेण पृष्टे सति गुरुः अभाषत ॥१२३॥

**सरलार्थः-** एतस्मिन् अन्तरे नाभाकभूपेन गुरुः पृष्टः- हे विभो! असौ शैवः श्रेष्ठी कः? सः श्वा कथमभवत्? इति। तदा गुरुः अभाषत ॥१२३॥

**ગુજરાતી :-** આ વખતે નાભાક રાજાએ મહાત્મા યુગંધરાચાર્યને પૂછ્યું, ''પ્રભો! આ શૈવ શેઠ કોણ ? અને તેને સાત વખત કૂતરાનો અવતાર કેમ ગ્રહણ કરવો પડ્યો ?'' આ પ્રમાણે નાભાક રાજાએ પૂછવાથી સદ્‌ગુરુ મહારાજે પણ તે ચરિત્રનું સ્વરૂપ નીચે પ્રમાણે કહેવાનો આરંભ કર્યો. ॥૧૨૩॥

**हिन्दी :-** उसी समय नाभाक राजा ने महात्मा युगन्धराचार्य से पूछा, ''हे प्रभू! यह शैव शेठ कौन? और उसे सात बार कुत्ते का अवतार क्यों लेना पडा? ऐसा नाभाक राजा के पूछने पर सद्‌गुरु महाराज ने उस चरित्र का भी स्वरूप इस प्रकार कहना प्रारंभ किया॥१२३॥

**मराठी :-** त्याच वेळी नाभाक राजाने युगन्धराचार्य महाराजांना विचारलं, ''हे प्रभो! हा शैव शेठ कोण? आणि त्यांला सात वेळा कुत्र्याचा जन्म का घ्यावा लागला? ह्याप्रमाणे नाभाक राजाने विचारल्यानंतर सद्‌गुरू महाराजांनी देखील ते चरित्र सांगण्यास सुरूवात केली.''॥१२३॥

**English :-** At this King Nabhak asked the reverend priest Yugandar about the trader who was called as Shaiv and the reason for him to attain the form of a dog seven times. The priest than began to tell the king about the trader.

उत्सर्पिण्यवसर्पिण्यो-र्भरतैरावतक्षितौ ॥
प्रत्येकम् किल जायन्ते, शलाकाः पुरुषा अमी ॥१२४॥
चतुर्विम्शतिरर्हन्त-स्तथा द्वादश चक्रिणः ॥
विष्णुप्रतिविष्णुरामाः, प्रत्येकम् नवसङ्ख्यया ॥१२५॥

अन्वयः- उत्सर्पिण्यवसर्पिण्योः भरतैरावतक्षितौ प्रत्येकम् अमी शलाकाः पुरुषाः जायन्ते किल॥१२४॥

चतुर्विंशतिः अर्हन्तः तथा द्वादश चक्रिणः, प्रत्येकम् नवसम्ख्यया विष्णु - प्रतिविष्णु - रामाः अमी शलाकाः पुरुषाः जायन्ते ॥१२५॥

*विवरणम्:-* *उत्सर्पिणी च अवसर्पिणी च उत्सर्पिण्यवसर्पिण्यौ तयोः उत्सर्पिण्यवसर्पिण्योः कालयोः भरतम् च ऐरावतम् च भरतैरावते। भरतैरावतयोः क्षितिः भरतैरावतक्षितिः तस्याम् भरतैरावतक्षितौ भरतक्षेत्रे ऐरावतक्षेत्रे च प्रत्येकम् अमी वक्ष्यमाणाः शलाकाः पुरुषाः जायन्ते ॥१२४॥*

*चतुरधिका विम्शतिः चतुविम्शतिः अर्हन्तः तीर्थकरा, द्वादश चक्रिणः चक्रवर्तिनः, प्रत्येकम् नव चासौ सङ्ख्या च नवसङ्ख्या, तया नवसङ्ख्यया विष्णवश्च (वासुदेवाश्च) प्रतिविष्णवश्च (प्रतिवासुदेवाश्च) रामाः बलदेवाश्च विष्णु-प्रतिविष्णुरामाः नव वासुदेवाः, नव प्रतिवासुदेवाः, नव बलदेवाः च, सम्मीलिताः त्रिषष्टिः अमी शलाकाः पुरुषाः जायन्ते॥१२५॥*

सरलार्थः- उत्सर्पिण्यवसर्पिणीकालयोः भरतक्षेत्रे ऐरावतक्षेत्रे च प्रत्येकम् अमी वक्ष्यमाणाः शलाकाः पुरुषाः जायन्ते, उत्पद्यन्ते॥१२४॥

चतुर्विम्शतिः अर्हन्तः। द्वादश चक्रवर्तिनः, नव वासुदेवाः नव प्रतिवासुदेवाः नव बलदेवाः च सम्मीलिताः त्रिषष्टिः शलाकाः पुरुषाः जायन्ते ॥१२५॥

ગુજરાતી :-ભરત ક્ષેત્ર અને ઐરાવત ક્ષેત્રમાં ઉત્સર્પિણી અને અવસર્પિણી કાળમાં ત્રેસઠ ત્રેસઠ શલાકાપુરુષો થાય છે, અને તે આ પ્રમાણે -॥૧૨૪॥

ચોવીસ તીર્થંકર, બાર ચક્રવર્તી, નવ વાસુદેવ, નવ પ્રતિવાસુદેવ અને નવ રામ (બલદેવ)- ॥૧૨૫॥

हिन्दी :- भरतक्षेत्र में और ऐरावत क्षेत्रमें उत्सर्पिणी और अवसर्पिणी काल में त्रेसठ त्रेसठ शलाका पुरुष होते हैं। वे इस प्रकार, चौबीस तीर्थंकर, बारा चक्रवर्ती, नव वासुदेव, नव प्रतिवासुदेव एवं नव राम (बलदेव)॥१२५॥

मराठी :- भरतक्षेत्रामध्ये आणि ऐरावत क्षेत्रामध्ये उत्सर्पिणी आणि अवसर्पिणी कालावधीत त्रेसष्ठ त्रेसष्ठ शलाका पुरुष होतात. ते याप्रमाणे, चोवीस तीर्थंकर, बारा चक्रवर्ती, नऊ वासुदेव, नऊ प्रतिवासुदेव आणि नऊ राम (बलदेव).॥१२५॥

English :- During the time dimensions of utsarpini (the ascending part of time) and the Avasarpini (the decending part of time) in the Bharat and Airavat Schetra, there used to be sixty three eminent personalities. i.e- twenty four Trithankars, twelve Chakravaties, nine Vasudev's nine Prati-Vasudev's and nine Ram's (Baldev's).

**एतेषु पूर्वम् श्रीरामो, राज्यम् न्यायेन पालयन्॥**
**कृपया निःस्वलोकानाम्, न्यायघण्टामवीवदत् ॥१२६॥**

अन्वयः- एतेषु श्रेष्ठपुरुषेषु पूर्वम् श्रीरामः न्यायेन राज्यम् पालयन् निःस्वलोकानाम् कृपया न्यायघण्टाम् अवीवदत् ॥१२६॥

विवरणम्:- एतेषु त्रिषष्टौ श्रेष्ठपुरुषेषु पूर्वम् पुरा श्रीरामः न्यायेन नीत्या राज्यम् पालयन् सन् निर्गतम् स्वम् धनम् येभ्यः ते निःस्वाः निर्धनाः। निःस्वाश्च ते लोकाश्च निःस्वलोकाः, तेषाम् निःस्वलोकानाम् निर्धनानाम् कृपया दयया न्यायस्य घण्टा न्यायघण्टा, ताम् न्यायघण्टाम् अवीवदत् अवादयत् ॥१२६॥

सरलार्थः- एतेषु श्रेष्ठपुरुषेषु पुरा श्रीरामः न्यायेन राज्यम् पालयित्वा निर्धनेषु कृपाम् कृत्वा च न्यायघण्टाम् अवादयत् ॥१२६॥

ગુજરાતી :- એ ત્રેસઠ પુરુષોમાં પહેલાં શ્રીરામ નીતિપૂર્વક રાજ્યનું પાલન કરતા હતા અને ગરીબ પ્રજા ઉપર દયાદૃષ્ટિ રાખી ન્યાયનો ડંકો વગાડ્યો હતો. ॥૧૨૬॥

हिन्दी :- उन त्रेसठ पुरुषों मे प्रथम पुरुष श्रीरामने नीतिपूर्वक राज्य का पालन करते हुए और अपनी गरीब प्रजा पर दया की दृष्टि रखते हुए न्याय का डंका बजाया था॥१२६॥

मराठी :- त्या त्रेसष्ट पुरुषांमधून पहिले श्रीरामाने नीतीने प्रजेचे पालन करीत आणि गरीब प्रजेवर दया दृष्टि दाखवीत, न्यायाचा डंका वाजविला होता.॥१२६॥

English :- Among the first of these personalities was king Ram who ruled his kingdom in a just manner. He used to look upon his poor subjects with compassion and therfore beat the drums of justice always

एकदा कुर्कुरः कश्चि - न्निविष्टो राजवर्त्मनि ॥
केनचिद् विप्रपुत्रेण, कर्करेणाहतः श्रुतौ ॥१२७॥

अन्वयः- एकदा कश्चित् कुर्कुरः राजवर्त्मनि निविष्टः आसीत्। केनचित् विप्र पुत्रेण सः कर्करेण श्रुतौ आहतः ॥१२७॥

विवरणम्:- *एकदा एकस्मिन् समये कश्चित् कुर्कुरः श्वा वर्त्मनाम् राजा राजवर्त्म, तस्मिन् राजवर्त्मनि महामार्गे निविष्टः उपविष्टः आसीत्। केनचित् विप्रस्य पुत्रः विप्रपुत्रः तेन विप्रपुत्रेण द्विजात्मजेन सः कर्करेण पाषाणखण्डेन श्रुतौ कर्णे आहतः ताडितः ॥१२७॥*

सरलार्थः- एकदा कश्चित् श्वा राजमार्गे उपविष्टः आसीत्। तदा केनचित् ब्राह्मणपुत्रेण सः कर्करेण कर्णे आहतः (ताडितः) ॥१२७॥

ગુજરાતી :- તેના રાજ્યમાં એક દિવસ જાહેર રસ્તા ઉપર એક કૂતરો બેઠો હતો, તે કૂતરાને કાન ઉપર કોઈ બ્રાહ્મણના છોકરાએ પથ્થર ફેંકી ઘાયલ કર્યો. ॥૧૨૭॥

हिन्दी :- उसके राज्य में एक दिन मुख्य रास्ते पर एक कुत्ता बैठा था, उस कुत्ते को किसी ब्राह्मण के लडके ने कान पर पत्थर मार कर घायल किया था॥१२७॥

मराठी :- त्यांच्या राज्यांत एके दिवशी एका प्रमुख रस्त्यावर एक कुत्रा बसलेला होता. एका ब्राह्मणाच्या मुलाने कुत्र्याच्या कानावर दगड मारून त्याला घायाळ केले.॥१२७॥

English : Once in his kingdom a dog that was seated on the main road was hit badly by a brahmin boy on the ear.

श्वा निर्यद्रुधिरो न्याय-स्थानं गत्वा निविष्टवान् ॥
भूपेनाहूय पृष्टोऽवग्, निरागाः किमहं हतः ॥१२८॥

अन्वयः:- निर्यद्रुधिरः श्वा न्यायस्थानं गत्वा निविष्टवान्। भूपेन आहूय पृष्टः अवक् - निरागाः अहं किं हतः? ॥१२८॥

विवरणम्:- निर्यत् निर्गच्छत् रुधिरं यस्य सः निर्यद्रुधिरः निर्गच्छद्रुधिरः श्वा कुक्कुरः न्यायस्य स्थानं न्यायस्थानं न्यायसभां गत्वा निविष्टवान् उपविष्टवान् । तदा भुवं पातीति भूपः तेन भूपेन नृपेण आहूय पृष्टः स अवक् अवोचत निर्गतम् आगः यस्मात् सः निरागाः निरपराधः अहं किमर्थं हतः ताडितः? ॥१२८॥

सरलार्थः:- कर्णात् स्रवद्रुधिरः सः श्वा न्यायस्थानमं गत्वा उपाविशत्। तदा भूपः तमाह्वयत् आगमनकारणं च अपृच्छत् ततः सोऽवोचत् - निरपराधः अहं किं ताडितः? इति ॥१२८॥

ગુજરાતી :- વહેતા લોહીથી ખરડાયેલ તે કૂતરો રાજાના ન્યાયમંદિરમાં જઈ બેઠો. રાજાએ તેને બોલાવીને રાજસભામાં આવવાનું કારણ પૂછ્યું, ત્યારે તેણે કહ્યું, - "હું નિરપરાધી છતાં મને બ્રાહ્મણના છોકરાએ કેમ માર માર્યો?" ॥૧૨૮॥

हिन्दी :- तब लहुलुहाण होकर वह कुत्ता राजा के न्यायमंदिरमें जा बैठा। राजाने उसे बुलाकर राजसभा में आने का कारण पूछा। तब उस कुत्ते ने जबाब दिया, "मेरा कोई अपराध न होते हुऐ भी उस ब्राह्मण के लडके ने मुझे क्यो मारा?" ॥१२८॥

मराठी :- तेव्हा रक्तबंबाळ झालेला तो कुत्रा राजाच्या न्यायमंदिरात जाऊन बसला. जेव्हा राजाने त्याला बोलावून राजसभेत येण्याचे कारण विचारले तेव्हा कुत्रा म्हणाला, "माझा कोणताही अपराध नसतांना सुद्धा त्या ब्राह्मणाच्या मुलाने मला का मारले." ॥१२८॥

English :- The dog was now badly bruised. It went to the king's court of justice with the blood- stained ear and narrated the incident to the king when it was summoned.

**तद्घातकं विप्रपुत्रं तत्रानाय्य नृपोऽब्रवीत् ॥**
**असौ त्वद्घातको ब्रूहि, कोऽस्य दण्डो विधीयते ॥१२९॥**

अन्वयः- नृपः तद्घातकं विप्रपुत्रं तत्र आनाय्य अब्रवीत्। असौ त्वद्घातकः अस्ति। अस्य कः दण्डः विधीयते? ब्रूहि ॥१२९॥

विवरणम्:- *नॄन् पातीति नृपः राजा तस्य शुनः घातकः तद्घातकः तं तद्घातकं कुक्कुरघातकंविप्रस्य ब्राह्मणस्य पुत्रं विप्रपुत्रं ब्राह्मणपुत्रं तत्र न्यायस्थाने आनाय्य तं श्वानं अब्रवीत् अवोचत् - असौ तव घातकः अस्ति। अस्य कः दण्डः विधीयते क्रियते? ब्रूहि यदा अस्य कः दण्डः कर्तव्यः? ब्रूहि ॥१२९॥*

सरलार्थः- नृपः कुक्कुरस्य घातकं ब्राह्मणपुत्रं न्यायसभां आनाय्य तं श्वानम् अब्रवीत् - अयं तव घातकः अस्ति। अस्मै कः दण्डः प्रदातव्यः? ब्रूहि ॥१२९॥

ગુજરાતી :-રાજાએ તેને મારનાર બ્રાહ્મણના છોકરાની તપાસ કરાવી સભામાં બોલાવ્યો અને કુતરાને કહ્યું, "આ તને ઇજા કરનારો છે, માટે બોલ, આને શું શિક્ષા કરવી?" ॥૧૨૯॥

हिन्दी :- तब राजानें उसे मारनेवाले ब्राह्मण के लडके की तलाश कर के उसको सभामें बुलाया और कुत्ते को पूछा, "इसीने तुम्हें घायल किया है, इसलिये बोल, इसे क्या सजा दी जांय?"॥१२९॥

मराठी :- तेव्हा राजाने मारणाऱ्या ब्राह्मणाच्या मुलाचा तपास (शोध) करून, त्याला राजसभेत बोलवून कुत्र्याला सांगितले, "हाच तुला घायाळ करणारा आहे, तर सांग त्यांला कोणती शिक्षा द्यायची?"॥१२९॥

English :- The king send out a search-party, in search of the boy. When the boy was found the king placed the boy in front of the dog and asked it the type of punishment it would like to confer upon the boy.

श्वाऽवोचद्रस्य रुद्रस्य, मठेऽयं हि नियोज्यताम् ।
क एष दण्डो राजेति, पृष्टः श्वा च पुनर्जगौ ॥१३०॥

**अन्वयः-** अथ श्वा अवोचत् - अयं रुद्रस्य मठे नियोज्यताम्। कः एषः दण्डः? इति राजा पृष्टः श्वा पुनः जगौ ॥१३०॥

**विवरणम्:-** अथ अनन्तरं श्वा कुक्कुरः अवोचत् अब्रवीत् - अयं विप्रपुत्रः रुद्रस्य शिवस्य मठे देवालये पूजकत्वेन नियोज्यताम्। एतन्निशम्य कः एषः दण्डः? इति विस्मितः नृपः अप्राक्षीत् । तदा राजा पृष्टः श्वा कुक्कुरः पुनः जगौ जगाद ॥१३०॥

**सरलार्थः:-** अनन्तरं श्वा अवोचत् अयं विप्रपुत्रः शिवस्य मन्दिरे पूजकत्वेन नियोज्यताम् । इति तस्य वचनं श्रुत्वा विस्मितः नृपः तमपृच्छत्- कः एषः दण्डः? इति। तदा स श्वा पुनः जगौ ॥१३०॥

**ગુજરાતી :-** કૂતરાએ કહ્યું, "તેને માત્ર એટલી જ શિક્ષા કરો કે આ શિવના દેવાલયમાં તેની પૂજારી તરીકે નિમણૂંક કરો." આ પ્રમાણે કૂતરાએ કહેલું અયોગ્ય વચન સાંભળી રાજાએ વિસ્મિત થઈ પૂછ્યું કે - "આ શું દંડ કહેવાય ?" ત્યારે કૂતરાએ પોતાનો સવિસ્તર વૃત્તાન્ત જણાવ્યો કે -॥૧૩૦॥

**हिन्दी :-** तब कुत्तेने कहा कि, "उसको केवल इतनी ही सजा दी जाय कि उसे यहीं के शिवमंदिर में पूजारी के पद पर उसकी नियुक्ति कर दी जाय।" ऐसा कुत्ते का अयोग्य वचन सुनकर राजा ने विस्मय के साथ पूछा, "क्या यह कोई दंड है?" तब कुत्तेने अपना पूर्व वृत्तांत सविस्तर सुनाया॥१३०॥

**मराठी :-** तेव्हा कुत्र्याने सांगितले की, "याला शिक्षा एवढीच करा की, त्याला येथील शिवमंदिराचा पूजारी नियुक्त करा." असे असंबद्ध म्हणणे ऐकून आश्चर्याने राजाने विचारले, "याला काय दंड म्हणायचा" तेव्हा कुत्रा आपला पूर्ववृत्तांत सविस्तर सांगू लागला.॥१३०॥

**English :** The dog replied that according to it, the only befitting punishment for the boy, is that he should be appointed as a hindu priest (*Pujari*) of the Shiva temple. The king was dumb founded, when he heard such an odd punishment. Overcome with feelings of astonishment, the king asked him the reason for such an odd.punishment. At this the dog gave a detailed narration of his past life.

**प्रागहं सप्तजन्मभ्यः, पूजयित्वा सदा शिवम् ॥**
**देवस्वभीत्या प्रक्षाल्य, पाणी भोजनमाचरम् ॥१३१॥**

अन्वयः:- सप्तजन्मभ्यः प्राक् अहं शिवं पूजयित्वा देवस्वभीत्या पाणी प्रक्षाल्य भोजनम् आचरम् ॥१३१॥

विवरणम्:- *अस्मात् जन्मनः सप्तभ्यः जन्मभ्यः प्राक् अहं सदा सर्वदा शिवं शङ्करं पूजयित्वा आर्चित्वा देवस्य स्वं धनं देवस्वं देवद्रव्यम्। देवस्वात् देवद्रव्यात् भीतिः देवस्वभीतिः तया देवस्वभीत्या देवद्रव्यभक्षणभयेन पाणी हस्तौ प्रक्षाल्य क्षालयित्वा भोजनम् आचरम् ॥१३१॥*

सरलार्थः:- अस्मात् जन्मनः सप्तजन्मभ्यः प्राक् अहं सर्वदा शिवं पूजयित्वा देवद्रव्यभक्षणभयात् हस्तौ प्रक्षाल्य भोजनम् आचरम् ॥१३१॥

ગુજરાતી :- હું મારા આ કૂતરાના જન્મથી સાત ભવ પહેલા મનુષ્ય હતો, અને હમેશા શિવની પૂજા કરી દેવદ્રવ્ય ભક્ષણ કરવાના દોષથી ડર પામી મારા બન્ને હાથ ધોઈને જમવા બેસતો હતો. ॥૧૩૧॥

हिन्दी :- मैं मेरे इस कुत्ते के सात जनम पहले मनुष्य था और कहीं देवद्रव्य का भक्षण न हो जाय इस भय से हमेशा शिव की पूजा करने के पश्चात् हाथ धोकर ही भोजन करने को बैठता था॥१३१॥

मराठी :- मी माझ्या ह्या कुत्र्याच्या सात जन्मापूर्वी मनुष्य होतो, आणि नेहमी शंकराची पूजा करून देवद्रव्याच्या भक्षणाच्या दोषाने घाबरून दोन्ही हात धुऊन जेवायला बसत होतो.॥१३१॥

English :- The dog said that, before the seven births of a dog, he was a human being. He used to be a hindu priest *(Pujari)* to Lord Shiva. He used to always wash his hands before supper or lunch even after performing the puja of Shiva so that he would not in any way whatsoever indulge himself in utilizing God's wealth.

स्त्यानाप्यमन्यदा लिङ्गपूरणे लोकढौकितम् ॥
विकरणेऽस्य काठिन्याद्, नखान्तः प्राविशन्मम॥१३२॥

अन्वयः- अन्यदा लिङ्गपूरणे लोकढौकितं स्त्यानाप्यं काठिन्यात् अस्य विकरणे मम नखान्तः प्राविशत् ॥१३२॥

*विवरणम्:- अन्यदा एकस्मिन् दिवसे शिवस्य लिङ्गपूरणे लोकैः स्त्यानं सान्द्रम् आप्यं घृतं स्त्यानाप्यं सान्द्रघृतं ढौकितं अस्य घृतस्य कठिनस्य भावः काठिन्यं तस्मात् काठिन्यात् - विकरणे शिथिलीकरणे तद् किञ्चित् घृतं मम नखानामन्तः नखान्तः नखमध्ये प्राविशत् ॥१३२॥*

सरलार्थः- अन्यदा शिवस्य लिङ्गपूरणे लोकैः स्त्यानं (प्रगाढं) घृतं ढौकितं (अर्पितं)। तस्य काठिन्यात् शिथिलीकरणे तद् घृतं मम नखानां मध्ये प्राविशत् ॥१३२॥

ગુજરાતી :- એક દિવસે લોકોએ શિવલિંગ પૂજવા માટે થીજેલું ઘી મૂક્યું. કઠિન હોવાથી તે ઘી છૂટું પાડતા મારા નખમાં ભરાઇ ગયું. ॥૧૩૨॥

हिन्दी :- एक दिन लोगों ने शिवलिंग की पूजा के लिये जमा हुआ घी लाकर रखा। उस घी को अलग करते हुऐ वह मेरे नाखून में फँसा।१३२॥

मराठी :- "एके दिवशी लोकांनी शिवलिंगाच्या पूजेसाठी घट्ट तूप तेथे आणले. तूप वेगळ करतांना माझ्या नखात फसले." ॥१३२॥

English :- He continued saying that, one day the people had bought some consolidated clarified butter *(ghee)*, to perform the puja of the phallus (shiv-ling). Now when he was separating *the ghee*, it entered his nails.

विलीनमुष्णभक्तेनाऽजानता तन्मयाऽऽहृतम् ॥
तेन दुष्कर्मणा सप्त-कृत्वो जातोऽस्मि मण्डनः ॥१३३॥

अन्वयः- उष्णभक्तेन विलीनं तद् अजानता मया आहृतम्। तेन दुष्कर्मणा अहं सप्तकृत्वः मण्डनः जातः अस्मि ॥१३३॥

विवरणम्:- उष्णं च तद् भक्तश्च उष्णभक्तं तेन उष्णभक्तेन उष्णभोजनेन तद् घृतं विलीनम्। अजानता मया तद् आहृतं भक्षितम् ॥ तेन दुष्टं च तत् कर्म च दुष्कर्म तेन दुष्कर्मणा दुराचारेण अहं सप्तकृत्वः सप्तवारं मण्डनः श्वा जातः अस्मि (अजनिषि) ॥१३३॥

सरलार्थ:- उष्णभोजनेन तद् घृतं विलीनं द्रुतम। अजानता मया च तद् भक्षितम्। तेन पापेन अहं सप्तवारं कुक्कुरः अजनिषि॥१३३॥

ગુજરાતી :- ત્યારબાદ શિવના મંદિરમાંથી નીકળી ઘેર આવી ભોજન કરવા બેઠો. ઉષ્ણ ભોજનથી તે નખમાનું ઘી ઓગળી ગયું અને જમતાં જમતાં અજાણતાં તે ઘી પણ ભોજન સાથે ખવાઇ ગયું. ફક્ત એટલા જ દેવદ્રવ્યનું ભક્ષણ કરવા રુપ દુષ્કર્મથી હું સાતવાર કૂતરાના જન્મમાં અવતર્યો. ॥૧૩૩॥

हिन्दी :- इसके बाद मैं शिवमंदिर में से घर आ कर भोजन करने के लिए बैठा। लेकिन गरमागरम रसोई के कारण नाखून में फसा वह घी पिघल गया और अनजाने में भोजन के साथ खाया गया। केवल इतने ही देवद्रव्यभक्षण के दोष से मुझे सात बार कुत्ते का जन्म लेना पड़ा॥१३३॥

मराठी :- नंतर शिवमंदिरातून परत घरी आल्यानंतर मी लगेच जेवण करायला बसलो. गरमागरम स्वयंपाकाने नखातला तूप विरघळले आणि न कळत माझ्या कडून जेवणांत खाल्ले गेले. बस, एवढ्याश्या देवद्रव्याच्या भक्षणामुळे लागलेल्या दुष्कर्मामुळे मला सात वेळा कुत्र्याचा जन्म घ्यावा लागला.॥१३३॥

English :- Then when he arrived home, he was tempted to atonce sit and have hot and fresh food. In his haste he forgot to wash his hands properly, so the ghee that was stuck in his nails got melted due to the hot and fresh food that was served. So he had to be a dog seven times, just because he had utilized God's wealth in such a manner.

सप्तमेऽस्मिन् भवे राजन्। जाता जातिस्मृतिर्मम ।
अधुना तत्प्रभावेणोत्पन्ना वाग् मानुषी पुनः ॥१३४॥

अन्वय:- हे राजन्! सप्तमे अस्मिन् भवे मम जातिस्मृतिः जाता। अधुना तत्प्रभावेण मम पुनः मानुषी वाग् उत्पन्ना ॥१३४॥

*विवरणम्:-* *हे राजन्! अस्मिन् सप्तमे भवे जन्मनि मम जातेः स्मृतिः जातिस्मृतिः जातिस्मरणज्ञानं जाता जातम्। अहं पूर्वभवस्मरणज्ञानवान् अभवम् । अधुना तस्याः जातिस्मृतेः प्रभावः तत्प्रभावः तेन तत्प्रभावेण जातिस्मृतिप्रभावेण मम पुनः मानुषी (मनुष्यस्य इयं) वाग् उत्पन्ना । तया मनुष्यवाण्या अहं सर्वं व्यतिकरं तुभ्यं न्यवेदयम् ॥१३३॥*

सरलार्थः- हे राजन्। अस्मिन् सप्तमे भवे मम जातिस्मरणज्ञानं समुत्पन्नम् । अधुना तत्प्रभावेण मम मानुषी वाग् उत्पन्ना। तयाऽहं सर्वं भवते न्यवेदयम् ॥१३४॥

ગુજરાતી :- હે રાજન્ ! આ સાતમા ભવમાં મને જાતિસ્મરણ જ્ઞાન ઉત્પન્ન થયું છે, અને હમણાં તેના પ્રભાવથી મને માનુષી વાચા ઉત્પન્ન થવાથી આ ઘટના તમારી સમક્ષ યથાર્થ નિવેદન કરી રહ્યો છું. ॥૧૩૪॥

हिन्दी :- "हे राजन्! अब इस सातवें जन्म में मुझे जातिस्मरण ज्ञान प्राप्त हुआ और उसी के प्रभाव से मुझे मनुष्यवाणी भी प्राप्त हुई। जिससे मैंने आप के समक्ष सब यथार्थ वृत्तांत कहा है।"॥१३४॥

मराठी :- "हे महाराज। आतां या सातव्या जन्मात मला जातिस्मरण ज्ञान उत्पन्न झाले आणि त्याच्या प्रभावामुळेच मी मनुष्यवाणीत तुमच्या समोर सर्व यथार्थ अहवाल सांगितला आहे."॥१३४॥

English :- So he says that he had attained Jatismaran gyan which enabled him to see his own past lives, and due to which he attained the human tongue language, and so he was actually able to narrate precisely and sincerely all the events of his past life, to the king.

**अत्रान्तरे गुरुं नत्वा, जगौ नाभाकभूपतिः ॥**
**श्रुत्वैतिह्यमदो बाढं, कम्पते हृदयं मम ॥१३५॥**

अन्वयः- अत्रान्तरे नाभाकभूपतिः गुरुं नत्वा जगौ । अदः ऐतिह्यं श्रुत्वा मम हृदयं बाढं कम्पते ॥१३५॥

*विवरणम्:-* *अत्रान्तरे एतस्मिन् अन्तरे नाभाकः भूपतिः नाभागभूपतिः गुरुं नत्वा प्रणम्य जगौ जगाद।अदः इदं ऐतिह्यं कथानकं श्रुत्वा निशम्य मम हृदयं बाढं भृशं कम्पते वेपते ॥१३५॥*

सरलार्थः- अत्रान्तरे नाभाकनृपः गुरुं नत्वा अभाषत। इदं ऐतिह्यं कथानकं श्रुत्वा मम हृदयं भृशं कम्पते ॥१३५॥

ગુજરાતી :- આ પ્રમાણે ગુરુમહારાજના મુખથી પૂર્વોક્ત દૃષ્ટાન્ત સાંભળી નાભાકરાજાએ ગુરુમહારાજાને નમસ્કાર કરી કહ્યું, "પ્રભો! આ કથાનક સાંભળી મારું હૃદય ઘણું જ કંપાયમાન થાય છે." ॥૧૩૫॥

हिन्दी :- इस तरह गुरुमहाराज के मुख से उपरोक्त दृष्टान्त सुन कर नाभाकराजा ने गुरुमहाराज को नमस्कार कर के कहा, "हे प्रभो! यह सुनकर मेरा हृदय बहुत ही कांप रहा है।"॥१३५॥

मराठी :- हा तऱ्हेने गुरूमहाराजांच्या तोंडातून पूर्वोक्त उदाहरण ऐकून नाभाक राजाने गुरूंना नमस्कार केला व म्हणाला, "हे महाराज! असे कथानक ऐकून माझे हृदय फार कांपत आहे."॥१३५॥

English :- After have heard from the reverend priest about the incidents of the past life, King Nabhak bowing to the priest says that his heart shivers with fright.

**गुरुरूचेऽथ यद्येवं, तत्कथामग्रतः शृणु॥**
**यथा सम्यक् फलं वेत्सि, देवद्रव्यविनाशिनाम् ॥१३६॥**

अन्वयः- अथ गुरुः ऊचे। यदि एवं तत् अग्रतः कथां शृणु। यथा देवद्रव्यविनाशिनां सम्यक् फलं वेत्सि ॥१३६॥

*विवरणम्:- अथ नाभाकवचनात् अनन्तरं गुरुः ऊचे बभाषे। यदि एवं तर्हि अग्रतः नागकथां शृणु आकर्णय। यथा येन देवस्य द्रव्यं देवद्रव्यम्। देवद्रव्यं विनाशयन्ति इत्येवंशीलाः देवद्रव्यविनाशिनस्तेषां देवद्रव्यविनाशिनां सम्यक् फलं वेत्सि जानासि ॥१३६॥*

सरलार्थः- अनन्तरं गुरुः उवाच - यदि एवं तर्हि त्वं नागकथामग्रे शृणु। येन त्वं देवद्रव्यविनाशिनां सम्यक् फलं जानासि ॥१३६॥

ગુજરાતી :-ત્યારે ગુરુમહારાજે કહ્યું કે - "જો એમ છે તો હવે આગળ નાગગોષ્ઠીની કથા સાંભળ, કે જેથી દેવદ્રવ્યનો વિનાશ કરનારને કેવું ફળ પ્રાપ્ત થાય છે તેનું તને સમ્યક્ પ્રકારે જાણપણું થાય અને તેનાથી તું સદાને માટે અલગ રહે." ॥૧૩૬॥

हिन्दी :- तब गुरुमहाराजने कहा, "यदि ऐसा है तो आगे की नागगोष्ठी की कथा सुनो कि जिससे देवद्रव्य का विनाश करनेवाले को कैसा फल प्राप्त होता है इस बात की तुम्हे सम्यक् प्रकार से जानकारी हो जायेंगी। जिससे तुम सदा के लिये उससे अलग हो जाओगे।"॥१३६॥

मराठी :- तेव्हा गुरुमहाराज म्हणाले, "जर असे असेल तर तू त्या नागगोष्ठीची पुढची गोष्ट ऐक की, जेणे करून तुला, सम्यक् प्रकारे देवद्रव्य विनाश करणाऱ्यांना काय फळ मिळते त्यांची जाणीव होइलं व तू नेहमी त्यांच्या पासून दूर राहशील."॥१३६॥

English :- At this the priest replied that King Nabhak should now be ready to hear the remaining part of the story of the Nag family, so that he can understand what fruits one can obtain on himself, if he utilizes God's wealth, and therfore be miles apart from it.

**षष्टि वर्षसहस्राणि, श्रीशत्रुञ्जयपर्वते ॥**
**आयुर्भुक्त्वा नागजीवो, व्यन्तरश्च्युतवानथ ॥१३७॥**

अन्वयः- अथ व्यन्तरः नागजीवः श्रीशत्रुञ्जयपर्वते षष्टिवर्षसहस्राणि आयुः भुक्त्वा ततः च्युतवान् ॥१३७॥

*विवरणम्:- अथ अनन्तरं व्यन्तरः नागस्य जीवः श्रिया युक्तः शत्रुञ्जयपर्वतः श्रीशत्रुञ्जयपर्वतः, तस्मिन् श्रीशत्रुञ्जयपर्वते वर्षाणां सहस्राणि वर्षसहस्राणि। षष्टिः वर्षसहस्राणि षष्टिवर्षसहस्राणि आयुः आयुष्यं भुक्त्वा उपभुज्य ततः च्युतवान् अच्यवत् ॥१३७॥*

सरलार्थः- व्यन्तरः नागजीवः श्रीशत्रुञ्जयपर्वते षष्टिवर्षसहस्राणि आयुः भुक्त्वा ततः अच्यवत् ॥१३७॥

ગુજરાતી :- વ્યંતરદેવપણે ઉત્પન્ન થયેલ નાગશ્રેષ્ઠીનો જીવ શ્રીશત્રુંજય પર્વત ઉપર સાઠ હજાર વર્ષનું આયુષ્ય ભોગવી ત્યાંથી ચ્યવ્યો. ॥૧૩૭॥

हिन्दी :- व्यंतरदेव के रूप में उत्पन्न नागश्रेष्ठी का जीव श्री शत्रुंजय पर्वत के उपर साठ हजार वर्ष का आयुष्य पूर्ण कर के वहाँ से पतित हुआ॥१३७॥

मराठी :- व्यंतरदेव बनलेला त्या नागश्रेष्ठीचा जीव श्रीशत्रुंजय पर्वतावरून पूर्ण साठ हजार वर्षापर्यन्तचे आयुष्य भोगून तेथून ते पतित झाला.॥१३७॥

English :- Now the soul of Nag who was an ordinary God *(Vyantar)* lived on the mount of Satrunjay for Sixty thousand years. Then after completing his life there, he was degenerated.

**कान्तिपुर्यां रुद्रदत्त - कौटुम्बिकसुतोऽभवत् ॥**
**सोमाभिधानस्तन्माता, पञ्चमेऽब्देऽहिना मृता ॥१३८॥**

अन्वयः- कान्तिपुर्यां सोमाभिधानः रुद्रदत्तकौटुम्बिकसुतः अभवत्। पंञ्चमे अब्दे तन्माता अहिना मृता ॥१३८॥

विवरणम्:- *कान्तिपुर्यां नाम नगर्यां सोमः अभिधानं यस्य सः सोमाभिधानः सोमनामा रुद्रदत्तः कौटुम्बिकः रुद्रदत्तकौटुम्बिकः। रुद्रदत्तकौटुम्बिकस्य सुतः पुत्रः अभवत्। जन्मनः अनन्तरं पञ्चमे अब्दे वर्षे तस्य माता तन्माता तस्य जननी अहिना सर्पेण मृता अम्रियत ॥१३८॥*

सरलार्थः- ततः सः नागजीवः ततः च्युत्वा कान्तिपुर्यां नगर्यां सोमनामा रुद्रदत्तकौटुम्बिकस्य सुतः अभवत्। तस्य पञ्चमे वर्षे तस्य माता सर्पदंशेन मृता ॥१३८॥

ગુજરાતી :- **અને કાંતિપુરી નગરીમાં રુદ્રદત્ત નામના કુટુંબીનો સોમ નામનો દીકરો થયો. તે પુત્ર જ્યારે પાંચ વર્ષની ઉમ્મરનો થયો ત્યારે તેની માતા સર્પદંશથી મરણ પામી. ॥૧૩૮॥**

हिन्दी :- और कांतिपुरी नाम की नगरी में रुद्रदत्त नाम के गृहस्थ के घर सोम नाम के पुत्र के रूप में जन्म लिया। लेकिन उसकी पांच वर्ष की ही उम्र में उसकी माता की सर्पदंश के कारण मृत्यु हो गई ॥१३८॥

मराठी :- आणि कांतिपुरी नावाच्या नगरामध्ये रुद्रदत्त नावाच्या गृहस्थाच्या घरी सोम नावाचा मुलगा झाला. पण तो पाच वर्षाचा असतानां त्याची आई सर्पदंशाने मरण पावली.॥१३८॥

English :- He was born in a city named Kantipuri, to a man named Rudradutt and was named as Soam. But due to a snake-bit, his mother was snatched away from him, when he was just five years old.

**तत्रास्ति नास्तिकः प्राति-वेश्मिको देवपूजकः ॥**
**सोमोऽपि सह तत्पुत्रै- र्याति देवनिकेतने ॥१३९॥**

अन्वयः- तत्र नास्तिकः देवपूजकः प्रातिवेश्मिकः अस्ति । सोमः अपि तत्पुत्रैः सह देवनिकेतने याति ॥१३९॥

विवरणम्:- *तत्र तस्यां नगर्यां नास्तिकः नाम देवस्य पूजकः देवपूजकः प्रातिवेश्मिकः अस्ति । सोमः अपि तस्य नास्तिकस्य पुत्राः तत्पुत्राः तैः तत्पुत्रैः नास्तिकपुत्रैः सह देवस्य निकेतनं देवनिकेतनं देवमन्दिरं याति गच्छति ॥१३९॥*

सरलार्थः- तस्यां कान्तिपुर्यां नास्तिकः नाम देवपूजकः प्रातिवेश्मिकः अस्ति। सोमः अपि तस्य नास्तिकस्य पुत्रैः सह देवमन्दिरं याति ॥१३९॥

ગુજરાતી :-તે નગરીમાં તેના ઘરની નજીક નાસ્તિક નામનો દેવનો પૂજારી રહેતો હતો, તે પૂજારીના પુત્રો સાથે સોમ પણ દેવમંદિરમાં જવા લાગ્યો. ॥૧૩૯॥

हिन्दी :- उस नगरी में उसके घरके निकट नास्तिक नाम का एक देवपूजारी पडोस में रहता था और उस पूजारी के पुत्रों के साथ सोम भी देवमंदिर में जाने लगा॥१३९॥

मराठी :- त्या नगरीत नास्तिक नावाचा पुजारी त्याच्या शेजारी राहत होता, आणि तो सोम त्या पुजाऱ्याच्या मुलाबरोबर देवमंदिरात जाऊ लागला.॥१३९॥

English :- Close to his house, there used to be a hindu priest (*pujari*) named Nastik. Soam as a child used to go to the temple along with the *pujari's* son.

देवद्रव्यमयैः पूजा-ऽवशिष्टैश्चन्दनैर्वपुः ॥
विलिप्याकण्ठमाच्छाद्य, वाससा पर्यटत्यसौ ॥१४०॥

अन्वयः- असौ पूजाऽवशिष्टैः देवद्रव्यमयैः चन्दनैः वपुः विलिप्य वाससा आकण्ठम् आच्छाद्य पर्यटति ॥१४०॥

विवरणम्:- *असौ सोमः पूजायाः अवशिष्टानि पूजावशिष्टानि पूजां कृत्वाऽवशिष्टानि देवस्य द्रव्यं देवद्रव्यम्। देवद्रव्यस्य विकाराः देवद्रव्यमयानि, तैः देवद्रव्यमयैः चन्दनैः वपुः शरीरं विलिप्य वाससा वस्त्रेण कण्ठात् आ आकण्ठं कण्ठपर्यन्तं आच्छाद्य पर्यटति भ्रमति ॥१४०॥*

सरलार्थः- असौ सोमः पूजां कृत्वा अवशिष्टैः देवद्रव्यमयैः चन्दनैः शरीरं विलिप्य वस्त्रेण आकण्ठं आच्छाय च नास्तिकपुत्रैः सह पर्यटति ॥१४०॥

**ગુજરાતી :- પૂજા કરતાં બાકી રહેલ દેવદ્રવ્ય રુપ ચંદનથી પોતાના આખા શરીરે વિલેપન કરી, કોઈના દેખાવમાં ન આવે માટે ગળા સુધી વસ્ત્ર ઢાંકીને સોમ હમેશાં પૂજારીના છોકરાઓ સાથે રઝળવા લાગ્યો. ॥૧૪૦॥**

हिन्दी :- .पूजा करने के पश्चात् बाकी बचे हुए देवद्रव्यरूप चंदन का अपने पूरे शरीर पर लेप कर के (किसी के दिखने में न आये इसलिये) गले तक कपडा ढाँक कर वह सोम हमेशा उस पूजारी के लडके के साथ भटकने लगा॥१४०॥

मराठी :- पूजा करून उरलेले देवद्रव्यरूपी चंदनाचा आपल्या संपूर्ण शरीरावर लेप करून (कोणाच्या नजरेत येऊ नये म्हणून.) गळ्यापर्यंत वस्त्राने झाकून तो सोम पुजाऱ्याच्या मुलासोबत हिंडू लागला.॥१४०॥

English :- After performing the puja, Soam used to apply the remaining Sandlewood, which is considered as God's wealth, on his body and cover it up, up to the neck, so that no one will have a glimpse of it and so roam about along with the pujari's son.

वय:स्थ: सोऽन्यदा देव-कोषं हत्वा पलायित: ॥
स्तेना मुषित्वा तं पार-सीकदेशे विचिक्रियु: ॥१४१॥

अन्वय:- अन्यदा वय:स्थ: स: देवकोषं हत्वा पलायित:। स्तेना: तं मुषित्वा पारसीकदेशे विचिक्रियु: ॥१४१॥

विवरणम्:- *अन्यदा एकस्मिन् दिवसे वयसि तिष्ठतीति वय:स्थ: यौवनस्थ: स: सोम: देवस्य कोष: देवकोष: तं देवकोषं देवद्रव्यनिधिं हत्वा पलायित: पलायता स्तेना: तं मुषित्वा पारसीकदेशे विचिक्रियु: व्यक्रीणन् ॥१४१॥*

सरलार्थ:- एकदा यौवनस्थ: स: देवकोषं हत्वा पलायित:। स्तेना: तं मुषित्वा पारसीकदेशे व्यक्रीणन् ॥१४१॥

ગુજરાતી :- હવે જ્યારે સોમ યોગ્ય ઉમ્મરનો થયો ત્યારે એક દિવસ તે શિવના મંદિરમાંથી દેવનો ભંડાર ચોરીને નાસી ગયો, તેનું ચોર લોકોએ હરણ કરી પારસીક દેશમાં વેચ્યો. ॥૧૪૧॥

हिन्दी :- बाद में जब सोम योग्य उम्र का हुआ, तब एक दिन शिव के मंदिर में से देव का भंडार चुराकर भाग गया, लेकिन चोरों ने उसका अपहरण कर के उसे पारसीक देश में बेच दिया॥१४१॥

मराठी :- नंतर सोम युवावस्थेत आला, तेव्हा एके दिवशी तो शिवमंदिरांतून देवांचे भंडार चोरून पळाला पण इतर चोरांनी ते हरण करून पारसीक देशात विकले.॥१४१॥

English :- When Soam came of age, he one day stole the wealth of the Shiva temple and took to his heels, only to be caught by some bandits, who abducted him and snatched away the money and sold him in the kingdom of Prussia.

तत्र वस्त्राणि रज्यन्ते, तस्य रक्तैस्ततोऽसकौ ॥
पलाय्याऽम्भोधिमुत्तीर्य, व्रजन्नध्वनि कुत्रचित् ॥१४२॥
ग्रामप्रवेशेऽभ्यायान्तं मुनिं मासोपवासिनम् ॥
विहत्य यष्ट्या त्रीन् वारान् पापः पृथ्व्यामपातयत् ॥१४३॥

अन्वयः- तत्र तस्य रक्तैः वस्त्राणि रज्यन्ते। ततः असकौ पलाय्य अम्भोधिमुत्तीर्य अध्वनि व्रजन् कुत्रचित् -- (अग्रिमेण सम्बन्धः) ॥१४२॥

ग्रामप्रवेशे अभ्यायान्तं मासोपवासिनं मुनिं यष्ट्या त्रीन् वारान् निहत्य पापः पृथ्व्यामपातयत् ॥१४३॥

*विवरणम्:- तत्र पारसीकदेशे तस्य रक्तैः रुधिरैः वस्त्राणि रज्यन्ते। ततः असकौ सोमः पलाय्य पलायनं कृत्वा अम्भांसि धीयन्तेऽस्मिन्निति अम्भोधिः वारिधिः तं अम्भोधिं वारिधिम् उत्तीर्य अध्वनि मार्गे व्रजन् गच्छन् कुत्रचित् कस्मिन्नपि -- - ग्रामप्रवेशे इत्यग्रिमेण सम्बन्धः। ॥१४२॥*

*कस्मिन्नपि ग्रामे प्रवेशः ग्रामप्रवेशः तस्मिन ग्रामप्रवेशे अभ्यायान्तं सम्मुखमागच्छन्तं मासं उपवासः अस्यास्तीति मासोपवासी तं मासोपवासिनं मुनिं यष्ट्या दण्डेन त्रीन् वारान् निहत्य आहत्य पापः सः सोमः पृथ्व्यां भूमौ अणतयत् अपीपतत् ॥१४३॥*

सरलार्थः- तस्मिन् पारसीकदेशे तस्य रुधिरैः वस्त्राणि रज्यन्ते। ततः सः पलाय्य सागरमुत्तीर्य मार्गे गच्छन् कस्मिन्नपि ----॥१४२॥

कस्मिन्नपि ग्रामप्रवेशे (मार्गे गच्छन् सः सोमः कस्मिन् अपि ग्रामे प्राविशत् तदा) सम्मुखमागच्छन्तं मासोपवासिनं मुनिं दण्डेन आहत्य सः पापः भूमौ अपातयत् ॥१४३॥

**ગુજરાતી :- પારસીક દેશમાં તેના લોહી વડે વસ્ત્રો રંગાવા લાગ્યા. આવી રીતે આપત્તિમાં આવી પડેલો તે સોમ લાગ જોઇ ત્યાંથી નાઠો, સમુદ્ર પાર કરીને રસ્તામાં જતાં કોઇ એક ગામ આવ્યું. ॥૧૪૨॥**

**ગામમાં પેસતાં જ તેની સન્મુખ આવતા એક માસના ઉપવાસવાળા એક મુનિને જોઈને તે પાપીએ લાકડી વડે ત્રણ પ્રહાર કરીને જમીન ઉપર પાડી દીધા. ॥૧૪૩॥**

हिन्दी :- उस पारसीक देश में उसके ही लहु से कपडे रंगे जाते थे। इस तरह बडी मुसीबत में फसा हुआ वह सोम एक दिन मौका पांकर (देखकर) वहाँ से भाग निकला। समुद्र पार कर के रास्ते से जाते हुए उसको कोई गांव दिखाई दिया। गाँव में प्रवेश करते ही उसने सामने से आते हुए एक मास के उपवास किये हुए मुनि को देखा और उस पापी ने लकडी से तीन बार प्रहार कर के उन्हे जमीन पर गिरा दिया॥१४३॥

मराठी :- पारसीक देशांत तर त्याच्याच रक्तांने वस्त्र रंगले जात होते अशा भयंकर अडचणीत सापडलेला तो सोम एकेदिवशी संधि पाहून तेथून पळाला. समुद्र पार करून रस्त्याने जातांना त्याला एक गांव दिसले. गावात प्रवेश करताच त्याला समोरून येणारे एक महिन्याचे उपवास करणारे एक मुनी दिसले. आणि त्या पाप्याने काठीच्या साहाय्याने तीन वेळा प्रहार करून त्या मुनीला जमिनीवर पाडले.॥१४३॥

Engligh :- In the kingdom of Prussia, he was so badly ill-treated, that his clothes used to be drenched with his own blood, One day Soam who was in such a disastrous agony, ran away when he had a wonderful opportunity. He crossed the ocean and reached a shore. He walked about until he came across a village , where he seen a monk who had fasted for a month coming towards him. Soam who had a cruel and a sinful heart, hit him thrice on his head and struck him dead, with a stick.

**तस्मिन्नथ विपन्नेऽसौ, नश्यन्नारक्षकैर्धृतः ॥**
**कृपया मोचितः श्राद्धैः, पलाय्यं कृतवानथ ॥१४४॥**

अन्वयः- अथ तस्मिन् विपन्ने सति असौ नश्यन् आरक्षकैः धृतः। श्राद्धैः कृपया मोचितः पलाय्यां कृतवान् ॥

विवरणम्:- *अथ अनन्तरं तस्मिन् मुनौ विपन्ने मृते सति नश्यन् पलायमानः असौ आ समन्तात् रक्षन्तीति आरक्षकाः, तैः आरक्षकैः रक्षकपुरुषैः धृतः। परं श्राद्धैः श्रावकैः कृपया दयया मोचितः। ततः सः पलायनं कृतवान्। पलाय्य वनं गतवान् ॥१४४॥*

सरलार्थः- अनन्तरं यदा स मुनिः मृतः तदा पलाय्य गच्छन् असौ रक्षकैः धृतः। परं श्रावकैः मोचितः। ततः स पलायनं कृत्वा वनं गतवान् ॥१४४॥

ગુજરાતી :- લાકડીના અતિશય પ્રહારથી મુનિરાજ ત્યાં જ મરણ પામ્યા. મુનિને મારી સોમ ત્યાંથી નાસતો હતો તેવામાં રસ્તામાં કોટવાળેએ પકડ્યો, પણ ત્યાંના દયાળુ શ્રાવકોએ કરૂણા લાવી છોડાવ્યો. ત્યાર બાદ સોમ ત્યાંથી પલાયન થઈ જંગલમાં ચાલ્યો ગયો.॥૧૪૪॥

हिन्दी :- लकडी के प्रहार से उस मुनि की मृत्यु हो जाने से सोम वहाँ से भाग रहा था, कि बीच में सिपाहीओने उसे पकड लिया। लेकिन कुछ दयालु श्रावकों ने दया कर के उसे छुडवाया। उसके बाद वहाँ से भाग कर वह जंगल में गया॥१४४॥

मराठी :- काठीच्या प्रहाराने मुनीचे मरण होताच सोम तेथून पळाला पण मध्येच शिपायांनी त्याला धरले, तेव्हा कित्येक दयालु श्रावकांनी दया करून त्याला सोडविले. तेथून पळून तो लगेच एका जंगलात शिरला.॥१४४॥

Engligh : When he realized that he had killed the monk, he was afraid and began running away only to be encountered by some soldiers, who caught him. But a few laymen passing by, took pity on him and appealed to the soldiers to free him. When he was set free, he ran away from there and entered a jungle.

**मृत्वा दावाग्निनाऽरण्ये, सप्तमं नरकं गतः ॥**
**ऋषिहत्यामहापापं, तत्कालं स्यात् फलप्रदम् ॥१४५॥**

अन्वयः- अरण्ये दावाग्निना मृत्वा सः सप्तमं नरकं गतः। मुनिहत्यामहापापं तत्कालं फलप्रदं स्यात्॥१४५॥

*विवरणम्:- अरण्ये विपिने दावाग्निना दग्धः मृत्वा मरणं प्राप्य सः सप्तमं नरकं गतः अगच्छत्। तथाहि मुनेः हत्या हिंसनं मुनिहत्या। महत्च तत् पापं च महापापं वर्तते। तत् तत्कालमेव सपदि एव फलं प्रददाति इति फलप्रदं स्यात् ॥१४५॥*

सरलार्थ:- अरण्ये दावाग्निना दग्ध: स: मृत्वा सप्तमं नरकं गत:। यत: मुनिहत्या महापापं वर्तते। तत् तत्कालमेव फलं ददाति।।१४५।।

ગુજરાતી :-અરણ્યમાં દાવાનળથી મરણ પામીને સાતમી નારકીમાં ગયો, કારણ કે મુનિહત્યાનું મહાપાપ તત્કાલ ફળ આપે છે.।।૧૪૫।।

हिन्दी :- उस अरण्य में दावानल में जलकर उसकी मृत्यु हो गई। मर कर वह सातवी नरक में गया। क्योंकि मुनि हत्या का पाप तत्काल (अनिष्ट) फल देता है।।१४५।।

मराठी :- त्या जंगलात तो दावाग्नीमध्ये जळून मरण पावला. मेल्यानंतर तो सातव्या नरकांत गेला. कारण मुनी हत्येचं पाप लवकरच फळ देणारे बनते.।।१४५।।

Engligh :- He died in a fire conflagration in the forest and was thrown in the seventh hell because killing a monk gives one a very agonizing and a calamitous, fruit.

**सागराणि त्रयस्त्रिंश-त्तत्र भुक्त्वा महाव्यथा:।।**
**उद्धृतो घोरसंसारं भ्रमित्वा हालिकोऽभवत्।।१४६।।**

अन्वय:- तत्र त्रयस्त्रिंशत् सागराणि महाव्यथा: भुक्त्वा उद्धृत: घोरसंसारं भ्रमित्वा हालिक: अभवत् ।।

*विवरणम्:- तत्र तस्मिन् सप्तके नरके त्रयस्त्रिंशत् सागराणि महत्यश्च ता: व्यथा: च महाव्यथा: ता: महाव्यथा: भुक्त्वा महान्ति कष्टानि अनुभूय तत: नरकात् उद्धृत: निष्क्रान्त: घोरश्चासौ संसारश्च घोरसंसार:, तं घोरसंसारं भ्रमित्वा हालिक: कृषक: अभवत् ।।१४६।।*

सरलार्थ:- तस्मिन् सप्तमे नरके त्रयस्त्रिंशत् सागराणि महाव्यथा: घोरदु:खानि भुक्त्वा तत: निष्क्रम्य घोरसंसारं भ्रमित्वा हालिक: अभवत् ।।१४६।।

ગુજરાતી :- હવે તે સોમ સાતમી નારકીમાં તેત્રીશ સાગરોપમ સુધી મહાવ્યથાઓ ભોગવી, ત્યાંથી નીકળી દુ:ખમય સંસારમાં ભટકી ભટકી ખેડુત થયો.।।૧૪૬।।

हिन्दी :- अब वह सोम सातवाँ नर्क में तेंत्तीस सागरोमप (समय) तक यातनाएँ भोग कर वहाँ से निकल कर दुःखमय संसार में भटक कर किसान बना ॥

मराठी :- आता तो सोम सातव्या नरकांत तेहतीस सागरोपम (कालखंड) पर्यंत पुष्कळ यातना भोगून तेथून निघून तो दुःखपूर्ण संसारात भटकून शेतकरी बनला.॥१४६॥

English :- Now Soam had to undergo terrible and agonizing disasters, for thirty three *Sagaropans*. Then he was born in this dolorous and troublous earth as a farmer after meandering and skulking a lot on this earth.

**कौशिकाख्योऽम्बरग्रामे, ग्रामेशस्य गृहे च सः ॥**
**कर्माणि कुर्वन् सर्वेषां, हालिकानां कृतेऽन्यदा ॥१४७॥**
**आदाय भक्तं प्राचालीत् मार्गे मासोपवासिनम्॥**
**वीक्ष्य सम्मुखमायान्तं मुनिं भक्त्या न्यमन्त्रयत् ॥१४८॥**

अन्वयः- अम्बरग्रामे कौशिकाख्यः ग्रामेशस्य गृहे कर्माणि कुर्वन् सः अन्यदा सर्वेषां हालिकानां कृते ॥१४७॥

भक्तं आदाय प्राचालीत्। मार्गे मासोपवासिनं मुनिं सम्मुखमायान्तं वीक्ष्य भक्त्या न्यमन्त्रयत् ॥१४८॥

विवरणम्:- *हालिकत्वेन उत्पन्नः सोमः अम्बरनाम्नि ग्रामे कौशिकः आख्या नाम यस्य सः कौशिकाख्यः कौशिकनामा, ग्रामस्य ईशः ग्रामेशः तस्य ग्रामेशस्य ग्रामस्वामिनः गृहे सदने कर्माणि कुर्वन् विदधत् उपजीविकां अकरोत्। अन्यदा एकस्मिन् समये सः सर्वेषां हालिकानां कृषकाणां कृते --- (अग्रिमेण श्लोकेन सम्बन्धः।) ॥१४७॥*

*सर्वेषां हालिकानां कृते भक्तं भोजनम् आदाय गृहीत्वा अचालीत् अचलत्। मार्गे अध्वनि मासम् उपवासाः अस्य सन्तीति मासोपवासी तं मासोपवासिनं मासं यावत् कृतोपवासं मुनिं सम्मुखम् आयान्तम् आगच्छन्तं वीक्ष्य अवलोक्य भक्त्या महता प्रेम्णा तं मुनिं भिक्षार्थं न्यमन्त्रयत् ॥१४८॥*

सरलार्थः- सः हालिकः अम्बरनाम्नि ग्रामे कौशिकनामाऽभूत्। असौ कौशिकः ग्रामस्वामिनः गृहे कर्माणि कुर्वन् उपाजीवत्। एकदा सः कौशिकः सर्वेषां हालिकानां कृते ॥१४७॥

(सर्वेषां कृषकाणां कृते) भोजनमादाय अचालीत्। मार्गे मासोपवासिनं मुनिं सम्मुखं आगच्छन्तं वीक्ष्य भक्त्या तं भिक्षार्थं न्यमन्त्रयत् ॥१४८॥

ગુજરાતી :- ખેડુતના ભવમાં જન્મ લીધેલ સોમનું નામ કૌશિક હતું. તે કૌશિક અંબર નામના ગામમાં તે ગામના સ્વામીને ઘેર કામ કરતો અને પોતાનો નિર્વાહ ચલાવતો.॥૧૪૭॥

એક દિવસ કૌશિક સર્વ ખેડુનો માટે ભાત લઈને ખેતરે જવાને નીકળ્યો ત્યારે રસ્તામાં એક માસના ઉપવાસવાળા એક મુનિરાજને સામા આવતાં જોઈ અત્યંત ભક્તિપૂર્વક પોતાની પાસે રહેલા ભાત વહોરવા વિનંતી કરી॥૧૪૮॥

हिन्दी :- अंबर नाम के गांव में, गांव के मालिक के घर वह सोम, कौशिक नाम का नौकर बना। वह मालिक के सभी काम कर के गुजरान चलाता था। एक दिन वह कौशिक, सभी किसानों के लिये खाना लेकर खेतो की ओर जा रहा था कि, रास्ते में एक मास के उपवास करनेवाले मुनि को सामने से आते देखकर उसने उन्हे अत्यंत भक्तिपूर्वक चावल ग्रहण करने की विनंती की॥१४८॥

मराठी :- अंबर नावाच्या गावात गावाच्या धन्यांच्या घरी तो सोम कौशिक नावाचा नौकर झाला. तो मालकाचे सर्व काम करून आपला गुजराण करीत होता. एके दिवशी तो कौशिक सगळ्या शेतकऱ्यांच्या साठी भात घेऊन शेतांकडे चालला असताना रस्त्यात एक महिन्याचे उपवास करणारे एक मुनि त्याला समोर दिसले. त्याने त्यांना मोठ्या भक्तिभावाने आपल्या जवळचे भात घ्यायला विनंती केली.॥१४८॥

Engligh :- Soam became a servant to the headman of the village named Ambar, and was named Kaushik. He used to do all types of odd jobs for the headman and earn his living. One day Kaushik was taking rice for the farmers in the fields. where he encountered a monk, who had abstinated for a month, coming towards him. Kaushik very devoutly and fervently appealed to the monk to accept the rice.

यात्राद्वयफलं पूर्वं प्रत्यब्दं यत् समुद्रतः ॥
तेन प्राप्तं ततः पुण्यात् तस्यैषा वासनाऽजनि॥१४९॥

अन्वयः:- तेन पूर्वं समुद्रतः प्रत्यब्दं यत् यात्राद्वयफलं प्राप्तं, ततः पुण्यात् तस्य एषा वासना अजनि ॥१४९॥

विवरणम्:- *तेन कौशिकनाम्ना हालिकेन पूर्वं पूर्वस्मिन् भवे समुद्रतः समुद्रपालभूपात् अब्दे अब्दे प्रत्यब्दं प्रतिवर्षं यद् यात्रयोः द्वयं यात्राद्वयम्। यात्राद्वयस्य फलं यात्राद्वयफलं द्वयोः यात्रयोः फलं प्राप्तं अधिगतं आसीत्। ततः पुण्यात् तस्मात् पुण्यात् तस्य कौशिकस्य एषा मुनेः भिक्षाकृते निमन्त्रणकरणस्य वासना इच्छा अजनि अजायत ॥१४९॥*

सरलार्थः:- तेन कौशिकेन पूर्वस्मिन् भवे समुद्रपालनृपात् प्रतिवर्षं द्वयोः यात्रयोः फलं प्राप्तमासीत्। तस्मात् पुण्यात् तस्य कौशिकस्य मुनेः भिक्षाहेतोः निमन्त्रणकरणस्य वासना अजायत ॥१४९॥

ગુજરાતી :-તેને આ ખેડુતના ભવમાં મુનિને અન્ન વહોરાવવા રુપ શુભ અધ્યવસાય ઉત્પન્ન થયો તેનું કારણ એજ કે, તેણે પૂર્વભવમાં સમુદ્રપાલ રાજા પાસેથી દરવર્ષે બે યાત્રાનું ફળ મેળવ્યું હતું, અને તે પુણ્યના પ્રભાવથી જ તેને આવા પ્રકારની શુભ વાસના ઉત્પન્ન થઈ ॥૧૪૯॥

हिन्दी :- उसे इस किसान के भवमें मुनि को भोजन देने की शुभ भावना उत्पन्न हुई। उसका कारण यही कि, उसने पूर्वभव में समुद्रपाल राजा के पास से प्रतिवर्ष दो यात्रा का फल प्राप्त किया और उस पुण्य के प्रभाव से ही उसे इस प्रकार की शुभ भावना उत्पन्न हुई॥१४९॥

मराठी :- त्याला या शेतकऱ्याच्या जन्मात मुनीला जेवण वाढण्याची शुभभावना झाली त्याचे कारण हेच की, त्याने पूर्वभवांत समुद्रपाल राजाकडून प्रतिवर्षी दोन यात्रेचे फळ मिळविले होते आणि त्याच्या पुण्य प्रभावानेच त्याला अशा प्रकारची शुभभावना झाली.॥१४९॥

Engligh :- He therefore got this auspicious and benign chance and desire to serve food for the monk, in this birth, because he had attained the fruit of two simultanous pilgrimages from king Samudrapal and also due to the meritocratic magnanimity of the king.

स्यादेतद्भक्तभोक्तॄणामन्तरायस्ततो न मे ॥
कल्पतेऽन्नमिदं साधुनेत्युक्तेच सको जगौ ॥१५०॥

अन्वय:- एतद्भक्तभोक्तॄणामन्तराय: स्यांत् । ततो मे इदम् अन्नं न कल्पते । इति साधुना उक्ते सति सक: जगौ ॥१५०॥

*विवरणम्:- त्वमेतद् भक्तं हालिकानां कृते नयसि । अत: एतद् भक्तं मया भिक्षायां गृहीतं चेत् एतद् भक्तं भोजनं भुञ्जते इति एतद्भक्तभोक्तार: तेषां एतद्भक्तभोक्तॄणाम् एतदन्नभोजिनाम् अन्तराय: प्रत्यवाय: स्यात् । तत: तस्मात् कारणात् मे मह्यं इदमन्नं न कल्पते। इति साधुना मुनिना उक्ते सति स: जगौ जगाद ॥१५०॥*

सरलार्थ:- त्वमेतद् अन्नं कृषकाणां कृते नयसि। अत: मया एतद्भक्तं भिक्षायां गृहीतं चेत् एतदन्नभोक्तॄणामन्तराय: स्यात्। तस्मात् एतदन्नं मम न कल्पते। इति मुनिना उक्ते स: कौशिक: अब्रवीत् ॥१५०॥

ગુજરાતી :- કૌશિકે ભાત ગ્રહણ કરવાની વિનંતી કરી ત્યારે મુનિરાજે કહ્યું, 'આ ભોજન તું ખેતરમાં કામ કરનારાઓ માટે લઇ જાય છે, તે અન્ન જો હું ગ્રહણ કરું તો તેઓને અંતરાય થાય, તેથી આ ભાત મારે વહોરવું કલ્પે નહીં.' આ પ્રમાણે મુનિરાજે જ્યારે ભાત વહોરવાની અનિચ્છા દર્શાવી ત્યારે તેણે કહ્યું કે ॥૧૫૦॥

हिन्दी :- कौशिक ने जब मुनिराज को अन्न ग्रहण करने की विनंती की तब मुनिराजने कहा कि, "यह अन्न तू खेतमें काम करनेवालों के लिये ले जा रहा है और यदि मैं यह अन्न ग्रहण करूँगा तो उनको भोजन प्राप्त नहीं होगा इसलिये यह अन्न मेरे ग्रहण करने के योग्य नहीं है।" इस तरह से जब मुनिने चावल ग्रहण करने की अनिच्छा बताई तब कौशिक कहने लगा॥१५०॥

मराठी :- कौशिकाने भात घेण्याची विनंती केली, तेव्हा मुनीने म्हटले की, "हा भात तू शेतामध्ये काम करणाऱ्यासाठी घेऊन जात आहे, आणि हें अन्न जर मी भिक्षेत घेतलें तर त्यांना अडचण होईल, म्हणून मला हे अन्न योग्य नाही." याप्रमाणे मुनिराजाने आपली अनिच्छा दाखविली तेव्हा तो कौशिक म्हणाला,॥१५०॥

Engligh :- When Kaushik offered the rice to the monk, the monk said that , as this rice is made for the hungry and exhausted bellies of the farmers, he shall not partake in it as they will have to starve. At this Kaushik spoke to the monk.

**कृत्वोपवासमप्यद्य, दास्ये भक्तं निजं ध्रुवम् ॥**
**सद्यः प्रसद्य गृह्णीतेत्याग्रहादग्रहीद् मुनिः ॥१५१॥**

अन्वयः- अद्य अहं उपवासं कृत्वाऽपि निजं भक्तं ध्रुवं दास्ये। सद्यः प्रसद्य गृह्णीत इति आग्रहात् मुनिः अग्रहीत् ॥१५१॥

*विवरणम्:- अद्य अहं उपवासं कृत्वा अपि निजं भक्तमन्नं ध्रुवं दास्ये दास्यामि। सद्यः झटिति प्रसद्य प्रसन्नाः भूत्वा गृह्णीत स्वीकुरुत। इति आग्रहात् निर्बन्धात् मुनिः अग्रहीत् आददात् ॥१५१॥*

सरलार्थः- अद्य अहं उपवासं कृत्वाऽपि निजं भक्तं निश्चितं ददामि। यूयं सद्यः प्रसद्य गृह्णीत। इति आग्रहात् मुनिः अग्रहीत् ॥१५१॥

ગુજરાતી :-હું આજે ઉપવાસ કરીને પણ મારા ભાગનું ભોજન આપને વહોરાવીશ જ, માટે મારા ઉપર કૃપા કરી જલ્દી આ ભાત ગ્રહણ કરો. આ પ્રમાણે તેના અતિશય આગ્રહથી મુનિરાજે તે અન્ન વહોર્યું.॥૧૫૧॥

हिन्दी :- "मैं आज के दिन उपवास कर के भी मेरे हिस्से का अन्न आप को परोसुंगाही इसलिये मेरे ऊपर कृपा कर के जल्दी से अन्न ग्रहण करो।" इस प्रकार से उसके अति आग्रह से मुनिराज ने अन्न का स्वीकार किया॥१५१॥

मराठी :- "आज मी उपवास करून माझ्या वाटणीचे अन्न तुम्हांला वाढीन, माझ्यावर कृपा करून लवकर तुम्ही हा भात घ्या." ह्या प्रकारे त्याने अति आग्रह केल्याने मुनीने अन्नाचा स्वीकार केला.॥१५१॥

Engligh :- Kaushik pleaded to the monk, asking him to accept atleast his share of food as he will not mind forfeiting his share , if he has to. So due to Kaushik's continous insistance, the monk reluctanctly accepted the food.

**ततः कृत्वोपवासं स निषेधं चाऽसुमद्वधे॥**
**साधोः पार्श्वात् प्राप्तराज्यमिवात्मानममन्यत ॥१५२॥**

अन्वयः- ततः सः साधोः पार्श्वात् उपवासं कृत्वा असुमद्वधे निषेधं च गृहीत्वा आत्मानं प्राप्तराज्यमिव अमन्यत ॥१५२॥

*विवरणम्:-* *ततः तदनन्तरं सः कौशिकः साधोः मुनेः पार्श्वात् सकाशात् उपवासं कृत्वा (उपवासस्य प्रत्याख्यानं कृत्वा) तथा असवः प्राणाः एषां सन्ति इति असुमन्तः प्राणिनः। असुमतां वधः असुमद्वधः तस्मिन् असुमद्वधे प्राणिवधे निषेधं कृत्वा (प्राणिवधस्य प्रत्याख्यानं कृत्वा) आत्मानं, प्राप्तमधिगतं राज्यं येन सः प्राप्तराज्यः, तं प्राप्तराज्यमधिगतराज्यं इव अमन्यत॥१५२॥*

सरलार्थः:- ततः सः साधोः सकाशात् उपवासं प्राणिवधनिषेधं च प्रत्याख्यांय आत्मानं प्राप्तराज्यमिव अमन्यत ॥१५२॥

ગુજરાતી :-ત્યાર બાદ તે ખેડુતે મુનિરાજ પાસેથી ઉપવાસનું તથા પ્રાણિવધ નિષેધનું પચ્ચક્ખાણ કરી 'ખરેખર આજે મેં મહાત્મા મુનિરાજને અન્નદાન આપી રાજ્ય મેળવ્યું છે' એ પ્રમાણે પોતાના આત્માને માનવા લાગ્યો. ॥૧૫૨॥

हिन्दी :- उसके बाद उस किसान ने मुनि के पास से उपवास का और प्राणिवध न करने का नियम लिया। "सचमुच आज मैंने महात्मा मुनिराज को अन्नदान देकर राज्य प्राप्त किया है।" ऐसे भाव से वह अपनी आत्मा को धन्य मानने लगा॥१५२॥

मराठी :- त्यानंतर त्या शेतकऱ्याने मुनीकडून उपवासाची व प्राणिवध न करण्याची शपथ घेतली. "खरचं आज मी मुनींना अन्नदान देऊन राज्यच मिळविले आहे." असा तो आनंदाच्या भराने स्वतःला म्हणू लागला.॥१५२॥

English :- Then Kaushik took a staunch ordiance from the monk, that he shall abstinate and that he shall stop slaughtering animals. Now he was so much at peace and tranquillity that he felt that he had achieved a kingdom of utmost bliss and happiness.

**एवमर्जितसत्कर्मा कौशिको भद्रकाशयः ॥**
**विपद्य चित्रकूटाद्रौ, चित्रपुर्यां नृपोऽभवत् ॥१५३॥**

अन्वयः:- एवं भद्रकाशयः अर्जितसत्कर्मा कौशिकः विपद्य चित्रकूटाद्रौ चित्रपुर्यां नृपः अभवत् ॥१५३॥

*विवरणम्:-* *एवं भद्रकः आशयः यस्य सः भद्रकाशयः कल्याणाध्यवसायः अर्जितं सत् च तत् कर्म च सत्कर्म येन सः अर्जितसत्कर्मा उपार्जितपुण्यः कौशिकः विपद्य मृत्वा चित्रकूटाद्रौ चित्रकूटपर्वते चित्रपुर्यां नाग नगर्यां त्रन् पातीति नृपः राजा अभवत् ॥१५३॥*

सरलार्थ:- एवं शुभाध्यवसाय: उपार्जितपुण्य: कौशिक: मरणं प्राप्य चित्रकूटपर्वते चित्रपुर्यां नगर्यां नृप: अभवत् ॥१५३॥

ગુજરાતી :-આવી રીતે ભદ્રક પરિણામી તે કૌશિકે પુણ્ય ઉપાર્જન કરી, આયુષ્ય પૂર્ણ થતાં મરણ પામી, ચિત્રકૂટ પર્વત પર રહેલ ચિત્રપુરી નગરીમાં રાજા થયો. ॥૧૫૩॥

हिन्दी :- इसप्रकार कल्याण के परिणाम से (शुभभावना) उस कौशक ने बहुत पुण्य उपार्जित किया, आयुष्य पूर्ण कर के अगले जन्म में चित्रकूट पर्वत पर स्थित चित्रपुरी नगरी में राजा हुआ॥१५३॥

मराठी :- याप्रमाणे शुभ अध्यवसाय करणाऱ्या कौशिकाने खूप पुण्य उपार्जन केले व आयुष्य संपल्यावर मृत्यू पावून (पुढच्या जन्मी) चित्रकूट पर्वतावर असलेल्या चित्रपुरी नगरीमध्ये तो राजा झाला.॥१५३॥

Engligh :- Thus in this manner, Kaushik attained a lot of merit, due to which, after his death, he was reincarnated as a king of the city of Chitrapuri, that lies on the laps of mount Chitrakut.

**चन्द्रादित्याभिध: शुद्धदयापुण्यविभावित: ॥**
**निरामयो महारूपा-ऽनङ्गीकृतमनोभव: ॥१५४॥**

अन्वय:- चन्द्रादित्याभिध: शुद्धदयापुण्यविभावित:। निरामय: महारूपाऽनङ्गीकृतमनोभव: नृप: अभवत्॥

विवरणम्:- *चन्द्रादित्य: अभिधा नाम यस्य स: चन्द्रादित्याभिध: चन्द्रादित्यनामा, शुद्धा चासौ दया च शुद्धदया। शुद्धदया च पुण्यं च शुद्धदयापुण्ये शुद्धदयापुण्याभ्यां विभावित: संस्कारित:, निर्गत: आमय: रोग: यस्मात् स: निरामय: नीरोग:, महत् च तद् रूपं च महारूपम्। न विद्यन्ते अङ्गानि यस्य स: अनङ्ग:। मनसि भवतीति मनोभव: काम: न अनङ्ग: अननङ्ग:। अननङ्गो ऽनङ्ग: कृतोऽनङ्गीकृत:। महारूपेणाऽनङ्गीकृतो मनोभवो। येन स: महारूपाऽनङ्गीकृतमनोभव: नृप: अभवत् ॥१५४॥*

सरलार्थ:- स नृप: चन्द्रादित्यनामा अभवत्। तस्य हृदयं शुद्धदयापुण्याभ्यां विभावितं आसीत्। स: रोगरहित: अभूत्। महारूपेण च मनोभवं काममपि तिरस्कुर्वन् अभवत् ॥१५४॥

विवरणम्:- चन्द्रादित्य: अभिघा नाम यस्य स: चन्द्रादित्याभिध: चन्द्रादित्यनामा, शुद्धा चासौ दया च शुद्धदया। शुद्धदया च पुण्यं च शुद्धदयापुण्ये शुद्धदयापुण्याभ्यां विभावित: संस्कारित:, निर्गत: आमय: रोग: यस्मात् स: निरामय: नीरोग:, महत् च तद् रूपं च महारूपम्। न विद्यन्ते अङ्गानि यस्य स: अनङ्ग:। मनसि भवतीति मनोभव: काम: न अनङ्ग: अननङ्ग:। अननङ्गो ऽनङ्ग: कृतोऽनङ्गीकृत:। महारूपेणाऽनङ्गीकृतो मनोभवो। येन स: महारूपाऽनङ्गीकृतमनोभव: नृप: अभवत् ॥१५४॥

सरलार्थ:- स नृप: चन्द्रादित्यनामा अभवत्। तस्य हृदयं शुद्धदयापुण्याभ्यां विभावितम् आसीत्। स: रोगरहित: अभूत्। महारूपेण च मनोभवं काममपि तिरस्कुर्वन् अभवत् ।॥१५४॥

ગુજરાતી :- તેનું નામ ચન્દ્રાદિત્ય રાખવામાં આવ્યું હતું. ચન્દ્રાદિત્યનું હૃદય શુદ્ધ દયા અને પુણ્યના સંસ્કારવાળું હતું, શરીરે નિરોગી હતો, તેનું શારીરિક સૌંદર્ય અને લાવણ્ય એટલું બધું સુશોભિત હતું કે જાણે રૂપમાં કામદેવ પણ તેનાથી પરાભવ પામે.॥૧૫૪॥

हिन्दी :- उसका नाम चन्द्रादित्य रखा गया। उसका हृदय शुद्ध दया और पुण्य के संस्कारो से पूर्ण और शरीर निरोगी था। वह रूप और लावण्य से मानो कामदेव को भी पराजित करता था।१५४॥

मराठी :- त्याचे नाव चंद्रादित्य ठेवण्यात आले. त्याचे हृदय दया आणि पुण्याच्या संस्कारानी भरलेले तसेच त्याचे शरीर निरोगी होते. त्याने आपल्या रूप व लावण्याने कामदेवाला सुद्धा पराजित केले.

Engligh :- His name was kept as Chandraditya. His heart was always swollen up with sympathy and was embellished with meritorious actions. His body was always in the state of healthiness. He had defeated Cupid in matters of grace and beauty.

तस्याऽऽकण्ठवपुर्दुष्ट-कुष्ठेनाश्लिष्टमन्यदा ॥
तेनाऽऽकण्ठपटीच्छन्न-देह एव स तिष्ठति ॥१५५॥

अन्वय:- अन्यदा तस्य आकण्ठवपु: दुष्टकुष्ठेन आश्लिष्टम्। तेन स: आकण्ठपटीच्छन्नदेह: एव तिष्ठति ॥१५५॥

*विवरणम्:-* *अन्यदा एकस्मिन् दिने तस्य कण्ठात् आ आकण्ठम्। आकण्ठं च तद् वपुः शरीरं च आकण्ठवपुः आकण्ठं शरीरं, कुष्टं च तत् कुत्सं च दुष्टकुष्ठं, तेन दुष्टकुष्ठेन दुष्टकुष्ठरोगेण आश्लिष्टं आलिङ्गितम्। तेन कारणेन सः चन्द्रादित्यः नृपः आकण्ठं कण्ठपर्यन्तं पटया वस्त्रेण छन्नः आच्छादितः देहः यस्य सः आकण्ठपटीछन्नदेहः एव तिष्ठति। आकण्ठं शरीरं वस्त्रेण आच्छाद्य एव तिष्ठति ॥१५५॥*

सरलार्थ:- अन्यदा एकस्मिन् दिने तस्य शरीरमाकण्ठं दुष्टेन कुष्ठेन व्याप्तम्। तेन सः आकण्ठं शरीरं वस्त्रेण आच्छाद्य एव तिष्ठति ॥१५५॥

ગુજરાતી :- પૂર્વભવમાં કરેલા કર્મના ઉદયથી કોઇ દિવસ તેને પગથી માંડીને ગળા સુધી શરીરે દુષ્ટ કોઢ રોગ ઉદ્ભવ પામ્યો, તેથી તે સદૈવ ગળા સુધી વસ્ત્રથી આચ્છાદિત થઈને જ રહેવા લાગ્યો.॥૧૫૫॥

हिन्दी : किन्तु पूर्वभव में किये कर्म के उदय के कारण उसे पैर से लेकर गले तक कुष्ठरोग हो गया, जिस से वह हमेशा गले तक कपड़े पहने हुए ही रहता था॥१५५॥

मराठी :- परंतु पूर्वजन्माच्या कर्माप्रमाणे त्याला एके दिवशी पायापासून गळ्यापर्यंत वाईट कोढ झाले. ज्याच्यामुळे तो नेहमी गळ्यापर्यंत कपडा झाकूनच राहत होता.॥१५५॥

English :- But due to his past demerits, he became leprous from his neck to his feet, for which he had to cover himself up, up to his neck.

**कदाचित् प्रौढपापर्द्धिरपि पापर्द्धिहेतवे।**
**तत्सामग्रीयुतः प्राप, श्वापदानां पदं वनम् ॥१५६॥**

अन्वयः:- कदाचित् प्रौढपापर्द्धिः अपि सः पापर्द्धिहेतवे तत्सामग्रीयुतः श्वापदानां पदं वनं प्राप॥

*विवरणम्:-* *कदाचित् कस्मिंश्चित् समये प्रौढा पापानां ऋद्धिः समृद्धिः यस्य सः प्रौढपापर्द्धिः प्रौढपापसमृद्धिमान् अपि सः नृपः पापं ऋध्यतेऽनया इति पापर्द्धिः मृगया। पापर्द्धेः मृगयायाः हेतवे पापर्द्धिहेतवे मृगयायाः कृते तस्याः मृगयायाः सामग्री तत्सामग्री मृगयासामग्री। तत्सामग्र्या युतः तत्सामग्रीयुतः मृगयासामग्रीसहितः श्वापदानां हिंस्रपशूनां पदं स्थानं वनं अरण्यमाप आजगाम ॥१५६॥*

सरलार्थ:- कस्मिंश्चित् समये पूर्वभवार्जितपापकर्मणां समृद्धिमत्तरः अपि स. पापर्द्धिकृते (मृगयाकृते) मृगयासामग्रीं गृहीत्वा श्वापदानां वनमगच्छत् ॥१५६॥

ગુજરાતી :- ચન્દ્રાદિત્ય કર્મના ઉદયથી પૂર્વે કરેલા અતિશય પાપનું ફળ ભોગવી રહ્યો હતો, છતાં હજું સુધી તેની બુદ્ધિ ઠેકાણે ન આવી, અને દુષ્ટ, વિવેકહીન બનેલો તે રાજા શિકાર કરવા માટે શિકારી પશુઓથી વ્યાપ્ત બનેલા વનમાં શિકારની સામગ્રીથી સજ્જ થઈને ગયો.॥૧૫૬॥

हिन्दी :- कर्म के कारण पूर्वजन्म में किये अतिशय पापों का फल चंद्रादित्य पहले ही भोग रहा था। फिर भी उसकी मति ठिकाने नहीं आयी और दुर्बुद्धि से विवेकहीन बना वह राजा शिकार कर ने के लिये पशुओं से भरपूर जंगल में शिकार सामग्री से सज्ज होकर गया॥१५६॥

मराठी :- चंद्रादित्य राजा कर्माच्या उदयाने पूर्वी केलेल्या अतिशय पापाचे फळ भोगत होता तरीही त्याची बुद्धि ठिकाणावर आली नाही. पापात आणखी भर टाकण्यासाठी, तो शिकार सामग्रीने सज्ज होऊन शिकारीसाठी जंगलात गेला.॥१५६॥

Engligh :- Chandraditya was undergoing exorbitant turmoils due to his past demerits and uncountable sins. Even then, he couldn't see through and brush himself up a new leaf. One day he decked himself up to go for hunting in a forest, with plenty of animals worth hunting.

**तत्र रङ्गत्तुरङ्गेण, कुरङ्गवधरङ्गतः ॥**
**धावमानो मुनिं कायो-त्सर्गस्थं वीक्ष्य पृष्टवान् ॥१५७॥**

अन्वय:- तत्र कुरङ्गवधरङ्गतः रङ्गत्तुरङ्गेण धावमानः सः कायोत्सर्गस्थं मुनिं वीक्ष्य पृष्टवान् ॥१५७॥

*विवरणम्:- तत्र तस्मिन् वने कुरङ्गाणां हरिणानां वधः कुरङ्गवधः हरिणवधः। कुरङ्गवधे रङ्गः रागः आसक्तिः कुरङ्गवधरङ्गः, तस्मात् कुरङ्गवधरङ्गात् मृगहिंसानुरागात् रङ्गन् चासौ तुरङ्गश्च रङ्गत्तुरङ्गः तेन रङ्गत्तुरङ्गेण वेगवत्तराश्वेन कुरङ्गान् अनु धावमानः सः चन्द्रादित्यः कायोत्सर्गे तिष्ठतीति कायोत्सर्गस्थः, तं कायोत्सर्गस्थं कायोत्सर्गध्यानस्थितं मुनिं वीक्ष्य विलोक्य पृष्टवान् अपृच्छत् ॥१५७॥*

सरलार्थः- तस्मिन् वने मृगवधे रागवान्, वेगवत्तरतुरङ्गेण मृगान् अनु धावमानः सः कार्योत्सर्गे स्थितं मुनिं दृष्ट्वा अपृच्छत् ॥१५७॥

ગુજરાતી :- વનમાં વેગથી દોડતા ઘોડા વડે હરણીયાઓનો વધ કરવાને આસક્ત બનેલા અને તેઓની પાછળ પડેલા તે રાજાએ કાઉસગ્ગમાં રહેલા એક મુનિને દેખી પૂછ્યું કે-॥૧૫૭॥

हिन्दी :- वन में तेजी से दौडते हुए घोडे के द्वारा मृगों के वध में आसक्त बना हुआ वह राजा उनके पीछे पडा था कि राजा ने रास्ते में काउसग्ग ध्यान में लीन मुनि को देखकर पूछा कि,॥१५७॥

मराठी :- वनात हरणांचा वध करण्यात आसक्त असलेला तो राजा वेगाने धावणाऱ्या घोड्यावर बसून हरिणांचा पाठलाग करीत असता रस्त्यात त्याला कायोत्सर्ग ध्यानात स्थित असलेले मुनी दिसले. त्यांना पाहून त्याने विचारले॥१५७॥

Engligh :- As he was galloping at high speed almost equivalent to an ostrich to hunt a deer, he happen to see a monk in very deep meditation . (Kausagg dyhan). He stopped by to speak to the monk.

**कस्यां दिशि मृगा जग्मु-स्त्रिः प्रोक्ते नाऽवदन्मुनिः॥**
**राजा जिघांसुर्बाणेन, तमपि स्तम्भितोऽभितः ॥१५८॥**

अन्वयः- मृगाः कस्यां दिशि जग्मुः इति त्रिः प्रोक्तेऽपि मुनिः न अवदत्। तदा तमपि बाणेन जिघांसुः राजा अभितः स्तम्भितः ॥

विवरणम्:- *"मृगाः हरिणाः कस्यां दिशि जग्मुः ईयुः" इति त्रिः त्रिवारं प्रोक्तेऽपि मुनिः न अवदत् न अब्रवीत्। तदा तं मुनिमपि बाणेन शरेण हन्तुमिच्छुः जिघांसुः हन्तुकामः राजा चन्द्रादित्यः अभितः स्तम्भितः स्तब्धः अतिष्ठत् ॥१५८॥*

सरलार्थः- मृगाः कस्यां दिशि गताः? इति त्रिवारं पृष्टेऽपि मुनिः किञ्चित् न अवदत्। तदा तं मुनिमपि हन्तुकामः नृपः अभितः स्तम्भितः अतिष्ठत् ॥१५८॥

ગુજરાતી :-'મૃગલાઓ કઈ દિશામાં ગયા છે?' આ પ્રમાણે ત્રણ વખત ચન્દ્રાદિત્યે પૂછવા છતાં મુનિરાજ કાંઈ પણ બોલ્યા નહીં, ત્યારે તે મુનિને પણ બાણ વડે હણવા ચન્દ્રાદિત્ય તૈયાર થયો.॥૧૫૮॥

हिन्दी :- "ये मृग कौनसी दिशा में गए हैं?" इस तरह तीन बार पूछने पर भी मुनि कुछ बोले नहीं, तब वह मुनि को भी मारने के लिये बाण चढाकर तैयार हो गया॥१५८॥

मराठी :- "ही हरिणे कोणत्या दिशेने गेली आहेत?" असे त्यांना तीन वेळा विचारल्यानंतरही मुनि काहीच बोलले नाहीत. तेव्हा तो मुनिला सुद्धा ठार करण्यास धनुष्यबाण चढवून तयार झाला.॥१५८॥

Engligh :- He stopped by to ask the monk, the direction the deer had taken. As the monk didn't give him a reply, he repeated his query thrice. Even after that, when he didn't receive a reply, he was swollen with fury and was about to strike the monk with his bow and arrow.

**कायोत्सर्गं पारयित्वा मुनिस्तारस्वरं जगौ ॥**
**प्राच्याच्छुटसि नाऽद्यापि, नव्यं च कथमर्जसे?॥१५९॥**

अन्वयः- कायोत्सर्गं पारयित्वा मुनिः तारस्वरं जगौ। अद्यापि प्राच्यात् न छुटसि। नव्यं कथमर्जसे?॥१५९॥

*विवरणम्:- कायोत्सर्गं पारयित्वा मुनिः तारः गम्भीरः स्वरः यस्मिन् कर्मणि यथा स्यात् तथा तारस्वरं तारस्वरेण गम्भीरस्वरेण जगौ जगाद। त्वम् अद्यापि प्राक् भवं प्राच्यं तस्मात् प्राच्यात् पूर्वभवार्जितात् पापात् न छुटसि न मुक्तो भवसि तर्हि नवम भवं नव्यं नूतनं पापं कथं अर्जसे कथं प्राप्नोषि? ॥१५९॥*

सरलार्थः- कायोत्सर्गं पारयित्वा मुनिः गम्भीरस्वरेण उवाच - अद्यापि त्वं पूर्वभवार्जितात् पापात् मुक्तो न भवसि। नूतनं किमर्थमर्जयसि?॥१५९॥

ગુજરાતી :-મુનિએ કાઉસગ્ગ પારીને ગંભીર સ્વરે કહ્યું કે - "હજુ સુધી પૂર્વનાં બાંધેલા કર્મથી તો છૂટતો નથી, અને નવાં કર્મો કેમ બાંધે છે?"॥૧૫૯॥

हिन्दी :- मुनिने काउस्सग पूर्ण कर के उसको गंभीर स्वर से कहा, "अभी तक पूर्व किये हुए कर्मों से तो छुट नही रहा है और नए कर्म क्यों बांधता है?"॥१५९॥

मराठी :- मुनी काउस्सग पाहून त्याला गंभीर स्वराने म्हणू लागले की, अजूनपर्यंत तर पूर्वी बांधलेल्या कर्मापासून सुटला नाही.. तर आणखी नवीन कर्म कशाला बांधतोस?॥१५९॥

Engligh :- The monk, coming out of his meditation (Kausarg dyan) spoke to the king in a placid tone that he shouldn't be building up new constructions of solid sins, when he still hasn't broken down the old ones.

**मुनेर्निनंसया सद्यो, मुत्कलाङ्गोऽथ भूपतिः॥**
**प्राच्य-नव्यादिवृत्तान्तं, पप्रच्छ प्रणिपत्य तं ॥१६०॥**

अन्वयः- अथः मुनेः निनंसया सद्यः मुत्कलाङ्गः भूपतिः तं प्रणिपत्य प्राच्यनव्यादिवृत्तान्तं पप्रच्छ ॥१६०॥

विवरणम्:- *अथ मुनेर्वचनात् अनन्तरं मुनेः नन्तुमिच्छा निनंसा तया निनंसया मुनिं प्रणन्तुं इच्छया सद्यः तत्कालमेव मुत्कलानि मृगयासामग्रीरहितानि अङ्गानि अवयवाः यस्य सः मुत्कलाङ्गः मृगयाऽऽयुधरहितावयवः भुवः पतिः भूपतिः नृपः तं मुनिं प्रणिपत्य वन्दित्वा प्राच्यं च नव्यं च प्राच्यनव्ये। प्राच्यनव्ये आदौ येषां तानि प्राच्यनव्यादीनि (कर्माणि) प्राच्यनव्यादीनां वृत्तान्तः, तम् प्राच्यनव्यादिकर्मवृत्तान्तं पप्रच्छ अप्राक्षीत् ॥१६०॥*

सरलार्थः- अनन्तरं मुनिं वन्दितुमिच्छया भूपतिः सद्यः मृगयायुधरहिताङ्गः भूत्वा तं मुनिं प्रणिपत्य प्राच्यनव्यादिकर्मवृत्तान्तं पप्रच्छ ॥१६०॥

ગુજરાતી :- મુનિરાજની આવા પ્રકારની ગૂઢવાણી સાંભળી તેમને વંદન કરવાની ઇચ્છાથી રાજાએ જલ્દીથી પોતાના શરીર ઉપરથી હથિયાર વિગેરે ઉતારી નાખી, મુનિરાજને વંદન કરી, પ્રાચ્ય કર્મ અને નવીન કર્મ વિગેરે સર્વ બીના પૂછી. ॥૧૬૦॥

हिन्दी :- मुनि की ऐसी गूढार्थ वाणी सुनकर वह राजा वंदन करने की इच्छा से अपने शरीर से सभी हथियार उतार कर मुनिराज को वंदना कर के, "प्राच्य कर्म और नवीन कर्म" के विषय में सब बातें पूछने लगा॥१६०॥

मराठी :- मुनींची अशी गूढ अर्थाची वाणी ऐकून त्यांना नमस्कार करण्याच्या इच्छेने राजाने आपल्या अंगावरचे सर्व आयुधे काढून त्यांना नमस्कार केला आणि "प्राच्य कर्म आणि नवीन कर्माबद्दलची सर्व माहिती विचारली.॥१६०॥

Engligh :- Hearing such an obscure statement from the monk, Chandraditya was dumbfounded. He then, in order to pay obeisance to the monk, he took off all his ornaments, and bowing to the monk asked him to throw light on his past and new actions.

प्रोचे मुनिरथोऽयोध्या - प्राप्तकेवलिनो मुखात् ॥
देवद्रव्यविनाशस्या-ऽधिकारे प्रौढपर्षदि ॥१६१॥
त्वत्पूर्वभवसम्बन्धं, त्वद्बोधं चाऽथ भाविनम् ॥
ज्ञात्वाऽऽगत्य वनेऽत्राहं, कायोत्सर्गेण तस्थिवान् ॥१६२॥

अन्वयः- अथो मुनिः प्रोचे - अयोध्याप्राप्तकेवलिनः मुखात् प्रौढपर्षदि देवद्रव्यविनाशस्य अधिकारे ॥१६१॥
त्वत्पूर्वभवसम्बन्धं, अथ भाविनं त्वद्बोधं च ज्ञात्वा अहम् अत्र वने आगत्य कायोत्सर्गेण तस्थिवान् ॥१६२॥

विवरणम्:- *अथो अनन्तरं मुनिः प्रोचे बभाषे । अयोध्यां प्राप्तः अयोध्याप्राप्तः। केवलमस्यातीति केवली केवलज्ञानी भगवान्। अयोध्याप्राप्तश्चासौ केवली च अयोध्याप्राप्तकेवली, तस्य अयोध्याप्राप्तकेवलिनः मुखात् आननात् प्रौढा चासौ पर्षच्च प्रौढपर्षद्, तस्यां प्रौढपर्षदि महासभायां देवस्य द्रव्यं देवद्रव्यम्। देवद्रव्यस्य विनाशः, तस्य देवद्रव्यविनाशस्य अधिकारे - - (उत्तरेणश्लोकेन सम्बन्धः) ॥१६१॥*

*पूर्वश्चासौ भवश्च पूर्वभवः। तव पूर्वभवः। त्वत्पूर्वभवः। त्वत्पूर्वभवस्य सम्बन्धं त्वत्पूर्वभवसम्बन्धं तव पूर्वभववृत्तान्तम् अथ मत्सकाशात् भाविनं भविष्यन्तं तव बोधं त्वद्बोधं च ज्ञात्वा अहमत्र अस्मिन् वने आगत्य कायोत्सर्गेण तस्थिवान् अस्थाम् ॥१६२॥*

सरलार्थः- अनन्तरं मुनिः जगाद - अयोध्याम् प्राप्तस्य केवलिनः भगवतः मुखात् प्रौढसभायां देवद्रव्यविनाशस्य अधिकारे - ॥१६१॥
तव पूर्वभवस्य वृत्तान्तं तथा त्वं मत्सकाशात् एव बोधं प्राप्स्यसि इति ज्ञात्वा अहमस्मिन् वने आगत्य कायोत्सर्गेण अतिष्ठम्।

ગુજરાતી :- ત્યારે મુનિરાજ બોલ્યા, "અયોધ્યા નગરીમાં પ્રાપ્ત થયેલ કેવલી ભગવાનના મુખથી, પ્રૌઢ પર્ષદામાં "દેવદ્રવ્યનો વિનાશ કરવાથી પ્રાણીને કેવી વિડંબનાઓ ભોગવવી પડે છે," તેનો અધિકાર ચાલતો હતો, તેમાં તેં તારા પૂર્વભવનું સંપૂર્ણ વૃત્તાંન્ત સાંભળ્યું, અને તું મારાથી જ પ્રતિબોધ પામીશ એ પ્રમાણે જાણીને હું આ વનમાં કાઉસ્સગ ધ્યાને રહ્યો હતો. ॥૧૬૧॥ ॥૧૬૨॥

हिन्दी :- तब मुनि बोले, "अयोध्या नगरी में केवली भगवान की पर्षदा में उन के मुख से देवद्रव्य का विनाश करने से प्राणी को कैसे कष्ट भोगने पडते है, यह विषय चल रहा था, तब उन्होने तेरे पूर्वजन्मों का संपूर्ण वृत्तान्त सुनाया और तू मेरे ही द्वारा प्रतिबोध पाएगा यह जानकर ही मैं इस वनमें काउसग्ग ध्यान के लिये आया॥ ॥१६१॥ ॥१६२॥

मराठी :- तेव्हा मुनी महाराज म्हणाले, "सध्या अयोध्या नगरी मध्ये आलेल्या केवली भगवंताच्या मुखातून सभागृहात "देवद्रव्याचा विनाश करण्याने प्राण्यांना कशी कशी दु:खे अनुभवावी लागतात." हा अधिकार चालू असता तुझ्या पूर्वजन्माचा संपूर्ण वृत्तान्त ऐकला व तू फक्त माझ्याकडून च प्रतिबोधित होशील, हे जाणून मी या वनात आलो व कायोत्सर्ग ध्यानात स्थित राहिलो ॥१६२॥

English :- At this the monk said that during the auspicious sermon by the revelend Monk (Kevali) at Ayodhaya who said that when a group of intelligent men were reated, that one experiences untold problems and difficulties when he uses the Dev-Dravya, by stressin on his own (king Nabhak's) life's pasable. Now the mnk added that he had know that he was the one who would have to inculate him so that he (kind Nabhak) would rise to this extreme extent. So he had arrived there in this garden and was in deep meditation (kayotsarg).

**को मे प्राग्भवसम्बन्ध, इति पृष्टे नृपेण सः ॥**
**प्राचीकथन्मुनिर्नाग-गोष्टिकाख्यानमादितः ॥१६३॥**

अन्वयः- मम प्राग्भवसम्बन्धः कः? इति नृपेण पृष्टे सः मुनिः आदितः नागगोष्ठिकाख्यानं प्राचीकथत् ॥१६३॥

*विवरणम्:- मम प्राग्भवसम्बन्धः पूर्वभवस्य सम्बन्धः वृत्तान्तः कः? इति नन् पातीति नृपः, तेन नृपेण राज्ञा पृष्टे सति सः मुनिः आदितः आरभ्य नागश्चासौ गोष्ठिकश्च नागगोष्ठिकः। नागगोष्ठिकस्य आख्यानं नागगोष्ठिकाख्यानं प्राचीकथत् अकथयत्॥१६३॥*

सरलार्थः- मम पूर्वभवस्य वृत्तान्तः कः? इति नृपेण पृष्टः मुनिः आदितः आरभ्य नागगोष्ठिकस्य आख्यानम् अचीकथत् ॥१६३॥

ગુજરાતી :- નૃપતિએ પુછ્યું કે - 'સ્વામિન્! મારા પૂર્વભવનો શો વૃત્તાન્ત છે તે કૃપા કરી જણાવો.' ત્યારે શાંત મુદ્રાધારી તેમજ પરોપકારમાં જ નિરંતર પરાયણ મુનિરાજે નાગગોષ્ઠિકના ભવથી આરંભી અંત સુધી સર્વ વૃત્તાન્ત જણાવ્યો. ॥૧૬૩॥

हिन्दी :- तब राजाने पूछा, "हे महाराज! कृपा कर के अब आप मुझे मेरे पूर्वभव का वृत्तान्त बताओ।" तब शांतमुद्रावाले और परोपकारी मुनिराजने "नागगोष्ठिक के जन्म से लेकर, अन्त तक का पूरा वृत्तान्त उसे कह सुनाया"॥१६३॥

मराठी :- तेव्हा राजाने विचारले, "हे मुनी! कृपा करून माझ्या पूर्वजन्माचा वृत्तान्त सांगा." तेव्हा शांतमुद्रेने युक्त आणि परोपकारांमध्ये उद्यत मुनिराजाने नागगोष्ठिकाचा जन्मापासून शेवट पर्यन्तचा सर्व वृत्तान्त त्याला सांगितला.॥१६३॥

English :- At this the king appealed to the monk to tell him about his past lives. The monk who was benevolent sat in a particular peaceful posture ( Mudra-Yogic posture) narrated to the king the whole narration from the Nag family to the end.

प्राज्यं राज्यं शुद्धदानात् दयातो रूपमुत्तमम् ॥
दुष्टं कुष्ठं भवद्देहेऽभवद्देवविलेपनात् ॥१६४॥

अन्वयः- शुद्धदानात् प्राज्यं राज्यं, दयातः उत्तमं रूपं, देवविलेपनात् च भवद्देहे दुष्टं कुष्ठं अभवत् ॥१६४॥

विवरणम्:- *हालिकभवे मुनये शुभभावेन भिक्षारूपशुद्धदानात् तव प्राज्यं समृद्धं राज्यं प्राप्तम्। दयातः दयायाः उत्तमं रूपं प्राप्तमस्ति। सोमदत्तभवे च देवद्रव्यरूपचन्दनस्य सर्वाङ्गे विलेपनं कृतं, तस्मात् भवतः देहः भवद्देहः तस्मिन् भवद्देहे तव शरीरे दुष्टं कुष्ठं अभवत् ॥१६४॥*

सरलार्थः- हालिकभवे शुभभावेन मुनये भिक्षादानात् त्वं समृद्धं राज्यं प्राप्तवान् असि। दयायाः प्रभावात् उत्तमं रूपं प्राप्नोः। सोमदत्तभवे च देवद्रव्यचन्दनस्य सर्वाङ्गे विलेपनात् तव देहे दुष्टं कुष्ठमभवत् ॥१६४॥

ગુજરાતી :- પરોપકારરસિક તે મુનિરાજે વિશેષમાં જણાવ્યું કે - "તેં પૂર્વે ખેડુતના ભવમાં મુનિને શુદ્ધ દાનથી પ્રતિલાભ્યા હતા, તેના પ્રભાવથી આ ભવમાં તને શ્રેષ્ઠ રાજ્ય પ્રાપ્ત થયું છે, અને દયાગુણથી ઉત્તમ રૂપ મળ્યું છે. પણ પૂર્વે તું કાંતિપુરી નગરીમાં રુદ્રદત્તનો સોમ નામનો પુત્ર થયો હતો, તે ભવમાં તેં દેવદ્રવ્યરૂપ ચંદનનું શરીરે વિલેપન કર્યું હતું, તેથી આ ભવમાં તારા શરીરે દુષ્ટ કોઢ રોગ થયો છે."॥૧૬૪॥

हिन्दी :- मुनिने आगे कहा, "किसान के जनम में तूने मुनि को शुद्धभाव से दान दिया था (लाभान्वित किया।) इसके प्रताप से तुझे श्रेष्ठ राज्य मिला, और दया के गुण से उत्तम रूप मिला। लेकिन तू जब पिछले जनम में कांतिपुरी नगरीमें रुद्रदत्त का सोम नाम का पुत्र था, तब तू देवद्रव्यरूपी चंदन का पूरे शरीरपर लेप करता था, जिसके कारण इस जनम में तेरे शरीर पर कुष्ठ कोढ रोग उत्पन्न हुआ है।।१६४।।

मराठी :- मुनीने पुढे सांगितले की, "शेतकऱ्याच्या जन्मात तू मुनींना शुद्ध भावाने दान दिले त्यामुळे तुला श्रेष्ठ राज्य मिळाले आणि दयेच्या उत्तम गुणाने तुला चांगले रूप मिळाले. पण जेव्हा तू कांतिपुरी नगरीत रुद्रदत्ताचा सोम नावाचा मुलगा होता, तेव्हा सर्व शरीरावर चंदनाचा लेप करीत होता. त्यांचे फळस्वरूप तुझ्या शरीरात कुष्ठरोग उत्पन्न झाला.

English :- The monk then said that during his incarnation as a farmer, he had served food to monk with a pure and an immaculate heart, So he had attained this kingdom and his beauty because of his feelings of sympathy towards the monk. But during his incarnation as Soam the son of Rudradutt, in the city of Kantipuri, he has applied the sandlewood from the Shiva temple , which is considered as God's wealth, So he had attained this leprous figure.

श्रुत्वेति भूपतिर्भीतः प्रणिपत्य यतेः पदौ ॥
बभाषेऽस्मान्महापापात्, मुने! मोचय मोचय ॥१६५॥

अन्वयः- इति श्रुत्वा भीतः भूपतिः यतेः पदौ प्रणिपत्य बभाषे-मुने! अस्मात् महापापात् मोचय मोचय ॥१६५॥

विवरणम्:- *इति एवं प्रकारकं पूर्वभववृत्तान्तं श्रुत्वा भीतः भयं प्राप्तः भुवः पतिः भूपतिः नृपतिः यतेः मुनेः पदौ चरणौ प्रणिपत्य वन्दित्वा बभाषे बभाण - हे मुने! अस्मात् महत् च तत्पापं च महापापं तस्मात् महापापात मां मोचय मोचय ॥१६५॥*

सरलार्थः- इत्थं पूर्वभववृत्तान्तं श्रुत्वा भीतः नृपः मुनेः चरणौ वन्दित्वाऽवदत् हे मुने! अस्मात् महापापात् त्वं मां मोचय मोचय।।१६५।।

ગુજરાતી :- આ પ્રમાણે મુનિના મુખથી પોતાના પૂર્વભવનો સંબંધ સાંભળીને રાજા પાપથી ભય પામ્યો અને મુનિના ચરણકમળમાં

પડી ગદ્ગદ સ્વરે બોલ્યો કે 'હે કૃપાસિંધો! મને આ મહાન્ પાપોથી છોડાવો. ॥૧૬૫॥

हिन्दी :- इस तरह मुनि के मुख से अपना पूर्वभव सुनकर राजा पाप से डरा और मुनि के चरणों मे गिरकर गद्गद् कंठ से बोलने लगा, "हे कृपासिन्धो! मुझे इस भयंकर पापों से बचाओ."॥१६५॥

मराठी :- ह्या प्रमाणे मुनीच्या मुखांतून आपला पूर्ववृत्तान्त ऐकून राजा घाबरला आणि मुनीच्या पायावर पडून गदगद कंठाने विनंती करू लागला. "हे दयालु! मला ह्या भीषण पापातून वाचवा वाचवा."॥१६५॥

English :- When Chandraditya heard from the monk, the narrations of his past lives, he was filled with feelings of fright and falling at the feet of the sympathetic monk, pleaded to him to free him from the bondage of his sins.

परमेष्ठिमहामन्त्रं । नृपायोपाविशन्मुनिः ॥
तस्यार्थं च प्रभावं च, विधिं च स्मरणेऽखिलम् ॥१६६॥

अन्वयः- मुनिः नृपाय परमेष्ठिमहामन्त्रं उपाविशत्। स्मरणे च तस्य , प्रभावं विधिं च अखिलं उपाविशत् ॥१६६॥

*विवरणम्:- मुनिः त्रनृपातीति नृपः तस्मै नृपाय चन्द्रादित्याय परमेष्ठिनां महामन्त्रं परमेष्ठिमहामन्त्रं नमस्कारमहामन्त्रम् उपादिशत्। स्मरणे ध्याने च तस्य प्रभावं विधिं च अखिलं सर्वमुपादिशत् ॥१६६॥*

सरलार्थ:- मुनिः नृपाय परमेष्ठिमहामन्त्रम् उपादिशत्। ध्याने तस्य प्रभावं विधिं च सर्वम् उपादिशत् ॥१६६॥

ગુજરાતી :- મુનિએ રાજાને પંચપરમેષ્ઠીરૂપ મહામંત્રનો ઉપદેશ કર્યો, તથા પંચપરમેષ્ઠીનું ધ્યાન કરતાં તેનો પ્રભાવ અને વિધિ સારી રીતે સમજાવ્યા ॥૧૬૬॥

हिन्दी :- मुनिने राजा को पंचपरमेष्ठी रूपी महामंत्र का उपदेश दिया और पंचपरमेष्ठी का ध्यान करने से उसका क्या प्रभाव पडता है और उसका विधि अच्छी तरह से समझाया॥१६६॥

मराठी :- मुनीने राजाला पंचपरमेष्ठिरूप महामन्त्राचा उपदेश दिला आणि पंचपरमेष्ठीचे ध्यान करते वेळी त्यांचा, प्रभाव व विधि सर्व चांगल्या रीतीने समजावले.॥१६६॥

English :- The monk then gave the king the almightest of all prayers "The Navkar Mantra" and explained to him the and the magnanimity of the prayer.

**देवस्वपातकाद् देव-प्रासादस्य विधापनात् ॥**
**मुच्यते जन्तुरित्याख्यत्, प्रायश्चित्तं च शास्त्रवित् ॥१६७॥**

अन्वयः- शास्त्रविद् सः ''जन्तुः देवप्रासादस्य विधापनात् देवस्वपातकात् मुच्यते'' इति प्रायश्चित्तम् आख्यत् ॥१६७॥

विवरणम्:- शास्त्रं वेत्तीति शास्त्रवित् सः मुनिः ''जन्तुः जीवः देवस्य प्रासादः मन्दिरं देवप्रासादः, तस्य देवप्रासादस्य देवमन्दिरस्य विधापनात् निर्माणात् देवस्य स्वं द्रव्यं देवस्वं देवद्रव्यं। देवस्वात् पातकं देवस्वपातकं तस्मात् देवस्वपातकात् मुच्यते इति प्रायश्चितं आख्यत् अचीकथत् ॥१६७॥

सरलार्थः- शास्त्रवित् स मुनिः ''देवमन्दिरस्य निर्माणात् जन्तुः देवद्रव्यपातकात् मुच्यते'' इति प्रायश्चित्तं अचीकथत् ॥१६७॥

ગુજરાતી :- તથા શાસ્ત્રના જાણકાર તે મુનિરાજે દેવદ્રવ્ય વિનાશનું પ્રાયશ્ચિત્ત પણ જણાવ્યું કે દેવદ્રવ્યનો વિનાશ કરનાર પ્રાણી દેવમંદિર કરાવવાથી તે પાપથી છૂટે છે. ॥૧૬૭॥

हिन्दी :- और शास्त्रों के जानकार मुनिने देवद्रव्य विनाश का प्रायश्चित भी बताया कि, देवद्रव्य का विनाश करनेवाला प्राणी यदि कोई नये देवमंदिर का निर्माण करता है तो वह पाप से छुट जाता है॥१६७॥

मराठी :- आणि शास्त्रांचे जाणकार मुनींनी देवद्रव्यांच्या विनाशाचे प्रायश्चित्त असे सांगितले की, देवद्रव्याचा विनाश करणाऱ्या प्राण्याने जर नवीन देवमंदिर बांधले तर तो पापातून मुक्त होतो.॥१६७॥

English :- The monk who was well-versed with the holy books, gave the king the solution of expliating himself from his past sins. He said that if a man uses God's wealth in an improper way, but then

builts a temple of God will be free from the bondage of his past sins.

अथ राजा पुरे स्वीये, स्थापयित्वाऽऽग्रहाद् यतिम् ॥
यथोपदेशमारेभे, महामन्त्रस्मृतिं ततः ॥१६८॥

अन्वयः:- अथ राजा यतिम् आग्रहात् स्वीये पुरे स्थापयित्वा ततः यथोपदेशं महामन्त्रस्मृतिम् आरेभे ॥१६८॥

विवरणम्:- *अथ अनन्तरं राजा चन्द्रादित्यः यतिं मुनिम् आग्रहात् निर्बन्धात् स्वीये निजे पुरे नगरं स्थापयित्वा ततः तदनन्तरम् उपदेशमनतिक्रम्य यथोपदेशम् उपदेशमनुसृत्य महान् चासौ मन्त्रश्च महामन्त्रः। महामन्त्रस्य स्मृतिःमहामन्त्रस्मृतिः तां महामन्त्रस्मृतिं परमेष्ठिमहामन्त्रध्यानमारेभे आरभत ॥१६८॥*

सरलार्थः:- अनन्तरं राजा मुनिम् आग्रहात् स्वीये नगरे स्थापयित्वा पञ्चपरमेष्ठिमहामन्त्रस्य ध्यानमारभत ॥१६८॥

ગુજરાતી :- ત્યાર બાદ રાજાએ મુનિરાજને અત્યંત આગ્રહ કરી પોતાના નગરમાં રાખ્યા અને તેઓશ્રીએ જેવી વિધિએ ઉપદેશ આપ્યો તે પ્રમાણે પંચપરમેષ્ઠી મહામંત્રનું નિરંતર ધ્યાન કરવાનો આરંભ કર્યો. ॥૧૬૮॥

हिन्दी :- बाद में राजा ने मुनि को बहुत आग्रह कर के अपने नगर में रोका, और उन्होंने जिसतरह उपदेश दिया उसी प्रकार से पंचपरमेष्ठी महामंत्र का निरंन्तर ध्यान करने का प्रारम्भ किया॥॥१६८॥

मराठी :- नंतर राजाने मुनींना मोठ्या आग्रहाने आपल्या नगरात मुक्काम करण्यास सांगितले आणि त्यांच्या उपदेशाप्रमाणे पंचपरमेष्ठी महामंत्राचे निरन्तर ध्यान करण्यास सुरुवात केली.॥१६८॥

English :- Then the king pressed the monk to settle in his city. Then the king with utmosty devotion, began to meditate on the Navkar Mantra.

षड्भिर्मासैर्नृपस्याऽभूत्, कायः काञ्चनकान्तरुक् ॥
राज्यं गजाश्वकोशादि-वृद्ध्या भेजे विशालताम् ॥१६९॥

अन्वयः:- षड्भिः मासैः नृपस्य कायः काञ्चनकान्तरुक् अभूत्। राज्यं गजाश्वकोशादिवृद्ध्या विशालतां भेजे ॥

विवरणम्:- पञ्चपरमेष्ठिमहामन्त्रध्यानात् षड्भिः मासैः नृपस्य राज्ञः कायः देहः काञ्चनवत् कान्ता रुक् यस्य सः काञ्चनकान्तरुक् सुवर्णसुन्दररुचिः अभूत् अभवत्। राज्यं गजाश्चाश्वाश्च कोशाश्च गजाश्वकोशाः। गजाश्वकोशाः आदौ येषां ते गजाश्वकोशादिः। गजाश्वकोशादेः वृद्धिः गजाश्वकोशादिवृद्धिः, तया गजाश्वकोशादिवृद्ध्या विशालस्य भावः विशालता, तां विशालतां भेजे ॥१६९॥

सरलार्थः:- पञ्चपरमेष्ठिमहामन्त्रध्यानात् षड्भिः मासैः नृपस्य शरीरं सुवर्णवत् सुन्दररुचि अभवत्। राज्यमपि गजानामश्वानां कोशादेःच वृद्ध्या विशालम् अभवत् । ॥१६९॥

ગુજરાતી :- પંચપરમેષ્ઠિનું ધ્યાન કરતાં છ માસમાં ચન્દ્રાદિત્યનું શરીર સુવર્ણ સદશ મનોહર કાંતિવાળું થઈ ગયું, અને હાથી ઘોડા તથા ભંડાર વિગેરેની વૃદ્ધિ થવાથી રાજ્ય પણ વિશાલ થઈ ગયું ॥૧૬૯॥

हिन्दी :- इसप्रकार पंचपरमेष्ठिका ध्यान करते हुए छ मास में ही चंद्रादित्यका शरीर स्वर्णमय (सोने की) कांति जैसा सुंदर हो गया। और राज्य भी हाथी, घोडे और खजाने की वृद्धि के कारण विशाल हो गया॥१६९॥

मराठी :- अशा तऱ्हेने पंचपरमेष्ठीचे ध्यान करीत सहा महिन्यांत त्या चंद्रादित्याच्या शरीराची कांति सोन्या सारखी सुंदर झाली आणि राज्य सुद्धा, हत्ती, घोडे आणि खजान्याची वृद्धि झाल्याने विशाल झाले.॥१६९॥

English :- In this way the king was free from his leprous figure after continuous meditation of the Navkar Mantra, for six months. Now the lustre of his body, shone like gold . Even his kingdom , elephants, horses and wealth grew immensly.

शीर्षेऽथ चित्रकूटस्य प्रासादं परमेशितुः ॥
सुपर्वपर्वतोत्तुङ्गशृङ्गं प्रारभयन्नृपः ॥१७०॥

अन्वय:- अथ नृप: चित्रकूटस्य शीर्षे परमेशितु: सुपर्वपर्वतोत्तुङ्गशृङ्गं प्रासादं प्रारभयत् ॥१७०॥

*विवरणम्:- अथ अनन्तरं नृन् पातीति नृप: चन्द्रादित्य: चित्राणि कूटानि शिखराणि यस्य स: चित्रकूट:तस्य चित्रकूटस्य गिरे: शीर्षे शिखरे परमश्चासौ ईशिता च परमेशिता, तस्य परमेशितु: परमात्मन: जिनेन्द्रस्य - सुपर्वणाममराणां पर्वत: सुपर्वपर्वत: अमरगिरि: मेरु:। सुपर्वपर्वतस्य इव उत्तुङ्गमुन्नतं शृङ्गंशिखरं यस्य स: सुपर्वपर्वतोत्तुङ्गशृङ्ग: मेरुगिरिवत् उन्नतशिखर: तं सुवर्णपर्वतोत्तुङ्गशृङ्गं प्रासादं मन्दिरं प्रारभयत् ॥१७०॥*

सरलार्थ:- अनन्तरं नृप: चित्रकूटगिरे:शिखरे परमात्मन:जिनेन्द्रस्य सुवर्णगिरि - मेरुत्तुङ्गशिखरं प्रासादं मन्दिरं प्रारभयत् ॥१७०॥

**ગુજરાતી :-** ત્યારબાદ ચન્દ્રાદિત્ય રાજાએ ચિત્રકૂટપર્વતના શિખર ઉપર પરમાત્મા જિનેન્દ્ર પ્રભુનું મેરુપર્વત સમાન ઉંચા શિખરવાળું દેરાસર બંધાવવાની શુરુઆત કરી॥૧૭૦॥

हिन्दी :- बाद में चन्द्रादित्य राजाने चित्रकूट पर्वत के शिखर पर जिनेन्द्र प्रभु का मेरुपर्वत के समान ऊंचे शिखरवाला मंदिर बनवाने की शुरुवात की॥१७०॥

मराठी :- नंतर चन्द्रादित्य राजाने चित्रकूट पर्वतांच्या शिखरावर जिनेन्द्र प्रभूचे मेरुपर्वतासारखे उंच मंदिर बांधण्यास शुरुवात केली. ॥१७०॥

English :- Then the king Chandraditya began to built a Jain temple in honour of Lord Jinendra on the cupola of the mount of Chitrakut which was as high as the cupola of the mount of Meru.

**मुनिपार्श्वे निविष्टस्य, क्ष्मापतेः पुरतोऽन्यदा ॥**
**प्रदर्शयन् स्वरं कश्चित्, कुम्भकारो जगाविति ॥१७१॥**

अन्वय:- अन्यदा मुनिपार्श्वे निविष्टस्य क्षमापते: पुरत: स्वरं प्रदर्शयन् कश्चित् कुम्भकार: इति जगौ ॥१७१॥

*विवरणम्:- एकस्मिन् समये मुने: पार्श्व: मुनिपार्श्व:, तस्मिन् मुनिपार्श्वे मुनिसन्निधौ निविष्टस्य उपविष्टस्य, क्षमाया:भूमे: पति: क्षमापति:*

*तस्य क्षमापतेः भूमिपतेः पुरतः अग्रे खरं गर्दभं प्रदर्शयन् कश्चित् कुम्भान् करोतीति कुम्भकारः इति वक्ष्यमाणं वचो जगाद ॥१७१॥*

सरलार्थः- एकदा नृपः मुनिपार्श्वे उपविष्टः आसीत्। तदा कश्चित् कुम्भकारः तस्य पुरतः गर्दभं प्रदर्शयन् इति उवाच ॥१७१॥

ગુજરાતી :- એક દિવસ મુનિરાજ પાસે રાજા બેઠો હતો તેવામાં તેની આગળ એક ગધેડાને બતાવતા કોઈ કુંભારે આવીને કહ્યું કે ॥૧૭૧॥

हिन्दी :- एक दिन राजा मुनि के पास बैठा था तब किसी कुंभार ने आकर एक गधे को दिखाकर कहा. ॥१७१॥

मराठी :- एके दिवशी राजा मुनीच्या जवळ बसला होता तेव्हा आपला गाढव बोटाने दाखवीत एक कुंभार तेथे येऊन म्हणाला,॥१७१॥

English :- One day when the king was sitting along with the monk, a potter arrived there and pointing at a donkey spoke to them.

**राजन्नित्यं वहन् वारि, स्वयं शैले चटत्यसौ ॥**
**को हेतुरिति भूपोऽपि, श्रुत्वा पप्रच्छ तं मुनिं ॥१७२॥**

अन्वयः- राजन्! असौ नित्यं वारि वहन् स्वयं शैले चटति। अत्र कः हेतुः? इति श्रुत्वा भूपोऽपि तं मुनिं पप्रच्छ ॥१७२॥

*विवरणम्:- राजन्! असौ गर्दभः नित्यं सदा वारि जलं वहन् स्वयं शैले पर्वते चटति आरोहति। अत्र कः हेतुः? किं कारणम्? इति श्रुत्वा निशम्य भुवं पातीति भूपः नृपः अपि तं मुनिं पप्रच्छ॥१७२॥*

सरलार्थः- राजन्! असौ गर्दभः नित्यं जलं वहन् स्वयम् पर्वतमारोहति तत्र कः हेतुः? इति श्रुत्वा नृपः अपि तम् मुनिम् अप्राक्षीत् ॥१७२॥

ગુજરાતી :- "હે રાજન્! આ ગધેડો હમેશાં પાણીને વહન કરતો આ પર્વત ઉપર પોતાની મેળે ચડે છે તેનું શું કારણ હશે?" રાજાએ પણ આ વૃત્તાન્ત સાંભળી આશ્ચર્યચકિત થઈ મુનિરાજને પૂછ્યું. ॥૧૭૨॥

हिन्दी :- "हे राजा! यह गधा हमेशा पानी ढोता हुआ अपने आप इस पर्वत पर चढ जाता है इसका क्या कारण होगा?" यह वृत्तान्त सुन कर राजाने भी आश्चर्यचकित होकर, मुनिराज से पूछा।" ॥१७२॥

मराठी :- "हे महाराज! हा गाढव नेहमी पाणी पेऊन स्वत: पर्वतावर चढतो याचे काय कारण असेल?" हा वृत्तान्त ऐकून राजाने आश्चर्यचकित होऊन मुनिराजांना विचारले.॥१७२॥

English :- The potter pointing at the donkey said that the donkey on his own lifts up pails of water and climbs up the mount. He asked the king if he could throw light on this unusual incident. The king too was astonished and asked the monk regarding the matter.

**स एव केवली तावत्, तत्रागात् मुनि - भूपती ॥**
**तेन कुम्भकृता युक्तौ, नन्तुम् तमथ जग्मतु: ॥१७३॥**

अन्वय:- तावत् स एव केवली तत्र आगात्। तदा तौ मुनिभूपती तेन कुम्भकृता युक्तौ तं नन्तुं जग्मतु: ॥१७३॥

विवरणम्:- *तावत् स एव अयोध्यां प्राप्त: केवली भगवान् तत्र चित्रपुर्या नगर्या आगात् आयात्। तदा तौ मुनिश्च भूपतिश्च मुनिभूपती तेन कुम्भान् करोतीति कुम्भकृत् तेन कुम्भकृता कुम्भकारेण युक्तौ तं केवलिनं नन्तुं जग्मतु: ॥१७३॥*

सरलार्थ:- तावत् स केवली भगवान् चित्रपुर्यामागत:। तदा स मुनि: भूपति: च कुम्भकारेण सह तं केवलिनं नन्तुमगच्छताम् ॥१७३॥

ગુજરાતી :- તે દરમ્યાન તેજ કેવલી ભગવાન્ કે જેમણે અયોધ્યા નગરીમાં પર્ષદામાં કહેલો ચંદ્રાદિત્યના પૂર્વભવનો વૃત્તાન્ત મુનિરાજે સાંભળ્યો હતો, તેઓ ચિત્રપુરી નગરીમાં પધાર્યા. કેવલી ભગવાનનું આગમન સાંભળી રાજા અને મુનિરાજ તે કુંભાર સહિત કેવલી ભગવાનને વંદન કરવા માટે ગયા. ॥૧૭૩॥

हिन्दी :- उसी समय, वही केवली भगवान्, जिन्होने पर्षदा में चन्द्रादित्य का पूर्वभव का वृत्तान्त मुनिराज ने सुना था वे, चित्रपुरी नगरी में पधारे। उनका आगमन सुनकर राजा और मुनिराज उस कुंभार के साथ उनको वंदन (प्रणाम) करने के लिये चल पड़े॥१७३॥

मराठी :- त्याच वेळी ते केवली भगवंत ज्यांनी पर्षदेत सांगितलेला चंद्रादित्य राजाचा पूर्ववृत्तान्त मुनिराजाने ऐकला होता. ते चित्रपुरी नगरी मध्ये आले. त्यांचे आगमन ऐकून राजा आणि मुनिराज त्या कुंभारासह त्यांना नमस्कार करण्यासाठी निघाले.॥१७३॥

English :- Just then the news of the arrival of the reverend monk (Who is entitled to attain salvation ) Kevali arrived. The monk was the same one who had mentioned in his sermon the parable of Chandraditya at Ayodhya. The monk , the king and the potter alonce went ahead to pay obeisance to the Lord, in the city of Chitrepuri.

खरस्वरूपं भूपेन, पृष्टः केवल्यथाऽखिलम् ॥
समुद्रसिंहवृत्तान्त-मुक्त्वा मूलात् पुनर्जगौ ॥१७४॥

अन्वयः- अथ भूपेन खरस्वरूपं पृष्टः केवली मूलात् अखिलं समुद्रसिंह वृत्तान्तं उक्त्वा पुनः जगौ ॥१७४॥

*विवरणम्:- अथ अनन्तरं भूपेन चन्द्रादित्यनृपेण खरस्य स्वरूपं खरस्वरूपम् पृष्टः केवली मूलात् आरभ्य अखिलं सर्वं समुद्रश्च सिंहश्च समुद्रसिंहौ समुद्रसिंहयोः वृत्तान्तः, तं समुद्रसिंहवृत्तान्तं उक्त्वा कथयित्वा पुनः जगौ ॥१७४॥*

सरलार्थः- अनन्तरं चन्द्रादित्यनृपेण केवली गर्दभस्वरूपं पृष्टः। तदा केवली मूलात् आरभ्य समुद्रसिंहयोः अखिलं वृत्तान्तं कथयित्वा पुनः जगौ जगाद ॥१७४॥

ગુજરાતી :-તે કેવલી ભગવાનને વંદન કરી રાજાએ ગધેડાનું સ્વરુપ પૂછ્યું ત્યારે કેવલી ભગવાને સમુદ્રપાલ અને સિંહનું સમસ્ત વૃત્તાન્ત આદિથી અંત સુધી કહ્યું અને જણાવ્યું કે ॥૧૭૪॥

हिन्दी :- उस केवली भगवान को प्रणाम कर के राजा ने उस गधे का स्वरूप पूछा, तब केवली भगवान ने समुद्रपाल और सिंह का सम्पूर्ण वृत्तान्त शुरु से अंत तक कह सुनाया, और फिर बताया कि॥१७४॥

मराठी :- तेव्हा केवली भगवंतांना नमस्कार करून राजाने त्या गाढवाचा अहवाल विचारला, तेव्हा केवली मुनीने समुद्रपाल आणि सिंहाच्या संबंधी कथा सुरवातीपासून तर शेवटपर्यन्त सांगितली आणि नंतर म्हणाले.॥१७४॥

English :- After they had paid obeisance to the Lord, the king asked the monk,the identity of the donkey, The monk then told them about the tale of the two brothers Samudrapal and Sihe, from the very beginning to the end.

सिंहजीवः सको भुक्त्वा, संसारे घोरवेदनाः ॥
पुरेऽत्रैवाल्पकर्मत्वात्, षट्कृत्वोऽथ खरोऽजनि ॥१७५॥

अन्वयः- सकः सिंहजीवः संसारे घोरवेदनाः भुक्त्वा अथ अल्पकर्मत्वात् अत्र एव पुरे षट्कृत्वः खरः अजनि ॥१७५॥

विवरणम्:- *सकः सः सिंहस्य जीवः संसारे घोराश्च ताः वेदनाश्च घोरवेदनाः भुक्त्वा अनन्तरम् अल्पानि कर्माणि यस्य सः अल्पकर्मा, अल्पकर्मणः भावः अल्पकर्मत्वं तस्मात् अल्पकर्मत्वात् अत्र अस्मिन् एव पुरे नगरे षट्कृत्वः षड्वारं खरः गर्दभः अजनि अजायत ॥१७५॥*

सरलार्थः- सः सिंहस्य जीवः संसारे घोराः वेदनाः यातनाः उपभुज्य अनन्तरम् अल्पकर्मत्वात् अस्मिन् एव पुरे षड्वारं गर्दभः अजायत ॥१७५॥

ગુજરાતી :- તે સિંહના જીવ સંસારમાં તીવ્ર વેદનાને ભોગવી, આજ નગરમાં અલ્પકર્મપણાથી છ વાર ગધેડો થયો. ॥૧૭૫॥

हिन्दी :- "उस सिंह का जीव, संसार में तीव्र यातनाएँ भोगता हुआ, इसी नगर में अल्प कर्मों से छः बार गधा हुआ" ॥१७५॥

मराठी :- "त्याच सिंहाचा जीव संसारात असह्य यातना भोगून ह्याच शहरात आपल्या अल्पकर्मामुळे, सहा वेळा गाढव बनला." ॥१७५॥

English :- He then said that the soul of Sihe who had borne uncountable agonizing turmoils has ultimately been incarnated in this city, due to few improper actions, as a donkey, six times.

भवे सप्तमके भूत्वा, त्रीन्द्रियोऽसौ ततः पुनः ॥
खरोऽवशिष्टकर्मत्वात्, षट्कृत्वोऽत्र पुरेऽभवत् ॥१७६॥

अन्वयः- ततः असौ सप्तमके भवे त्रीन्द्रियो भूत्वा ततः पुनः अवशिष्टकर्मत्वात् अत्र पुरे षट्कृत्वः खरः अभवत् ॥१७६॥

*विवरणम्:-* *ततः तदनन्तरम् असौ सप्तमके भवे त्रीणि इन्द्रियाणि यस्य सः त्रीन्द्रियः जीवः भूत्वा ततः पुनः अवशिष्टानि कर्माणि यस्य सः अवशिष्टकर्मा, अवशिष्टकर्मणः भावः अवशिष्टकर्मत्वं तस्मात् अवशिष्टकर्मत्वात् अत्र अस्मिन् पुरे नगरे षट्कृत्वः षड्वारं खरः गर्दभः अभवत् ॥१७६॥*

सरलार्थ:- ततः असौ सप्तमे भवे त्रीन्द्रियो जीवो भूत्वा पुनः अवशिष्टकर्मत्वात् अस्मिन् एव पुरे षड्वारं गर्दभः अभवत् ॥१७६॥

ગુજરાતી :- ત્યાર બાદ સાતમા ભવમાં તે ત્રેઈન્દ્રિય થઈ, અવશેષ રહેલા કર્મથી પાછો છ વાર આજ નગરમાં ગધેડો થયો. ॥૧૭૬॥

हिन्दी :- बाद में, सातवे जनम में तीन इन्द्रिय वाला जीव बन कर, शेष बचे हुए कर्मो से वापस छः बार इसी नगर में गधा हुआ॥१७६॥

मराठी :- "नंतर सातव्या जन्मात तीन इन्द्रिय जीव बनून उरलेल्या कर्मामुळे पुन्हा याच नगरात सहा वेळा गाढव झाला." ॥१७६॥

English :- Then during his seventh incarnation, he was born as a soul with just three senses of perception and then was born six times as donkey to irraticate his remaining sins.

**सहस्रा द्वादशाऽनेन, देवद्रव्यं विनाशितम् ॥**
**तत्कर्मशेषस्तावत्, कृत्वाऽसावीदृशोऽजनि ॥१७७॥**

अन्वय:- अनेन द्वादश सहस्रा देवद्रव्यं विनाशितम्। तत्कर्मशेषतः तावत् कृत्वा असौ ईदृशः अजनि ॥१७७॥

*विवरणम्:-* *अनेन सिंहस्य जीवेन द्वादश सहस्रा देवद्रव्यं (सुवर्णमुद्राः) विनाशितम्। तस्य कर्मणः शेषः तत्कर्मशेषः, तस्मात् तत्कर्मशेषतः तावत् कृत्वा तावद्वारं असौ ईदृशः नीचभवोत्पन्नः अजनि जातः ॥१७७॥*

सरलार्थ:- अनेन सिंहस्य जीवेन द्वादशसहस्रसुवर्णमुद्रात्मकं देवद्रव्यं विनाशितम्। तत्कर्मविशेषात् असौ तावद्वारं नीचभवेषु अजनि ॥१७७॥

ગુજરાતી :-આ સિંહના જીવે બારહજાર સોનૈયા દેવદ્રવ્યનો વિનાશ કર્યો, તે કર્મના શેષથી તે તેટલીવાર નીચ ભવમાં ઉત્પન્ન થયો છે. ॥૧૭૭॥

हिन्दी :- इस सिंह के जीव ने बारह हजार सोनामोहरों का देवद्रव्य का विनाश किया था, उस कर्म के शेष से उतनी बार नीच भव में उत्पन्न हुआ है॥१७७॥

मराठी :- या सिंहाच्या जीवाने बारा हजार सोना मोहरारुपी देवद्रव्याचा विनाश केला होता. त्या कर्माच्या शेषाने तो तितक्याच वेळी नीच योनीमध्ये उत्पन्न झाला आहे.॥१७७॥

English :- The soul of sihe had utilized twelve thousand gold coins of God's wealth, for which he had born that many times in the animal world, as a low being.

प्रतिजन्माऽद्रिशृङ्गेऽस्मिन् कर्मकार्यकृते सदा॥
चटनाभ्यासतोऽत्राद्रौ स्वयमेव चटत्यसौ ॥१७८॥

अन्वयः- प्रतिजन्म अस्मिन् अद्रिशृङ्गे कर्मकार्यकृते सदा चटनाभ्यासात् अत्र अद्रौ असौ स्वयमेव चटति ॥१७८॥

विवरणम्:- जन्मनि जन्मनि प्रतिजन्म अस्मिन् अद्रेः शृङ्गम् अद्रिशृङ्गं तस्मिन् अद्रिशृङ्गे पर्वतशिखरे कर्मणः व्यवहारस्य कार्यं कर्मकार्यम् कर्मकार्यस्य कृते कर्मकार्यकृते व्यवहारस्य कार्यकरणाय सदा निरन्तरं चटनस्याभ्यासः चटनाभ्यासः तस्मात् चटनाभ्यासतः आरोहणाभ्यासात् अत्र अस्मिन् अद्रौ असौ स्वयमेव चटति आरोहति ॥१७८॥

सरलार्थः- प्रतिजन्म अस्मिन् अद्रिशृङ्गे व्यवसायकृते सदा आरोहणाभ्यासात् असौ अस्मिन् पर्वतशिखरे स्वयमेव आरोहति ॥१७८॥

ગુજરાતી :- દરેક જન્મમાં આ પર્વતના શિખર ઉપર વેતરું કરવા માટે હમેશાં ચડવાના અભ્યાસથી આ ભવમાં પણ આ ગધેડો પર્વત ઉપર પોતાની મેળે ચઢી જાય છે. ॥૧૭૮॥

हिन्दी :- प्रत्येक जन्म में इस पर्वत के शिखर ऊपर हमेशा बोजा लेकर चढने के अभ्यास से इस भवमें भी यह गधा इस पर्वत पर अपने आप चढ जाता है॥१७८॥

मराठी :- प्रति जन्मांत त्या पर्वताच्या शिखरावर वजन घेऊन चढण्याच्या अभ्यासामुळे या जन्मात सुद्धा हा गाढव पर्वतावर स्वयं चढून जातो.॥१७८॥

English :- During every birth, this donkey used to lift up pails of water and climb the mount. Therefore he is able to lift up pails and walk up the mount during this birth too with the same ease.

श्रुत्वेति भूपतिस्तस्य, सारार्थं कृपया ददौ ॥
शिक्षां कुम्भकृते सोऽपि, यत्नात्तं पर्यपालयत् ॥१७९॥

अन्वयः- इति श्रुत्वा भूपतिः कृपया तस्य सारार्थं कुम्भकृते शिक्षां ददौ। सः अपि तं यत्नात् पर्यपालयत् ॥१७९॥

*विवरणम्:- इति गर्दभवृत्तान्तं श्रुत्वा भुवः पतिः भूपतिः चन्द्रादित्यनृपः कृपया दयया तस्य गर्दभस्य सारार्थं सुष्ठुतया पालनार्थं कुम्भान् करोतीति कुम्भकृत् तस्मै कुम्भकृते कुम्भाराय शिक्षां बोधं ददौ। सः कुम्भकारः अपि तं गर्दभं यत्नात् प्रयत्नात् पर्यपालयत् ॥१७९॥*

सरलार्थः- इति गर्दभवृत्तान्तं श्रुत्वा चन्द्रादित्यनृपः तस्य गर्दभस्य परिपालनार्थं कुम्भकाराय शिक्षां ददौ। सः अपि तं प्रयत्नात् पर्यपालयत् ॥१७९॥

ગુજરાતી :- આ પ્રમાણે રાજાએ ગધેડાનું વૃત્તાન્ત શ્રવણ કરી દયા આવવાથી તેની સંભાળ માટે કુંભારને શિખામણ આપી; ત્યારથી કુંભાર પણ તેનું સારી રીતે પાલન કરવા લાગ્યો. ॥૧૭૯॥

हिन्दी :- इस तरह राजाने गधे का वृत्तान्त सुनकर दया आने से उसके देखरेख के लिये कुमार को नसीहत दी. तब से कुमार भी उसका अच्छी तरह से पालन करने लगा॥१७९॥

मराठी :- ह्या तऱ्हेने राजाने गाढवाचा वृत्तान्त ऐकून दया आल्यामुळे त्याची देखरेख करण्याची कुंभाराला सूचना दिली. तेव्हा पासून तो कुंभार सुद्धा त्याचे चांगल्या तऱ्हेने पालन करू लागला.॥१७९॥

English :- The king's heart now swelled with feelings of compassion for the donkey. So he handed over the donkey to the potter and admonished him to take utmost care of it. So from that day the donkey was placed under kind hands.

अथासौ भद्रकस्वान्तो, मृत्वा ग्रामे मुरस्थले ॥
ग्रामणीर्भानुनामाऽभूद्, राज्ञा निर्वासितोऽन्यदा ॥१८०॥

अन्वयः:- अथ भद्रकस्वान्तः असौ मृत्वा मुरस्थले ग्रामे भानुनामा ग्रामणीः अभूत्। अन्यदा राज्ञा निर्वासितः ॥१८०॥

विवरणम्:- *अथ अनन्तरं भद्रकं स्वान्तं मनः यस्य सः भद्रकस्वान्तः भद्रमनाः असौ गर्दभः मृत्वा मरणमधिगम्य मुरस्थले नाम ग्रामे भानुः नाम यस्य सः भानुनामा ग्रामं नयतीति ग्रामणीः ग्रामनेता अभूत्। अन्यदा एकस्मिन् समये सः राज्ञा नृपेणापराधवशात् निर्वासितः निष्कासितः ॥१८०॥*

सरलार्थः:- अनन्तरं प्रशस्तमनाः स गर्दभः मृत्वा मुरस्थले ग्रामे ग्रामणीः ग्राममुख्यः अभूत्। नृपेण सः निर्वासितः ॥१८०॥

ગુજરાતી :- પછી ભદ્રિક મનવાળો ગધેડો મરણ પામીને મુરસ્થલ ગામમાં ભાનુ નામનો ગામનો મુખી થયો, ત્યાં કોઈ કારણસર રાજાનો અપરાધી બનવાથી એક દિવસ રાજાએ ગામમાંથી કાઢી મૂક્યો. ॥૧૮૦॥

हिन्दी :- उसके बाद भद्रिक मनवाला गधा मृत्यु पा कर मुरस्थल गांव में 'भानु' नाम का गांव का मुखीया बना। वहाँ किसी कारण से राजा का अपराधी होने के कारण एक दिन राजा ने उसको गांव मे से निकाल दिया॥१८०॥

मराठी :- त्यानंतर तो भद्रक मनाचा गाढवाचा मृत्यु झाल्यानंतर मुरस्थल गावांत भानू नावाचा गावाचा अग्रणी बनला. परंतु राजाचा अपराध केल्यामुळे एके दिवशी राजाने त्याला गावाबाहेर हाकलून दिले.॥१८०॥

English :- Then in due-course, the gentle donkey faced death and was reincarnated as the headman,(named Bhanu) of a village named Murastal. Then one day due to some unknown reason, he was found guilty by the king and was banished from the village.

गङ्गावर्ते स्थितः सोऽथ वृत्तिलोपमसासहिः ॥
क्रूरकर्मार्जितैरेव द्रव्यैः स्वं नीरवीवहत् ॥१८१॥

अन्वयः:- अथ सः गङ्गावर्ते स्थितः वृत्तिलोपं असासहिः क्रूरकर्मार्जितैः एव द्रव्यैः स्वं नीरवीवहत् ॥१८१॥

विवरणम्:- *अथ नृपेण निर्वासनात् अनन्तरं सः गङ्गायाः आवर्तः गङ्गावर्तः तस्मिन् गङ्गावर्ते गङ्गातटे स्थितः। वृत्तेः आजीविकायाः लोपः वृत्तिलोपः तं वृत्तिलोपं आजीविकालोपं न सहतेऽसौ असासहिः असहमानः क्रूराणि च तानि कर्माणि च क्रूरकर्माणि क्रूरकर्मभिः अर्जितानि क्रूरकर्मार्जितानि तैः क्रूरकर्मार्जितैः द्रव्यैः धनैः स्वं नीरवीवहत् निरवाहयत्। स्वकीयं निर्वाहं अकरोत् ॥१८१॥*

सरलार्थः:- अनन्तरं गङ्गातटे निवसन् सः आत्मनः आजीविकायाः लोपमसहमानः क्रूराणि कर्माणि कृत्वा धनमार्जयत्। तैः पापकर्मार्जितैः धनैः स्वस्योपजीविकाम् अकरोत् ॥१८१॥

ગુજરાતી :- રાજાએ ગામમાંથી કાઢી મૂકેલો ભાનુ ગંગાને કાંઠે રહેવા લાગ્યો, અને પોતાની ચાલુ આજીવિકાનો નાશ નહીં સહન થવાથી પાપથી ભરપૂર ક્રૂર કાર્યોથી પૈસા ઉપાર્જન કરી તે વડે પોતાનો નિર્વાહ ચલાવવા લાગ્યો.॥૧૮૧॥

हिन्दी :- राजा के द्वारा गांव से निकाला हुआ भानु गंगा किनारे रहने लगा, लेकिन चालू आजीविका का नाश सहन न होने से पापवाले क्रूर कार्यों के द्वारा धन कमाकर अपना निर्वाह करने लगा॥१८१॥

मराठी :- नंतर तो गंगेच्या किनारी राहू लागला, पण आपल्या चालू आजीविकेचा नाश सहन न झाल्याने पापाने युक्त क्रूर कर्माने संपत्ती कमवून उदर निर्वाह चालवू लागला.॥१८१॥

English :- Bhanu, who was banished by the king, now had got settled on the banks of the river Ganga. Now Bhanu who had lost an easy way of earning a living was overcome with fury and embraced cruel and vile ways of earning a living.

गङ्गावर्ते स्थितः सोऽथ वृत्तिलोपमसासहिः ॥
क्रूरकर्मार्जितैरेव द्रव्यैः स्वं नीरवीवहत् ॥१८१॥

अन्वयः:- अथ सः गङ्गावर्ते स्थितः वृत्तिलोपम् असासहिः क्रूरकर्मार्जितैः एव द्रव्यैः स्वं नीरवीवहत् ॥१८१॥

विवरणम्:- *अथ नृपेण निर्वासनात् अनन्तरं सः गङ्गायाः आवर्तः गङ्गावर्तः तस्मिन् गङ्गावर्ते गङ्गातटे स्थितः। वृत्तेः आजीविकायाः लोपः वृत्तिलोपः तं वृत्तिलोपम् आजीविकालोपं न सहतेऽसौ असासहिः असहमानः क्रूराणि च तानि कर्माणि च क्रूरकर्माणि। क्रूरकर्मभिः अर्जितानि क्रूरकर्मार्जितानि तैः क्रूरकर्मार्जितैः द्रव्यैः धनैः स्वं नीरवीवहत् निरवाहयत्। स्वकीयं निर्वाहं अकरोत् ॥१८१॥*

सरलार्थः:- अनन्तरं गङ्गातटे निवसन् सः आत्मनः आजीविकायाः लोपमसहमानः क्रूराणि कर्माणि कृत्वा धनमार्जयत्। तैः पापकर्मार्जितैः धनैः स्वस्योपजीविकाम् अकरोत् ॥१८१॥

ગુજરાતી :- રાજાએ ગામમાંથી કાઢી મૂકેલો ભાનુ ગંગાને કાંઠે રહેવા લાગ્યો, અને પોતાની ચાલુ આજીવિકાનો નાશ નહીં સહન થવાથી પાપથી ભરપૂર ક્રૂર કાર્યોથી પૈસા ઉપાર્જન કરી તે વડે પોતાનો નિર્વાહ ચલાવવા લાગ્યો.॥૧૮૧॥

हिन्दी :- राजा के द्वारा गांव से निकाला हुआ भानु गंगा किनारे रहने लगा, लेकिन चालू आजीविका का नाश सहन न होने से पापवाले क्रूर कार्यों के द्वारा धन कमाकर अपना निर्वाह करने लगा॥१८१॥

मराठी :- नंतर तो गंगेच्या किनारी राहू लागला, पण आपल्या चालू आजीविकेचा नाश सहन न झाल्याने पापाने युक्त क्रूर कर्माने संपत्ती कमवून उदर निर्वाह चालवू लागला.॥१८१॥

English :- Bhanu, who was banished by the king, now had got settled on the banks of the river Ganga. Now Bhanu who had lost an easy way of earning a living was overcome with fury and embraced cruel and vile ways of earning a living.

**श्रीशत्रुञ्जययात्रातो, निवृत्तः कोऽपि वाडवः ॥**
**पत्नी - पुत्रयुतस्तत्र, रात्रौ ग्रामे समेतवान् ॥१८२॥**

अन्वयः:- एकदा कोऽपि पत्नीपुत्रयुतः श्रीशत्रुञ्जययात्रातः निवृत्तः वाडवः रात्रौ तत्र ग्रामे समेतवान् ॥१८२॥

विवरणम्:- *एकदा कः अपि पत्नी च पुत्राश्च पत्नीपुत्राः। पत्नीपुत्रैः युतः पत्नीपुत्रयुतः भार्यापुत्रसहितः श्रीशत्रुञ्जयस्य यात्रा श्रीशत्रुञ्जययात्रा तस्याः श्रीशत्रुञ्जययात्रायाः निवृत्तः परावृत्तः वाडवः ब्राह्मणः रात्रौ निशायां तत्र तस्मिन् ग्रामे समेतवान् समायातः ॥१८२॥*

सरलार्थः:- एकदा कोऽपि पत्नीपुत्रसहितः श्रीशत्रुञ्जयात्रायाः निवृत्तः ब्राह्मणः रात्रौ तस्मिन् ग्रामे समायातः ॥१८२॥

ગુજરાતી :- એક દિવસે શ્રી શત્રુંજયતીર્થની યાત્રા કરી પાછો ફરેલો કોઈ બ્રાહ્મણ પોતાની સ્ત્રી અને પુત્રસહિત તે મુરસ્થલ ગામમાં રાત્રે આવ્યો. ॥૧૮૨॥

हिन्दी :- एक दिन शत्रुंजय तीर्थ की यात्रा कर के वापस लौटते हुए कोई ब्राह्मण अपनी स्त्री और पुत्र सहित उस मुरस्थल गांवमें रात को आया॥१८२॥

मराठी :- एकेदिवशी श्रीशत्रुंजय तीर्थाची यात्रा करून परत येणारा एक ब्राह्मण आपली पत्नी आणि पुत्रासोबत त्या मुरस्थल गांवी रात्री आला.॥१८२॥

English :- One day a *Brahmin* along with his wife, and son, arrived from the pilgrimage of Satrunjay and settled for a night in the village of Murastal.

**भक्तदत्तां गृहीत्वा गां, सोऽन्त्ययामे चलंस्ततः ॥**
**गो - पत्नी - पुत्रयुक् तेन, दुष्टेनाऽघाति भानुना ॥१८३॥**

अन्वयः:- भक्तदत्तां गां गृहीत्वा अन्त्ययामे ततः चलन् गोपत्नीपुत्रयुक् सः तेन दुष्टेन भानुना अघाति ॥१८३॥

**विवरणम्:-** *भक्तेन दत्ता भक्तदत्ता, तां भक्तदत्तां गां धेनुं गृहीत्वा आदाय अन्तेभवः अन्त्यः। अन्त्यश्चासौ यामश्च अन्त्ययामः तस्मिन् अन्त्ययामे अन्तिमप्रहरे ततः तस्मात् स्थानात् चलन् गच्छन् गौश्च पत्नी च पुत्राश्च गोपत्नीपुत्राः। गोपत्नीपुत्रैः युज्यतेऽसौ गोपत्नीपुत्रयुक् धेनपुत्रपत्नीसहितः सः ब्राह्मणः तेन दुष्टेन क्रूरेण भानुना अघाति अहन्यत ॥१८३॥*

**सरलार्थ:-** तत्र भक्तेन दत्तां धेनुमादाय सः रात्रेः अन्तिमे यामे पत्नीपुत्रैः सह स्वं ग्रामं गन्तुं निर्गतः। तदा धेनुपत्नीपुत्रसहितं तं ब्राह्मणं सः दुष्टः भानुः हतवान् ॥१८३॥

**ગુજરાતી :-** પોતાના કોઈ ભક્ત પાસેથી મળેલી ગાય અને પોતાના પરિવારને લઈને રાત્રિના છેલ્લા પ્રહરમાં તે પોતાના ગામ તરફ જવા નીકળ્યો ત્યારે પેલા દુષ્ટ ભાનુએ એને ગાય અને પરિવારસહિત મારી નાખ્યો.

**हिन्दी :-** वहाँ अपने किसी भक्त के द्वारा दी हुई गाय लेकर (और अपने परिवारसहित) वह ब्राम्हण रात के आखरी प्रहर में अपने गांव की ओर जाने लगा उतने में ही उस दुष्ट भानु ने आकर गाय पत्नी और पुत्र के साथ उस ब्राम्हण को मार डाला॥१८३॥

**मराठी :-** तेथे आपल्या कोणी भक्ताने दिलेली गाय घेऊन (आणि आपल्या परिवारा सोबत) तो ब्राह्मण रात्रीच्या शेवटच्या प्रहरात आपल्या गावी जाण्यास निघाला. तितक्यात त्या दुष्ट भानू ने येऊन गाय, पत्नी आणि पुत्रासह त्या ब्राह्मणाला ठार मारले.॥१८३॥

**English :-** From there the *brahmin* was returning back to his village along with his family (wife and son) and a cow that was presented to him by a devottee, when the vicious Bhanu attacked them and killed them.

**ततः पापी पलाय्याऽगाद्, गङ्गावर्ते यदा तदा ॥**
**शीतर्तौ सायमद्राक्षीत्, कायोत्सर्गस्थितं मुनिम् ॥१८४॥**

**अन्वयः-** पापी सः यदा ततः पलाय्य गङ्गावर्ते अगात्। तदा सायं शीतर्तौ कायोत्सर्गस्थितं मुनिम् अद्राक्षीत् ॥१८४॥

*विवरणम्:-* *पापमस्यास्तीति पापी पापकर्मा सः भानुः यदा ततः तस्मात् स्थानात् पलाय्य गङ्गायर्तें गङ्गातटे स्वस्थाने अगात् अगमत् तदा शीतश्चासौऋतुश्च शीततुः, तस्मिन् शीततौं सायं सायंकाले कायस्य उत्सर्गः कायोत्सर्गः। कायोत्सर्गे स्थितः कायोत्सर्गस्थितः तं कायोत्सर्गस्थितं मुनिम् अद्राक्षीत् अपश्यत् ॥१८३॥*

सरलार्थः- पापी सः भानुः यदा तस्मात् स्थानात् पलाय्य गङ्गातटे स्वस्थानं गतः तदा शीततौं सायङ्काले कायोत्सर्गस्थितं मुनिमपश्यत् ॥१८४॥

ગુજરાતી :- ત્યાંથી મહાપાપી નાસીને ગંગાને કાંઠે પોતાને સ્થાને ચાલ્યો ગયો ગંગાને કાંઠે સાયંકાલે, શિયાળાની ઠંડી ઋતુમાં એક મુનિરાજને કાઉસગ્ગ ધ્યાને ઊભા રહેલા જોયા. ॥૧૮૪॥

हिन्दी :- वहाँ से वह पापी भानु भागकर गंगा के किनारे अपनी जगह पर चला गया। गंगा के किनारे शरद् ऋतु में शाम के समय एक मुनि को कायोत्सर्ग ध्यान में स्थित देखा॥१८४॥

मराठी :- तेथून तो पापी भानु पळून गंगेच्या काठी आपल्या जागी निघाला. तेव्हा हिवाळ्याच्या ऋतूत संध्याकाळच्या वेळी एक मुनि कायोत्सर्ग ध्यानामध्ये उभे राहिलेले त्याला दिसले.॥१८४॥

English :- After having killed them,. Bhanu ran back to his dwelling on the banks of river Ganga. One evening, on the banks during the autumn season, the happened to see a monk in deep meditation. *(Kayotsarg)*

**अहो! कियच्चिरं कष्टमसावत्र सहिष्यते ॥**
**इति विस्मयवांस्तस्थौ तत्र यामचतुष्टयं ॥१८५॥**

अन्वयः- अहो! असौ अत्र कियच्चिरं कष्टं सहिष्यते? इति विस्मयवान् सः तत्र यामचतुष्टयं तस्थौ ॥१८५॥

*विवरणम्:-* *अहो! असौ मुनिः अत्र कियत्चिरं कष्टं दुःखं सहिष्यते? इति विस्मयः अस्यास्तीति विस्मयवान् आश्चर्यवान् सः भानुः तत्र यामानां प्रहराणां चतुष्टयं यामचतुष्टयं तस्थौ स्थितवान् ॥१८५॥*

सरलार्थ:- अहो! अयं मुनि: अत्र कियत्कालं कष्टं सहिष्यते? इति विस्मयान्वित: स: भानु: तत्र चतुर: यामान् तस्थौ ॥१८५॥

ગુજરાતી :- શિયાળાની કડકડતી ઠંડીમાં સાયંકાલે કાઉસગ્ગ ધ્યાને ઉભા રહેલા મહાત્માને જોઇ ભાનુ વિચાર કરવા લાગ્યો કે - "અહો! આ મુનિરાજ કેટલો વખત આવા પ્રકારનું કષ્ટ સહન કરશે?" એવા આશ્ચર્ય સાથે ત્યાંજ રાત્રિના ચાર પહોર રહ્યો. ॥૧૮૫॥

हिन्दी :- इस तरह शरद् ऋतु की सख्त ठंडी में शाम को कायोत्सर्ग ध्यान में लीन हुए उस महात्मा को देखकर वह भानु सोचने लगा, "यह मुनि कितने समय तक ऐसा कष्ट सहन करेगा?" ऐसे आश्चर्य से वह रात के चारो प्रहर वहीं रहा॥१८५॥

मराठी :- हिवाळ्याच्या कडकडीत ठंडीमध्ये संध्याकाळ पासून ध्यान करणाऱ्या मुनींना पाहून तो भानु विचार करू लागला, "हे मुनिराज, किती वेळ पर्यंत असे असह्य कष्ट सहन करतील?" आणि आश्चर्याने तो रात्रभर (म्हणजे चार ही प्रहारापर्यंत) तेथेच थांबला.॥१८५॥

English :- Seeing the monk, who was in deep meditation, Bhanu was overcome with feeling of anxiousness. He wondered as to how can a monk meditate in such a chilly season. So Bhanu awaited the whole night, to have an audience with him.

**प्रात: स पारितोत्सर्ग:, प्रणम्याऽप्रच्छि भानुना ॥**
**किं कार्यं प्राज्यराज्येन, यदेवं तपसे तप: ॥१८६॥**

अन्वय:- प्रात: पारितोत्सर्ग: स: प्रणम्य भानुना अप्रच्छि। किं ते प्राज्यराज्येन कार्यं। यद् एवम् तप: तपसे ॥१८६॥

विवरणम्:- *प्रात: प्रभाते पारित: कायोत्सर्ग: येन स: पारितोत्सर्ग: कार्योत्सर्गं पारितवान् स: मुनि: प्रणम्य वन्दित्वा तेन भानुना अप्रच्छिअपृच्छ्यत किं तव प्राज्यं च तद् राज्यं च प्राज्यराज्यं तेन प्राज्यराज्येन कार्यमस्ति? किं त्वं प्राज्यं समृद्धं राज्यं वाञ्छसि? यद् एवं इत्थं तप: तपसे?॥१८६॥*

सरलार्थ:- प्रात: कायोत्सर्गं पारितवान् स: मुनि: तेन भानुना वन्दित्वा पृष्ट:। भो: मुने। किं त्वं समृद्धं राज्यमभिलषसि? येन इत्थं कष्टतरं तप: तपसि ॥१८६॥

ગુજરાતી :- પ્રાત:સમયે મુનિએ કાઉસગ્ગ પાર્યો, ત્યારે ભાનુએ નમસ્કાર કરીને પૂછ્યું 'મહારાજ! શું તમારે કોઈ મોટું રાજ્ય મેળવવું છે કે જેથી આવી ઘોર અને અસહ્ય તપશ્ચર્યા કરો છો?' ॥૧૮૬॥

हिन्दी :- प्रात:काल मुनिने कार्योत्सर्ग ध्यान पूरा किया, तब भानु ने प्रणाम कर के उनसे पूछा, "हे मुनिराज। क्या तुम्हे कोई बडा राज्य प्राप्त करना है जिसके लिए ऐसी घोर और असह्य तपश्चर्या करते हो?"॥१८६॥

मराठी :- पहाटे जेव्हा मुनीने कायोत्सर्ग ध्यान संपविलं, तेव्हा भानु त्यांना नमस्कार करून विचारू लागला, "महाराज। काय आपल्याला कोणते तरी मोठें राज्य मिळवायचे आहे का, जेणे करून इतका घोर तपस्या करीत आहात?"॥१८६॥

English :- At dawn, the monk came out of his meditation. At this point, Bhanu bowed to the monk and asked him if he intends to achieve a kingdom by performing such dire penences.

मुनि: प्रोचे न राज्येन, कार्यं नरकहेतुना ॥
किन्तु मोक्षकृते सर्व-साधुभिस्तप्यते तप: ॥१८७॥

अन्वय:- मुनि: प्रोचे - नरकहेतुना राज्येन कार्यं न। किन्तु सर्वसाधुभि: मोक्षकृते तप: तप्यते ॥१८७॥

*विवरणम्:- मुनि: प्रोचे बभाषे, नरकस्य हेतु: नरकहेतु: तेन नरकहेतुना राज्येन मम कार्यं नास्ति। किन्तु सर्वे च ते साधवश्च सर्वसाधव:, तै: सर्वसाधुभि: मोक्षस्य कृते मोक्षकृते तप: तप्यते। साधव: मोक्षार्थमेव तप: तपन्ति न राज्यादिलब्धये ॥१८७॥*

सरलार्थ:- मुनि: अभाषत - राज्यं नरकनिबन्धनं वर्तते। तस्मात् मम राज्येन कार्यं नास्ति। सर्वसाधव: मोक्षार्थं तप: तपन्ति ॥१८७॥

ગુજરાતી :- ત્યારે મુનિએ જવાબ આપ્યો, 'નરકગતિ પ્રાપ્ત થવાના કારણભૂત રાજ્યનું મારે કાંઈ પણ કામ નથી, પરંતુ સર્વે સાધુઓ મોક્ષ મેળવવા માટે તપશ્ચર્યા કરે છે. ॥૧૮૭॥

हिन्दी :- तब मुनिने जवाब दिया "नरक गति को प्राप्त करानेवाले ऐसे राज्य से मुझे कोई मतलब नहीं है, परंतु सभी साधु मोक्ष प्राप्त करने के लिये ही तपश्चर्या करते है।"॥१८७॥

मराठी :- तेव्हा मुनीने उत्तर दिले की, "नरकगतीला कारणीभूत असलेल्या अशा राज्यापासून मला काहीच स्वार्थ नाही, सगळे मुनि मोक्षप्राप्ती करिताच तपश्चर्या करतात.॥१८७॥

English :- At this the monk replied that he does not wish a kingdom that directs one to hell. But he adds that all monks perform dire penences only to achieve one goal in life, i.e. to attain Salvation.

**को मोक्ष इति तेनाऽपि, पृष्टः साधुरभाषत ॥**
**संसार - मोक्षयोर्व्यक्तं, स्वरूपं बहुयुक्तिभिः ॥१८८॥**

अन्वयः- कः मोक्षः? इति तेनाऽपि पृष्टः साधुः संसारमोक्षयोः व्यक्तं स्वरूपं बहुयुक्तिभिः अभाषत ॥१८८॥

विवरणम्:- *कः मोक्षः? इति तेन भानुना पृष्टः साधुः संसारश्च मोक्षश्च संसारमोक्षौ, तयोः संसारमोक्षयोः व्यक्तं सुस्पष्टं स्वरूपं बहवश्च ताः युक्तयश्च बहुयुक्तयः ताभिः बहुयुक्तिभिः अभाषत अब्रवीत् ॥१८८॥*

सरलार्थः- को नाम मोक्षः? इति भानुः साधुं पृष्टवान्। तदा साधुः संसारस्य मोक्षस्य च सुस्पष्टं स्वरूपं बहुयुक्तिभिः उक्तवान् ॥१८८॥

ગુજરાતી :- ભાનુએ પૂછ્યું કે 'મોક્ષ એટલે શું?' ત્યારે મુનિરાજે તેને સંસાર અને મોક્ષનું સ્પષ્ટ સ્વરુપ યુક્તિપૂર્વક સમજાવ્યું ॥૧૮૮॥

हिन्दी :- भानुने पूछा, "मोक्ष क्या है?" तब मुनिराज ने उसको संसार और मोक्ष का स्वरूप युक्तिपूर्वक समझाया।

मराठी :- भानूने विचारलं, "मोक्ष म्हणजे काय?" तेव्हा मुनीने संसार आणि मोक्षाचे स्वरूप अनेक युक्तिवादाने स्पष्ट केले.॥१८८॥

English :- Bhanu then asked him to define Salvation. At this the monk gave him the defination of this earth and Salvation with great tact and skill.

असौ जन्मजरामृत्यु-मुख्यक्लेशसहस्रभूः ॥
चतुर्गतिकसंसारः कस्य स्यान्न विरक्तये ॥१८९॥

अन्वयः- असौ जन्मजरामृत्युमुख्यक्लेशसहस्रभूः चतुर्गतिकसंसारः कस्य विरक्तये न स्यात् ॥१८९॥

विवरणम्:- *असौ जन्म च जरा वृद्धत्वं च मृत्युः मरणं च जन्मजरामृत्यवः जन्मजरामृत्यवः मुख्याः प्रधानाः येषां ते जन्मजरामृत्युमुख्याः। जन्मजरामृत्युमुख्याश्च ते कलेशाश्च जन्मजरामृत्युमुख्यक्लेशाः। जन्मजरामृत्युमुख्यक्लेशानां सहस्राणि जन्मजरामृत्युमुख्यक्लेशसहस्राणि, भवन्ति अस्मात् इति जन्मजरामृत्युमुख्यक्लेशसहस्रभूः। चतस्रः मनुष्यतिर्यङ्नारकदेवरूपाः गतयः यस्मिन् सः चतुर्गतिकः। चतुर्गतिकश्चासौ संसारश्च चतुर्गतिकसंसारः कस्य विरक्तये विरागाय न स्यात्? सर्वस्य ज्ञानिनः विरक्तये स्यात् ॥१८९॥*

सरलार्थः- असौ संसारः मनुष्यतिर्यङ्नरकदेवरूपाभिः चतसृभिः गतिभिः युक्तः तथा जन्मजरामृत्युमुख्यानां क्लेशसहस्राणामुत्पत्तिस्थानमस्ति। अतः सः कस्य वैराग्याय न भवति? सर्वस्य ज्ञानिनः वैराग्याय भवति ॥१८९॥

ગુજરાતી :- વળી જણાવ્યું, "જન્મ, જરા અને મૃત્યુ વિગેરે હજારો દુ:ખથી ગહન બનેલા ચાર ગતિરૂપ આ સંસારથી કોને વૈરાગ્ય ન થાય?" ॥૧૮૯॥

हिन्दी :- और आगे कहा, "जन्म, जरा, मृत्यु इत्यादि हजारो दुःखों से गहन बने चार गतिरूप इस संसार से भला किस को वैराग्य न होगा?"॥१८९॥

मराठी :- आणि पुढे सांगितले, "जन्म, वार्धक्य, मृत्यु इत्यादि सहस्रावधि दुःखांनी युक्त असलेल्या चार प्रकारच्या गतिरूपी ह्या संसारापासून कोणाला बरे वैराग्य होणार नाही?"॥१८९॥

English :- He added that one would only wish to renounce this worldly life rather that attain a life, old age, death or any of the four levels that are interwoven with thousands of torments and turmoils.

शाश्वताऽनन्तसौख्यश्री - निवासं वासवा अपि।
स्वर्गसौख्यमनादृत्य, याचन्ते मोक्षमुत्तमम् ॥१९०॥

अन्वय:- वासवा: अपि स्वर्गसौख्यमनादृत्य शाश्वतानन्तसौख्यश्रीनिवासं उत्तमं मोक्षं याचन्ते ॥१९०॥

विवरणम्:- *वासवा: इन्द्रा: अपि स्वर्गस्य सुखमेव सौख्यं स्वर्गसौख्यं स्वर्गसुखं अनादृत्य तिरस्कृत्य शाश्वतं च तद् अनन्तं च तत् सौख्यं च शाश्वतानन्तसौख्यं एव श्री: लक्ष्मी: तस्या: निवास: यस्मिन् स: तं शाश्वतानन्तसौख्यश्रीनिवासम् उत्तमं मोक्षं याचन्ते ॥१९०॥*

सरलार्थ:- इन्द्रा: अपि स्वर्गसुखं तिरस्कृत्य शाश्वतानन्तसुखश्रिया: निवासभूतम् उत्तमं मोक्षमभिलषन्ति॥१९०॥

ગુજરાતી :- શાશ્વતા અને અનંતા સુખનું સ્થાન મોક્ષ છે, આ મોક્ષસુખ પાસે સ્વર્ગસુખ પણ તુચ્છ છે, અને તેથી જ ઇન્દ્રો પણ સ્વર્ગસુખનો અનાદર કરી આવા અનુપમ મોક્ષને માટે યાચના કરી રહ્યા છે.॥૧૯૦॥

हिन्दी :- शाश्वत और अनंत सुख का निवासस्थान मोक्ष है। उस मोक्ष सुख के सामने स्वर्ग का सुख भी तुच्छ लगता है और इसीलिये इन्द्र भी अपने स्वर्ग सुखों को छोडकर इस अनुपम मोक्ष की याचना करते हैं॥१९०॥

मराठी :- शाश्वत आणि अनंत सुखाचे निवासस्थान मोक्ष आहे. त्या मोक्षाच्या सुखापुढे स्वर्गाचे सुख सुद्धा तुच्छ वाटते. म्हणूनच इन्द्र सुद्धा आपले स्वर्ग सुख सोडून या मोक्षाची मागणी करतात.॥१९०॥

English :- The residence of the Goddess of eternal happiness and steadiness is Salvation. The bliss of heaven is just putrid and trashy compared to the bliss of Salvation. Therfore even Indra wished to abandon his heavenly bliss and craves to attain this non-pareil and peerless happiness of Salvation.

परं स प्राप्यते प्रायः, कृतैः सुकृतकर्मभिः ॥
मुख्यं तेष्वपि सर्वज्ञैः, सर्वसत्वकृपोच्यते ॥१९१॥

अन्वयः:- परं सः प्रायः कृतैः सुकृतकर्मभिःप्राप्यते। तेषु अपि सर्वज्ञैः सर्वसत्वकृपा मुख्यम् उच्यते ॥१९१॥

विवरणम्:- *परं सः शाश्वतानन्तसुखरूपः मोक्षः प्रायः बहुधा कृतैः विहितैः सुकृतानि च तानि कर्माणि च सुकृतकर्माणि तैः सुकृतकर्मभिः प्राप्यते लभ्यते। तेषु सुकृतेषु अपि सर्वं जानन्तीति सर्वज्ञाः तैः सर्वज्ञैःअर्हद्भिः सर्वे च ते सत्वाश्च सर्वसत्त्वाः सर्वजीवाः तेषु सर्वसत्त्वेषु सर्वजीवेषु कृपा करुणा मुख्यं प्रधानं सुकृतं उच्यते ॥१९१॥*

सरलार्थः:- परं शाश्वतानन्तज्ञानानन्दरूपः स मोक्षः सुकृतकर्मभिः एव प्राप्यते। तेषु सुकृतेषु अपि सर्वजीवेषु करुणा प्रमुखं सुकृतं वर्तते इति सर्वज्ञाः भाषन्ते ॥१९१॥

ગુજરાતી :- એવા ઉત્તમોત્તમ મોક્ષ પ્રાય: સુકૃતકર્મો વડે જીવો પ્રાપ્ત કરે છે. તે સુકૃતકર્મોમાં પણ સર્વ જીવો ઉપર કરુણાભાવ રાખવો એ મુખ્ય સુકૃતકર્મ સર્વજ્ઞોએ કહ્યું છે. ॥૧૯૧॥

हिन्दी :- उत्तम ऐसा मोक्ष प्रायः सुकृत कर्मो द्वारा ही जीव प्राप्त करता है, उन सुकृतों में भी सभी जीवो पर करुणा भाव रखना यह मुख्य सुकृत सर्वज्ञों ने कहा है॥१९१॥

मराठी :- आणि असे हे मोक्ष सुख सुकृतांचे आचरण करूनच जीवांना मिळते, आणि सुकृतांमध्ये सुध्दा सगळ्या जीवांवर करुणाभाव ठेवणे हेंच मुख्य सुकृत ज्ञान्यांनी सांगितले आहे.॥१९१॥

English :- And to attain Salvation, one has to perform virtuous and meritocratic deeds And the supreme knowledgeists have even said that performing meritocratic deeds goes hand in hand with, maintaining a very compassionate heart on the beings of this earth.

**कृपाधिकारे जीवानां, हिंसाऽहिंसाफलं तथा ॥**
**उपदिष्टं यथा भानु-श्चकम्पे निजपापकैः ॥१९२॥**

अन्वयः- कृपाधिकारे जीवानां हिंसाऽहिंसाफलं तथा उपदिष्टं यथा भानुः निजपापकैः चकम्पे ॥१९२॥

विवरणम्:- *कृपायाः अधिकारे कृपाधिकारे दयाधिकारे जीवानां हिंसा च अहिंसा च हिंसाहिंसे। हिंसाहिंसयोः फलं हिंसाहिंसाफलं जीवानां हिंसायां कृतायां कथं दारुणं दुःखं फलं प्राप्यते? अहिंसायां दयायां च कृतायां कीदृशमनुपमं सुखं लभ्यते? इतीदं मुनिना तथा तेन प्रकारेण उपदिष्टं यथा तच्छुत्वा भानुः निजानि च तानि पापकानि च निजपापकानि तैः निजपापकैः निजदुष्कृतैः चकम्पे अकम्पिष्ट ॥१९२॥*

सरलार्थः- कृपाधिकारे मुनिना जीवानां हिंसया कथं दारुणं दुःखं भुज्यते अहिम्सया च कीद्वशमनुपमं सुखं प्राप्यते? इत्येतद् तथा उपदिष्टं यथा तच्छ्रुत्वा भानुः निजपातकैः अकम्पिष्ट ॥१९२॥

ગુજરાતી :- આ પ્રમાણે જીવદયાના અધિકારમાં પ્રાણીઓની હિંસા કરવાથી કેવાં માઠાં ફળ ભોગવવાં પડે છે, અને દયા રાખવાથી કેવાં અનુપમ સુખ મળે છે તે સર્વનું એક સ્પષ્ટ સ્વરૂપ તે મુનિરાજે સમજાવ્યું કે જેથી ભાનુ પોતાના કરેલા પાપથી કંપવા લાગ્યો. ॥૧૯૨॥

हिन्दी :- इस तरह जीवदया के विषय में प्राणियों की हिंसा करने से कैसे बुरे परिणाम भुगतने पडते है, और दया रखने से कैसे अनुपम सुख प्रास होते है उसका ऐसा स्पष्ट विवरण किया कि जिससे भानू अपने किये हुए पापों सें कांपने लगा॥१९२॥

मराठी :- ह्या प्रमाणे जीवदयेच्या संदर्भात प्राण्यांना हिंसा केल्याने कसे वाईट परिणाम भोगावे लागतात तसेच दया बाळगण्याने कसे अनुपम सुख साध्य होतात. याचे विवरण अशाप्रकारे केले की ज्यामुळे तो भानु स्वतः केलेल्या पापांने कांपू लागला.॥१९२॥

English :- Then the monk explained to him clearly the dire consequences one has to face if he slaughtners or ill.treats animals and the bliss he obtains if he cuddles them with utmost love. When Bhanu understood all this, his heart sank with fright.

यावज्जीवमथादाय, हिंसानियममुत्तमं ॥
साधुं स्वाऽवसथे नीत्वा, शुद्धान्नैः प्रत्यलाभयत् ॥१९३॥

अन्वयः- अथ यावज्जीवम् उत्तमं हिंसानियमं आदाय साधुं स्वावसथे नीत्वा शुद्धान्नैः प्रत्यलाभयत् ॥१९३॥

विवरणम्:- *अथ अनन्तरं यावत् जीवति तावत् यावज्जीवम् उत्तमं हिंसायाः नियमः हिंसानियमः तं हिंसानियमं अहिंसाव्रतम् आदाय गृहीत्वा साधुं स्वस्य आवसथः स्वावसथः तस्मिन् स्वावसथे स्वनिवासे नीत्वा शुद्धानि निर्दोषाणि च तानि अन्नानि च शुद्धान्नानि तैः शुद्धान्नैः निर्दोषैः कल्प्यैः अन्नैः प्रत्यलाभयत् भिक्षां अग्राहयत् ॥१९३॥*

सरलार्थः- अनन्तरं यावज्जीवं उत्तमम् अहिंसाव्रतं आदाय सः भानुः तं साधुं स्वगृहं नीत्वा शुद्धान्नैः प्रत्यलाभयत् ॥१९३॥

ગુજરાતી :- હવે તે મુનિરાજ પાસે જિંદગીપર્યંત અહિંસાના ઉત્તમ નિયમને ગ્રહણ કરી, સાધુ મહારાજને પોતાના ઘેર લઈ જઈ શુદ્ધ અન્નથી પ્રતિલાભ્યા. ॥૧૯૩॥

हिन्दी :- अब वह मुनिराज के पास से आजीवन अहिंसा का उत्तम नियम ग्रहण कर के साधु महाराज को (आग्रह करके) अपने घर ले जाकर शुद्ध अन्न का प्रतिलाभ (दान दिया) दिया॥१९३॥

मराठी :- आतां त्या मुनिराजांकडून जीवन असेपर्यंत अहिंसेचा नियम ग्रहण करून त्या मुनिमहाराजांना आग्रह करून आपल्या घरी घेऊन जाऊन त्यांना शुद्ध जेवण घालून प्रतिलाभ दिला.॥१९३॥

English :- Then in the presence of the monk he took the vow of non- violence and benevolence. He then appellatively took the monk to his house and served him pure and fresh food.

एवं तेनाऽर्जितं भोग - फलं कर्म ततोऽनिशम् ॥
कृपावान् पूज्यते लोकादाप्तस्वो जीविकां व्यधात्॥१९४॥

अन्वयः:- एवं तेन भोगफलं कर्म अर्जितम्। ततः अनिशं कृपावान् लोकैः पूज्यते। लोकात् आप्तस्वः जीविकां व्यधात् ॥१९४॥

विवरणम्:- *एवम् अहिंसाव्रतादानेन साधवे शुद्धान्नप्रतिलाभेन च तेन भानुना भोगः फलं यस्य तद् भोगफलं कर्म अर्जितम्। ततः न विद्यते निशा यस्मिन् कर्मणि यथा स्यात् तथा अनिशं निरन्तरं कृपा अस्यास्तीति कृपावान् करुणापरः सः लोकै पूज्यते। लोकात् आप्तं स्वं धनं येन सः आप्तस्वः प्राप्तधनः जीविकामाजीविकां व्यधात् अकरोत्। लोकात् न्यायमार्गेण धनं प्राप्य तेन सः अजीवत् ॥१९४॥*

सरलार्थः:- अहिंसाव्रतं गृहीत्वा साधुंशुद्धान्नैः प्रतिलाभ्यच स भानुः भोगफलं कर्मोपार्जितवान्। लोके पूज्यः अभवत्। न्यायेन लोकात् धनं प्राप्य तेन अजीवत्॥१९४॥

ગુજરાતી :- આ પ્રમાણે તેણે અહિંસાવ્રત ગ્રહણ કરવાથી અને મુનિરાજને ભાવપૂર્વક વહોરાવવાથી ભોગફળ આપનારૂં શુભ કર્મ ઉપાર્જન કર્યું. ત્યાર પછી નિરંતર દયાળુ તરીકે તે લોકોમાં માનનીય થયો, અને લોકો પાસેથી શુદ્ધ નીતિપૂર્વક દ્રવ્ય મેળવી પોતાની આજીવિકા ચલાવવા લાગ્યો॥૧૯૪॥

हिन्दी :- इस तरह अहिंराव्रत ग्रहण करने से और मुनिराज को भावपूर्वक भोजन देने से उत्तम भोग प्राप्त करानेवाले शुभ कर्म का उपार्जन किया और हमेशा दयावान् ऐसा वह लोगों में प्रसिद्ध हुआ और लोगों से नीतिपूर्वक द्रव्य प्राप्त कर अपना निर्वाह करने लगा॥१९४॥

मराठी :- ह्याप्रमाणे अहिंसाव्रत ग्रहण करून, मुनिराजांना निष्ठेने भोजन घालून उत्तम भोग मिळवून देणारे शुभ कर्म कमविले आणि नेहमी दयाळू असा तो भानु लोकांमध्ये माननीय झाला आणि लोकांकडून नीतीने द्रव्य कमावून आपला निर्वाह चालवू लागला.॥१९४॥

English :- Therefore, in this way Bhanu who had taken the vow of non-violence and attained utmost bliss by serving the monk whole heratedly,had thus achieved benign and propitious merits He then became popular among the people as a tender-hearted and a bounteous man He then earned his livelihood from hence fourth, in virtuous and prudent ways

प्रान्ते मृत्वा दानपुण्याद्, राजन्! राजा भवानभूत् ॥
शुद्धजीवदयापुण्याद्, रूपनिर्जितमन्मथः ॥१९५॥

अन्वयः- प्रान्ते मृत्वा दानपुण्यात् हे राजन्! भवान् राजा अभूत्। शुद्धजीवदयापुण्यात् च रूपनिर्जितमन्मथः अभूत्॥१९५॥

विवरणम्:- *प्रान्ते आयुषः अवसाने मृत्वा मरणं प्राप्य सः भानुः दानेन पुण्यं दानपुण्यं तस्मात् दानपुण्यात् हे राजन्! भवान् नाभाकः राजा अभूत्। शुद्धया जीवदयया यत्पुण्यं तस्मात् पुण्यात् भवान् रूपेण सौन्दर्येण निर्जितः मन्मथः मदनः येन सः रूपनिर्जितमन्मथः सौन्दर्यावधीरितमदनः अभूत् ॥१९५॥*

सरलार्थः- आयुषि समाप्ते मृत्वा स भानुः हे राजन्। दानपुण्यात् भवद्रूपेण (नाभाकरूपेण) राजा अभूत्। शुद्धजीवदयापुण्यात् च मदनातिशायिरूपवान् अभूत् ॥१९५॥

ગુજરાતી :- હે રાજન્! આયુષ્ય પૂર્ણ થતાં ભાનુ મરણ પામી, મુનિરાજને દાન આપવાના પુણ્યથી નાભાક નામનો તું રાજા થયો છે, અને શુદ્ધ જીવદયા પાળી ઉપાર્જન કરેલા પુણ્યથી કામદેવ કરતાં પણ તને અધિક રૂપ પ્રાપ્ત થયું છે.॥૧૯૫॥

हिन्दी :- "हे राजन्! आयुष्य पूर्ण कर के भानु को मृत्यु प्राप्त हुआ। मुनिराज को दान देकर जो पुण्य उपार्जित किया था उसके कारण इस जन्म में तू नाभाक नाम का राजा हुआ है। शुद्ध दया पालन कर के उपार्जित किये पुण्य से अधिक रूप तुझे प्राप्त हुआ है।"॥१९५॥

मराठी :- "हे महाराज। आयुष्य संपल्यानंतर तो भानु मृत्यु पावला. मुनिराजांना दान देण्याच्या पुण्याने या जन्मात तू नाभाक नावाचा राजा बनलास. शुद्ध दयेचे पालन करण्याने कामदेवावर सुद्धा मात करणारे रूप प्राप्त झाले.॥१९५॥

English :- So then the monk continues saying that Bhanu embraced death after completing his life-span. And just because he has served a monk, food humbly and wholeheartedly, he was reincarnated as king Nabhak. And king Nabhak in turn has increased his merits double-fold, by performing virtuous and propitous actions and thus attained untold beauty in the process, that excelled cupid in all aspects.

चन्द्रादित्योऽपि सम्पूर्ण - निर्मापितजिनालयः ॥
प्रायश्चित्तेन शुद्धात्मा, सौधर्मे त्रिदशोऽभवत् ॥१९६॥

अन्वयः- सम्पूर्णनिर्मापितजिनालयः प्रायश्चित्तेन शुद्धात्मा चन्द्रादित्यः अपि सौधर्मे त्रिदशः अभवत् ॥१९६॥

विवरणम्:- *सम्पूर्णः निर्मापितः जिनस्यालयः येन सः सम्पूर्णनिर्मापितजिनालयः प्रायश्चित्तेन शुद्धः आत्मा यस्य सः शुद्धात्मा चन्द्रादित्यः नृपः अपि सौधर्मे देवलोके तिस्रः दशाः यस्य सः त्रिदशः देवः अभवत्ः पूर्वभवे देवद्रव्यविनाशेन कुष्ठरोगी जातः चित्रपुरीनृपः चन्द्रादित्यः अपि चित्रकूटशिखरे प्रारब्धं जिनालयं पूर्णतां नीत्वा प्रायश्चित्तेन शुद्धात्मा सन् सौधर्मे देवलोके अमरः अजनि ॥१९६॥*

सरलार्थः- चन्द्रादित्यनृपः अपि चित्रकूटशिखरे प्रारब्धं जिनालयं निर्माय प्रायश्चितेन शुद्धात्मा सन् सौधर्मे अमरः अभवत् ॥

ગુજરાતી :- પૂર્વભવમાં દેવદ્રવ્યનો વિનાશ કરવાથી કોઢિયો થયેલો ચિત્રપુરી નગરીનો રાજા ચન્દ્રાદિત્ય કે જે મુનિરાજના ઉપદેશથી પરમેષ્ઠી મહામંત્રનું ધ્યાન કરી છ માસમાં કાંચન જેવી કાંતિવાળો થયો હતો, તેણે ચિત્રકૂટ પર્વતના શિખર ઉપર આરંભેલ જિનાલય સંપૂર્ણ કરાવ્યું. આવી રીતે પ્રાયશ્ચિત કરી શુદ્ધાત્મા થયેલો તે મરણ પામી સૌધર્મ દેવલોકમાં દેવ થયો ॥૧૯૬॥

हिन्दी :- पूर्वभव में देवद्रव्य का विनाश करने से कोढी बना हुआ चित्रपुरी नगरी का राजा चन्द्रादित्य, जो मुनिराज के उपदेश से परमेष्ठि महामंत्र का ध्यान धर के छ मास में ही स्वर्णमय कांतिवाला हो गया था उसने चित्रकूट पर्वत के शिखर पर आरंभ

किया जिनालय का निर्माण कार्य पूर्ण किया इस तरह प्रायश्चित्त कर के शुद्धात्मा बना हुआ वह मृत्यु पा कर सौधर्म देवलोक में देव बना॥१९६॥

मराठी :- पूर्वजन्मी देवद्रव्याचा विनाश करण्याने कुष्ठरोग झालेला चित्रपुरी नगरीचा राजा चन्द्रादित्य, जो मुनिराजांच्या म्हणण्याप्रमाणे परमेष्ठी महामंत्राचे ध्यान धरून सहा महिन्यातच पूर्णनिरोगी होऊन कांचन समान कांतियुक्त झाला. त्याने चित्रकूटच्या शिखरावर शुरु केलेले जिनालय पूर्ण केले. अशा तऱ्हेने प्रायश्चित्त करून शुद्धात्मा झालेला तो चन्द्रादित्य मृत्यु पावला, व सौधर्म देवलोकात देव झाला.॥१९६॥

English :- Now the king Chandraditya, who in his past life had wrongly utilized God's wealth and thus had achieved a leprous figure, has got his lustrous self in just six moths after meditating on the *Navkar Mantra*, on the advice of the monk He then had completed building a Jain temple on the acme of the mount of Chitrakut in the city of Chtrepuri. He then. who had changed a new leaf, became a God in *Saudharme dev-lok*, after his death.

त्वं तत्रैव भवे मूर्त - पुण्यवज्जिनमन्दिरम् ॥
पातयित्वा - पुरस्याऽस्य, परितो दुर्गमातनोः ॥१९७॥

अन्वयः- त्वं तत्र एव भवे मूर्तपुण्यवत् जिनमन्दिरं पातयित्वा अस्य पुरस्य परितः दुर्गं आतनोः ॥

*विवरणम्:- हे नाभाक राजन्! त्वं तत्रैव तस्मिन् एव भानोः भवे मूर्तं च तत् पुण्यं च मूर्तपुण्यं, मूर्तपुण्येन तुल्यं मूर्तपुण्यवत् जिनस्य मन्दिरं जिनमन्दिरं पातयित्वा अस्य पुरस्य परितः दुर्गं आतनोः अकरोः ॥१९७॥*

सरलार्थः- हे नाभाक! त्वं तस्मिन् भानोः भवे मूर्तपुण्यमिव जिनालयं पातयित्वा अस्य पुरस्य परितः दुर्गं प्राकारम् अकरोः ॥१९७॥

ગુજરાતી :- હે નાભાકરાજા! તું ભાનુના ભવમાં મુરસ્થલ ગામમાં મુખી હતો તેજ ભવમાં તેં સાક્ષાત્ પુણ્યસ્વરૂપ જિનમંદિરને પાડી નાખી ગામની ચારે બાજુ કિલ્લો બનાવ્યો હતો. ॥૧૯૭॥

हिन्दी :- "हे राजन्! भानु के जन्म में तू जब गांव का मुखिया था, तब तूने साक्षात् पुण्यस्वरुप जिनमंदिर गिरा कर गांव के चारों ओर किल्ला बनाया था।"॥१९७॥

मराठी :- "हे राजन्! भानूच्या जन्मी जेव्हां तू गावाचा अग्रणी होतास, तेव्हा पुण्यस्थान असे जिनमंदिर पाडून गावांच्या चहुकडे किल्ला बांधला."॥१९७॥

English :- He added saying that the king, in his past life as Bhanu, had demolished a temple and built a fort instead of it.

भूपैयवं तत्र विप्रस्त्री - भ्रूणगोतीर्थघातिनः ॥
पञ्च हत्या इमाः सर्वाः, पुण्यविघ्ननिबन्धनम् ॥१९८॥

अन्वयः- हे भूप! एवं तत्र विप्रस्त्रीगोभ्रूणतीर्थघातिनः तव इमाः सर्वाः पञ्च हत्याः पुण्यविघ्ननिबन्धनम् ॥१९८॥

*विवरणम्:- हे भूप! एवं इत्थं तत्र भानुभवे विप्रश्च स्त्री च भ्रूणश्च गौश्च तीर्थं च विप्रस्त्रीभ्रूणगोतीर्थानि। विप्रस्त्रीभ्रूणगोतीर्थानि हन्ति इत्येवंशीलः तस्य विप्रस्त्रीभ्रूणगोतीर्थघातिनः तव इमाः पञ्च हत्याः अस्मिन् भवे पुण्यस्य विघ्नः पुण्यविघ्नः। पुण्यविघ्नस्य निबन्धनं कारणं पुण्यविघ्ननिबन्धनं अभवन् ॥१९८॥*

सरलार्थः- हे राजन्! तस्मिन् भानुभवे त्वया कृताः विप्र - स्त्री - भ्रूणगोतीर्थहत्याः एव अस्मिन् भवे पुण्यस्य विघ्ननिबन्धनम् अभवन् ॥१९८॥

ગુજરાતી :- હે રાજન્! આ પ્રમાણે ભાનુના ભવમાં તેં વિપ્રઘાત, સ્ત્રીઘાત, બાલઘાત, ગૌઘાત અને તીર્થઘાત આવી રીતે સર્વ હત્યાઓ તને આ ભવમાં પુણ્યમાં વિઘ્ન થવાનું કારણભૂત થયેલી છે. ॥૧૯૮॥

हिन्दी :- "हे राजन्! इस प्रकार भानु के जन्म में तूने विप्रघात (ब्राह्मण) स्त्रीहत्या, बालकहत्या, गौहत्या और तीर्थघात यह पांच बडी हत्याएँ की थी इसलिये ये सब हत्यायें तेरे इस भवमें पुण्यमें विघ्न डालने में कारण बनी हैं।"॥१९८॥

मराठी :- "हे महाराज! याप्रमाणे भानूच्या जन्मी तू विप्रघात (ब्राह्मणघात) स्त्रीघात, बालघात, गौघात आणि तीर्थघात अशी पाच मोठी हत्या केली तीच सगळी हत्या तुला या जन्मी पुण्यामध्ये विघ्न येण्याचे कारणीभूत ठरलेली आहे." ॥१९८॥

English :- Therfore during his birth as Bhanu , he had performed five disastrous deeds, i.e. Slaughering a brahmin, a women , a child, a cow and demolishing a temple, which is now bringing clogs and obstacles in his life and his meritorious deeds which are to be performed.

तत्राऽपि यात्राविघ्नस्य, तीर्थहत्यैव कारणम् ॥
अतस्तदपनोदाय, प्रायश्चित्तमिदं शृणु ॥१९९॥

अन्वयः- तत्रापि तीर्थहत्या एव यात्राविघ्नस्य कारणमस्ति। अतः तदपनोदाय इदं प्रायश्चित्तं शृणु ॥१९९॥

विवरणम्:- *तत्रापि तीर्थस्य हत्या तीर्थहत्या एव शत्रुञ्जययात्रायां विघ्नः यात्राविघ्नः तस्य यात्राविघ्नस्य शत्रुञ्जययात्राविघ्नस्य कारणमस्ति। अतः तस्य विघ्नस्य अपनोदः तदपनोदः तस्मै तदपनोदाय तन्निराकरणाय इदं प्रायश्चित्तं शृणु आकर्णय ॥१९९॥*

सरलार्थः- तत्रापि तासु हत्यासु अपि तीर्थहत्या एव तव शत्रुञ्जययात्राविघ्नस्य कारणमस्ति। अतः तस्य विघ्नस्य निराकरणाय इदं प्रायश्चित्तं शृणु ॥१९९॥

ગુજરાતી :- તેઓમાં પણ તને શત્રુંજયની યાત્રામાં આવી પડેલા વિઘ્નનું કારણ તો તીર્થહત્યા જ છે, તેથી તેને દૂર કરવા માટે આ પ્રકારે પ્રાયશ્ચિત સાંભળ ॥૧૯૯॥

हिन्दी :- "उसमें भी तुझे शत्रुंजय की यात्रा में आये विघ्न का मुख्य कारण तो तीर्थहत्या ही है। इसलिये उसे दूर करने के लिये यह प्रायश्चित्त सुन।"॥१९९॥

मराठी :- "त्यामध्ये सुद्धा तुला शत्रुंजय यात्रेमध्ये आलेल्या विघ्नांचे कारण म्हणजे "तीर्थहत्या" च आहे. म्हणून त्याला दूर करण्यासाठी हें प्रायश्चित्त ऐकून घे." ॥१९९॥

English :- So the monk says that the disastrous deed of demolishing a temple has bought clogs during his pilqrimage to Satrunjay .Then he asks the king to give a ear to the penences to be done, to wipe away these unwanted clogs.

**तपोऽभूद् वार्षिकं मूल-मादिदेवस्य वारके ॥**
**अष्टमास्यधुना भावि- वारे षाण्मासिकं ततः ॥२००॥**

अन्वयः- आदिदेवस्य वारके मूलं वार्षिकं तपः अभूत्। अधुना अष्टमासी वर्तते। ततः भाविवारे षाण्मासिकं भविष्यंति ॥२००॥

विवरणम्:- *आदिश्चासौ देवश्च आदिदेवः तस्य आदिदेवस्य आदिनाथस्य वारके मूलं तपः वर्षेभवं वार्षिकं अभूत्। अधुना अष्टानां मासानां समाहारः अष्टमासी। अथवा अष्टसु मासेसु भवं अष्टमासिकं वर्तते। भाविनि वारे तत् षटसु मासेषु भवं षाण्मासिकं भविष्यति ॥२००॥*

सरलार्थः- आदिदेवस्य वारके मूलं तपः वार्षिकभूत्। अधुना आष्टमासिकं वर्तते। भाविनि वारे षाण्मासिकं भविष्यति ॥२००॥

ગુજરાતી :- **તીર્થંકર શ્રી આદીશ્વર પ્રભુના વારામાં મૂળ બારમાસી તપ હતો, અત્યારે આઠમાસી તપ છે, અને ભાવિકાળમાં છ માસી તપ થશે ॥૨૦૦॥**

हिन्दी :- "तीर्थंकर श्री आदीश्वर प्रभु के समय में बारह मास का तप था, जो अभी आठ मास का तप है और भविष्य काल में ६ मास का तप हो जायेगा।"॥२००॥

मराठी :- "तीर्थंकर श्री आदीश्वर प्रभूच्या वेळी मुळांत बारा महिन्याचे तप होते. सध्या आठ महिन्याचे तप आहे, आणि भविष्यात सहा महिन्याचे तप होईल."॥२००॥

English :- He says that during the reign of Lord Aadishwar the time period of carrying out the penences were twelve months, now it is reduced to eight months and in future it shall be six months.

सर्वोत्कृष्टं तपः प्रायश्चित्तमेतदुदीरितं ॥
विशेषस्तु तीर्थहत्याकृतां तीर्थविधापनम् ॥२०१॥

अन्वयः:- सर्वोत्कृष्टं प्रायश्चित्तं एतत् तपः उदीरितम्। किन्तु तीर्थहत्याकृतां तीर्थविधापनं विशेषः ॥२०१॥

विवरणम्:- *सर्वेषु उत्कृष्टं सर्वोत्कृष्टं प्रायश्चित्तम् एतत् तपः उदीरितं कथितम्। किन्तु तीर्थस्य हत्या तीर्थहत्या। तीर्थहत्याम् कुर्वन्तीति तीर्थहत्याकृतः, तेषां तीर्थहत्याकृतां तीर्थहत्याकारिणां कृते तीर्थस्य विधापनं तीर्थविधापनं तीर्थनिर्मापणं विशेषः अस्ति॥२०१॥*

सरलार्थ:- सर्वोत्कृष्टं प्रायश्चितं एतत् तपः उदीरितम्। किन्तु तीर्थहत्याकारिणां कृते तीर्थनिर्मापणं विशेषः अस्ति ॥२०१॥

ગુજરાતી :- સર્વથી ઉત્કૃષ્ટ પ્રાયશ્ચિત્ત ઉપર જણાવેલ તપ કહ્યું છે, વિશેષ એટલું કે તીર્થહત્યા કરનારાઓએ તીર્થની સ્થાપના કરવી જોઈએ ॥૨૦૧॥

हिन्दी :- सब से उत्तम प्रायश्चित (ऊपर यह बताया हुआ) तप कहा गया है, विशेष इतना ही है कि, तीर्थहत्या करनेवाले को तीर्थ की स्थापना करनी चाहिये॥२०१॥

मराठी :- सगळ्यांत उत्तम प्रायश्चित्त म्हणजेच (वर दाखविलेले) तप सांगितले गेले आहे. फरक इतकाच की, तीर्थहत्या करणाऱ्याने तीर्थाची स्थापना केली पाहिजे.॥२०१॥

English :- It has been said that the most eminent way to atone for one's sins is to do severe religious austries and penence. But the only specific peculiarity one has to observe, is that he should establish a pilgrim spot, if he demolishes one.

**विशिष्टाभिग्रहा: प्रोक्तं, प्रायश्चित्तं चरन्ति ये ॥**
**शत्रुञ्जयादितीर्थेषु, ते मुच्यन्तेऽखिलैनसा ॥२०२॥**

अन्वय:- ये विशिष्टाभिग्रहा: शत्रुञ्जयादितीर्थेषु उक्तं प्रायश्चित्तं चरन्ति। ते अखिलैनसा मुच्यन्ते॥२०२॥

विवरणम्:- *ये विशिष्ट: अभिग्रह: येषांह ते विशिष्टभिग्रहा:, शत्रुञ्जय: आदौ येषां तानि शत्रुञ्जयादीनि। शत्रुञ्जयादीनिच तानि तीर्थानि च शत्रुञ्जयादितीर्थानि, तेषु शत्रुञ्जयादितीर्थेषु प्रोक्तं प्रायश्चित्तं चरन्ति आचरन्ति। ते अखिलं च तद् एन: च अखिलैन:, तेन अखिलैनसा सर्वपापेन मुच्यन्ते॥२०२॥*

सरलार्थ:- ये विशिष्टान् अभिग्रहान् गृहीत्वा श्रीशत्रुञ्जयादितीर्थेषु प्रोक्तं प्रायश्चित्तमनुतिष्ठन्ति। ते सर्वपापेन मुच्यन्ते॥२०२॥

ગુજરાતી :- જેઓ ઉપર કહેલું પ્રાયશ્ચિત્ત વિશિષ્ટ પ્રકારના અભિગ્રહો લઈ શત્રુંજયાદિ તીર્થોમાં જઈ આચરે છે, તેઓ સમગ્ર પાપથી મુક્ત થાય છે.॥૨૦૨॥

हिन्दी :- जो विशिष्ट प्रकार के अभिग्रह लेकर शत्रुंजय आदि तीर्थो में जाकर प्रायश्चित्त करते हैं वे सभी पापों से मुक्त हो जाते हैं॥२०२॥

मराठी :- जे विशिष्ट तऱ्हेचे अभिग्रह घेऊन शत्रुंजय आदि तीर्थामध्ये जाऊन प्रायश्चित्त करतात, ते सगळ्या पापातून मुक्त होतात.॥२०२॥

English :- The man who takes along with him sublime and exquisite types of religious things and sets off for any pilgrim spot, such as Satrunjay, etc, to perform severe penences, then he is bound to be free from the bondage of sins.

इति श्रुत्वा नृपो दुर्ग-प्रवेशनियमं ललौ ॥
आकार्य सर्वलोकं च, तत्रैवाऽतिष्ठिपत् पुरम् ॥२०३॥

अन्वयः:- इति श्रुत्वा नृपः दुर्गप्रवेशनियमं ललौ। सर्वलोकम् आकार्य तत्र एव पुरम् अतिष्ठिपत् ॥२०३॥

*विवरणम्:- इति श्रीयुगन्धरसूरेः उपदेशं श्रुत्वा नन् पातीति नृपः नाभाकराजः दुर्गे प्रवेशः दुर्गप्रवेशः। दुर्गप्रवेशस्य नियमः, तं दुर्गप्रवेशनियं ललौ जग्राह। सर्वश्चासौ लोकश्च सर्वलोकः तं सर्वलोकं आकार्य आहूय तत्र एव पुरं नगरं अतिष्ठिपत् अस्थापयत् ॥२०३॥*

सरलार्थः:- इति श्री युगन्धरसूरेः उपदेशं श्रुत्वा नाभाकनृपः दुर्गप्रवेशनियमं जग्राह। सर्वलोकम् आहूय तत्रैव नगरं अतिष्ठिपत् अस्थापयत् ॥२०३॥

ગુજરાતી :- આ પ્રમાણે શ્રીયુગંધરસૂરિનો ઉપદેશ સાંભળી તે જ વખતે નાભાકરાજાએ કિલ્લામાં પ્રવેશ કરવાનો નિયમ ગ્રહણ કર્યો, અને સર્વ પ્રજાવર્ગને બોલાવી ત્યાં જ નગર વસાવ્યું.॥૨૦૩॥

हिन्दी :- इस तरह से श्री युगन्धर सूरिजी महाराज का उपदेश सुनकर उसी समय नाभाक राजा ने किल्ले में प्रवेश करने का नियम ग्रहण किया और सभी प्रजावर्ग को वहीं बुलाकर नगर बसाया॥२०३॥

मराठी :- अशा प्रकारचा श्री युगन्धरसूरी महाराजांचा उपदेश ऐकून त्याच वेळी श्री नाभाकराजाने किल्ल्यातं प्रवेश करण्याचा नियम घेतला. आणि आपल्या सर्व प्रजेला तेथेच बोलावून नगर वसविले.॥२०३॥

English :- After having heard the incubation of the reverend priest Yugandhar, King Nabhak atonce took a religious observance of entering the fort in the presence of the priest. Then he called his subjects and established a kingdom there.

स्थापयित्वा गुरूंस्तत्र जग्राहाभिग्रहानिति ॥
यावद् यात्रां विधायाऽत्रायामि तावत् क्षितौ शये ॥२०४॥
अब्रह्म दधिदुग्धेच वर्जयामि क्रमादिदम् ॥
तीर्थ - ब्रह्माऽपत्यहत्याशुद्ध्यै मेऽभिग्रहत्रिकम् ॥२०५॥
परस्त्री मांस-मद्येच, यावज्जीवमतः परम् ॥
व्यक्तानि नियमा एते, स्त्री - गोहत्याविमुक्तये ॥२०६॥

अन्वयः- तत्र गुरून् स्थापयित्वा तीर्थ-ब्रह्मापत्यहत्यांशुद्ध्यै क्रमात् इति अभिग्रहान् जग्राह - ॥२०४॥

यावद् यात्रां विधाय अहमत्र आयामि तावत् क्षितौ शये, अब्रह्म वर्जयामि। दधिदुग्धे वर्जयामि। क्रमात् मे अभिग्रहत्रिकम् अस्ति ॥२०५॥

स्त्रीगोहत्याविमुक्तये अतः परं यावज्जीवं परस्त्रीमांसमद्ये च व्यक्तानि। एते मम नियमाः सन्ति। ॥२०६॥

विवरणम्:- *तत्र तस्मिन् नगरे गुरून श्रीयुगन्धरसूरीन् स्थापयित्वा सः तीर्थहत्याच ब्रह्महत्या च अपत्यहत्या च तीर्थब्रह्मापत्यहत्याः। तीर्थब्रह्मापत्यहत्यानां शुद्ध्यै क्रमात् इति वक्ष्यमाणान् अभिग्रहान् जग्राह ॥२०४॥*

*तीर्थहत्याशुद्धिकृते - यावत् अहं यात्रां विधाय अत्र आयामि आगच्छामि तावत् क्षितौ भूमौ शये स्वपिमि। न ब्रह्म अब्रह्म मैथुनं वर्जयामि। ब्रह्महत्याशुद्धिकृते दधि वर्जयामि त्यजामि। अपत्यहत्याशुद्धिहेतोः- दुग्धं वर्जयामि त्यजामि। क्रमात् मे मम इदं अभिग्रहाणाम् त्रिकम् अभिग्रहत्रिकमासीत् ॥२०५॥*

*स्त्री च गौश्च स्त्रीगावौ। स्त्रीगवोः हत्या स्त्रीगोहत्या। स्त्रीगोहत्यायाः विमुक्तिः स्त्री गोहत्याविमुक्तिः तस्यै स्त्रीगोहत्याविमुक्तये अतः परम् क्रमेण यावत् जीवामि तावत् यावज्जीवं परस्य स्त्री परस्त्री तां परस्त्रियं त्यजामि। (स्त्रीहत्याविमुक्तये इत्यर्थः)। गोहत्याविमुक्तये च यावज्जीवं मांसं च मद्यं च मांसमद्ये त्यजामि। एते मम नियमाः सन्ति। ॥२०६॥*

सरलार्थ:- स नाभाकः नगरे गुरून् स्थापयित्वा तीर्थहत्याब्रह्महत्या-बालहत्या निराकरणार्थं क्रमात् इमान् अभिग्रहान् जग्राह-॥२०४॥ तीर्थहत्यानिकरणार्थम् (१) यावत् अहम् यात्राम् कृत्वा अत्र आगच्छामि तावत् भूमौ स्वपिमि मैथुनम् च वर्जयामि। ब्रह्महत्यानिराकरणार्थम् (२) दधि वर्जयामि। बालहत्यानिराकरणार्थम् (३) दुग्धम् वर्जयामि। इति मे अभिग्रहत्रिकम् वर्तते ॥२०५॥ अहम् स्त्रीहत्याविमुक्त्यर्थम् अतः परम् यावत् जीवामि तावत् परस्त्रियम् वर्जयामि। गोहत्याविमुक्त्यर्थम् च मांसमद्ये त्यजामि। एते मम नियमाः सन्ति ॥२०६॥

ગુજરાતી :- ગુરુમહારાજને ત્યાં જ રાખી તેઓશ્રી પાસે નાભાક રાજાએ આ પ્રમાણે અભિગ્રહો (નિયમો) ગ્રહણ કર્યા : જ્યાં સુધીમાં હું શ્રીશત્રુંજય તીર્થની યાત્રા કરીને પાછો અહીં ન આવું ત્યાં સુધી પૃથ્વી પર જ શયન કરીશ. અને તીર્થયાત્રાની શુદ્ધિ માટે યાત્રા કરીને પાછો આવું ત્યાં સુધીમાં મૈથુનનો ત્યાગ કરું છું, બ્રાહ્મણ-હત્યાની શુદ્ધિ માટે દહીંનો ત્યાગ, સ્ત્રીહત્યા અને ગૌહત્યાની મુક્તિ માટે યાવજ્જીવં, પરસ્ત્રી, માંસ અને મદ્યનો ત્યાગ કરું છું. ॥૨૦૪॥ ॥૨૦૫॥ ॥૨૦૬॥

हिन्दी : गुरुमहाराज को वहीं रोक कर उनके पास से नाभाक राजाने इस तरह के नियम ग्रहण किये, "जब तक मैं श्रीशत्रुंजय तीर्थ की यात्रा कर के वापस लौटकर नहीं आता तब तक जमीन पर ही सोऊंगा, तीर्थहत्या की शुद्धि के लिये यात्रा कर के वापस आने तक मैथुन का त्याग करता हूँ। ब्राह्मणहत्या की शुद्धि के लिये दही का त्याग, बालहत्या की शुद्धि के लिये दूध का त्याग, स्त्रीहत्या और गोहत्या की शुद्धि के लिये आजीवन परस्त्री, मांस और मदिरा का त्याग करता हूँ ॥२०४॥ ॥२०५॥ ॥२०६॥

मराठी :- गुरुमहाराजांना तेथेच राहण्याचे सांगून, त्यांच्या कडून नाभाकराजाने या प्रमाणे अभिग्रह (नियम) घेतले. जोपर्यंत श्री शत्रुंजयतीर्थयात्रा करुन परत येत नाही तोपर्यंत जमिनीवर झोपेन, आणि तीर्थयात्रेच्या शुद्धीबद्दल जोपर्यंत यात्रा करून परत येत नाही तो पर्यंत मैथुनाचा त्याग करीन, आणि ब्राह्मण हत्येच्या शुद्धीसाठी दह्याचा त्याग, बालहत्येच्यां शुद्धीसाठी दुधाचा त्याग, तसेच स्त्रीहत्या व गौहत्येच्या शुद्धीसाठी आजीवन परस्त्री मांस आणि मदिरेचा त्याग करीन.॥२०४॥ ॥२०५॥ ॥२०६॥

English :- Having requested the monk to halt there, King Nabhak inhaled the following commandments. He would only sleep on the ground, till he returns, from the pilgrimage. He would maintain celibacy with his women, till he returns, in order wash away his sin, of demolishing a temple. He would forfiet his intake of curds till he returns, to wash himself away from his sin, of murdering a brahmin. He would forfiet milk, to wash away his sin of murdering a child and he would forfiet the intake of meat, alcohol, and also the lust for another man's wife, to clean himself, from the sin of murdering a woman and a cow.

नियोज्य स्वजनान्नव्य-प्रासादार्थे गुरोर्गिरा ॥
एकान्तरोपवासैः सोऽष्टमासीतप आददे ॥२०७॥

अन्वयः- गुरोः गिरा सः स्वजनान् नव्यप्रासादार्थे नियोज्य एकान्तरोपवासैः अष्टमासीतपः आददे॥२०७॥

*विवरणम्:-* *गुरोः श्रीयुगन्धरसूरेः गिरा वाचा वचनेन सः नाभाकः स्वस्य जनाः स्वजनाः तान् स्वजनान् नव्यश्चासौ प्रासादश्च नव्यप्रासादः। नव्यप्रासादस्य अर्थे नव्यप्रासादार्थे नव्यप्रासादं निर्मापयितुं नियोज्य एकमन्तरा उपवासाः एकान्तरोपवासाः तैः एकान्तरोपवासैः अष्टमासीतपः आददे जग्राह ॥२०७॥*

सरलार्थः- अनन्तर सः नाभाकः गुरोः वचनेन स्वजनान् नव्यप्रासादं निर्मापयितुं नियोज्य एकान्तरोपवासैः अष्टमासीतपः जग्राह ॥२०७॥

ગુજરાતી :- ત્યાર પછી ગુરુમહારાજના ઉપદેશથી નવીન દેરાસર બંધાવવા માટે પોતાના માણસોને આજ્ઞા કરી એકાંતરે ઉપવાસ કરવા પૂર્વક તેણે અષ્ટમાસી તપ શરુ કર્યું. ॥૨૦૭॥

हिन्दी :- बाद में गुरुमहाराज के उपदेश के अनुसार नया मंदिर निर्माण करने के लिये अपने आदमियों कों आज्ञा दी और अेकान्तर उपवास के द्वारा अष्टमासी तप शुरु किया।

मराठी :- नंतर गुरूंच्या आज्ञेप्रमाणे मंदिर (देऊळ) बांधण्यासाठी आपल्या माणसांना आज्ञा दिली आणि स्वतः एकान्तर उपवास करून अष्टमासी तपांची शुरुवात केली.

English :- Then according to the monition of the monk, King Nabhak ordered his men to lay the foundation of the new temple and began an alternate day fast for eight months.

सिद्धिं गतेऽथ प्रासादे - ऽष्टभिर्मासैः स काञ्चनाम् ॥
श्री आदिदेवप्रतिमां, स्थापयामास सोत्सवम् ॥२०८॥

अन्वयः:- अथ अष्टभिः मासैः प्रासादे सिद्धिं गते सः काञ्चनां श्री आदिदेवप्रतिमां सोत्सवं स्थापयामास ॥२०८॥

विवरणम्:- *अथ अनन्तरं अष्टभिः मासैः प्रासादे मन्दिरे सिद्धिं गते सः काञ्चनां सुवर्णमयीम् आदिश्चासौ देवश्च आदिदेवः। श्रिया युतः आदिदेवः श्री आदिदेवः। श्रीआदिदेवस्य प्रतिमां श्रीआदिदेवप्रतिमां श्रीआदिदेवमूर्तिं उत्सवेन सह यथा स्यात् तथा सोत्सवं तत्र प्रासादे स्थापयामास अस्थापयत् ॥२०८॥*

सरलार्थः:- अनन्तरम् अष्टभिः मासैः सिद्धिं गते प्रासादे सः नाभाकः सुवर्णमयीं श्री आदिदेवमूर्तिम् उत्सवेन सह स्थापयामास ॥२०८॥

ગુજરાતી :- આઠ મહિને દેરાસર પૂર્ણ થયું ત્યારે નાભાકરાજાએ તે દેરાસરમાં મોટા ઉત્સવપૂર્વક શ્રીઋષભદેવ પ્રભુની સુવર્ણમય પ્રતિમા પ્રતિષ્ઠિત કરાવી. ॥૨૦૮॥

हिन्दी :- आठ महिने में मंदिर का निर्माण कार्य पूर्ण हुआ तंब राजाने बडे उत्सव के साथ श्री ऋषभदेव की सोने की प्रतिमाकी स्थापना करवाई॥२०८॥

मराठी :- आठ महिन्यांत देऊळ बांधण्याचे काम पूर्ण झाले तेव्हा नाभाकराजाने त्या देवळात श्री ऋषभदेव प्रभूच्या सोन्याच्या प्रतिमेची मोठ्या थाटाने प्रतिष्ठापना केली.॥२०८॥

English :- After the completion of these eight months, the new temple was constructed. Then the King, with great pomp and style installed a golden statue of Lord Rishebdev.

तत्र त्रिकालं सर्वज्ञ - मर्चयन् विधिवन्नृपः॥
मासाष्टकेन सम्पूर्णी-चक्रे शेषतपोऽखिलम् ॥२०९॥

अन्वयः:- तत्र सर्वज्ञं त्रिकालं विधिवत् अर्चयन् नृपः अखिलं शेषतपः मासाष्टकेन सम्पूर्णीचक्रे ॥२०९॥

विवरणम्:- *तत्र स्वयं निर्मापिते प्रासादे सर्वं जानातीति सर्वज्ञः तं सर्वज्ञं त्रयाणां कालानां समाहारः त्रिकालं विधिना तुल्यं विधिवत् अर्चयन् पूजयन् नृपः अखिलं सर्वं शेषं च तत् तपश्च शेषतपः मासानामष्टकं मासाष्टकं तेन मासाष्टकेन न सम्पूर्णं असम्पूर्णम् असम्पूर्णं सम्पूर्णं चक्रे सम्पूर्णीचक्रे ॥२०९॥*

सरलार्थः:- तस्मिन् स्वयं निर्मिते मंदिरे त्रिकालं सर्वज्ञं भगवन्तआदिनाथं विधिवत् पूजयन् नृपः शेषं तपः अष्टभिः मासैः सम्पूर्णीचक्रे ॥२०९॥

ગુજરાતી :- પોતે બંધાવેલા નવીન દેરાસરમાં પ્રતિષ્ઠિત કરાવેલી શ્રીઋષભદેવ સર્વજ્ઞની પ્રતિમાની હમેશાં ત્રણ કાલ વિધિયુક્ત પૂજા કરતાં નાભાકરાજાએ આઠ મહિને બાકીનો તપ પૂરો કર્યો॥૨૦૯॥

हिन्दी :- स्वनिर्मित मंदिर में प्रतिष्ठित की हुई श्री ऋषभदेव सर्वज्ञ प्रभुकी प्रतिमा की हमेशा तीनों काल विधियुक्त पूजा करते हुऐ नाभाक राजाने आठमहिने में तप पूर्ण किया॥२०९॥

मराठी :- स्वतः नवीन बांधलेल्या त्या देवळांत प्रतिष्ठा केलेल्या श्री ऋषभदेव सर्वज्ञ प्रभूच्या प्रतिमेची नेहमी तिन्ही वेळा विधिपूर्वक पूजा करीत त्या नाभाक राजाने आठ महिन्यांत राहिलेली तपस्या पूर्ण केली.

English :- King Nabhak, who had build the temple in honour of the omniscient Lord Rishebdev, completed his penence of the alternate day fast and the religious puja of the Lord, three times a day, after a lapse of eight months.

**तीर्थहत्याविनिर्मुक्तः शुभेऽह्नि भरतेशवत्॥**
**श्री शत्रुञ्जययात्रार्थं, चचाल गुरुभिः सह ॥२१०॥**

अन्वयः:- तीर्थहत्याविनिर्मुक्तः सः शुभे अह्नि भरतेशवत् गुरुभिः सह श्रीशत्रुञ्जययात्रार्थं चचाल ॥२१०॥

विवरणम्:- *एवं नवप्रासादनिर्मापणेन अष्टमासीतपसा च तीर्थस्य हत्या तीर्थहत्या। तीर्थहत्यायाः विनिर्मुक्तः तीर्थहत्याविनिर्मुक्तः नृपः नाभाकः शुभे प्रशस्ते अह्नि दिने भरतस्य ईशः भरतेशः भरतेशेन तुल्यं भरतेशवत् भरतचक्रवर्ती इव गुरुभिः सह श्रीशत्रुञ्जयस्य यात्रा श्री शत्रुञ्जययात्रा। श्री शत्रुञ्जययात्रायै इदं श्री शत्रुञ्जययात्रार्थं चचाल अचालीत् ॥२१०॥*

सरलार्थः:- ततः तीर्थहत्याविनिर्मुक्तः नाभाकः नृपः शुभे दिवसे भरतचक्रवर्ती इव गुरुभिः सह श्रीशत्रुञ्जययात्रार्थं चचाल अचालीत् ॥२१०॥

ગુજરાતી :- આ પ્રમાણે અષ્ટમાસી તપ કરવાથી અને નવીન દેરાસર બંધાવવાથી તીર્થહત્યાના પાપથી મુક્ત થયેલ તે નાભાકરાજાએ શુભ દિવસે ચક્રવર્તી ભરતેશ્વર મહારાજાની પેઠે શ્રીશત્રુંજય તીર્થની યાત્રા નિમિત્તે ગુરુમહારાજ સાથે ત્યાંથી પ્રયાણ કર્યું. ॥૨૧૦॥

हिन्दी :- अष्टमासी तप करके और मंदिर निर्माण कराने से तीर्थ घात के पाप से वह मुक्त हुआ। उस नाभाकराजाने एक शुभ दिन चक्रवर्ती भरत महाराजाकी तरह श्री शत्रुंजय तीर्थ की यात्रा के लिये गुरुमहाराज के साथ प्रयाण किया॥२१०॥

मराठी :- अष्टमासी तप व देऊळ बांधल्याने तीर्थघाताच्या पापापासून मुक्त झालेल्या त्या नाभाक राजाने एका शुभ दिवशी चक्रवर्ती भरत महाराजा सारखे गुरूमहाराजासह श्री शत्रुंजय तीर्थयात्रेसाठी प्रयाण केले.॥२१०॥

English :- After King Nabhak had completed his penence and constructing a temple in eight months, he was emancipated from the sin of demolishing a temple. Then King Nabhak on one auspicious day, like the great universal monarch King Bharat, departed for the pilgrimage of mount Satrunjay, along with the reverend priest.

चतुर्थाऽऽद्यप्रयाणेषु, मार्जारीषु पदोपरि।
समुत्तीर्णासु तद्धेतुं, पृष्टाः श्री गुरवोऽवदन् ॥२११॥

अन्वयः:- आद्यप्रयाणेषु मार्जारीषु चतुर्धा पदोपरि समुत्तीर्णासु तद्धेतुं पृष्टाः गुरवः अवदन् ॥२११॥

*विवरणम्:- आदौ भवानि आद्यानि। आद्यानि च तानि प्रयाणानि च आद्यप्रयाणानि तेषु आद्यप्रयाणेषु मार्जारीषु चतुर्धा पदयोः उपरि पदोपरि समुत्तीर्णासु सतीषु तस्य हेतुः तद्हेतुः तं तद्धेतुं तत्कारणं पृष्टाः श्रिया युक्ताः गुरवः श्रीगुरवः अवदन् अभाषन्त ॥२११॥*

सरलार्थः:- आद्यप्रयाणेषु एव मार्जार्यः चतुर्धा नृपस्य चरणयोः उपरि समुदतरन्। तदा सः गुरुं तत्कारणमपृच्छत्। अतः गुरवः तमवदन् ॥२११॥

ગુજરાતી :- શ્રી શત્રુંજયની યાત્રા માંટે નાભાકરાજા પ્રયાણ કરતો હતો તેવામાં શરુઆતમાં ચાર બિલાડી તેના પગ આગળ થઈને ચાલી ગઈ. રાજાએ ગુરુમહારાજને તેનું કારણ પૂછ્યું, ત્યારે ગુરુમહારાજે કહ્યું કે, ॥૨૧૧॥

हिन्दी :- यात्रा के लिये प्रस्थान करते समय ही चार बिल्लीयाँ उस के पैरों के पास से आडी चली गयी। तब राजाने गुरुमहाराज को उस का कारण पूछा और गुरुमहाराज ने बताया कि,॥२११॥

मराठी :- श्री शत्रुंजय तीर्थयात्रेसाठी नाभाक राजाने जसे प्रयाण केले तोच चार मांजरी त्यांच्या पायाजवळून आडव्या गेल्या. राजाने गुरूंना कारण विचारले तेव्हा गुरुमहाराज म्हणाले की,॥२११॥

English :- As they were departing for their pilgrimage, four cats crossed the King's path. Feeling perplexed, King Nabhak, asked the reverend priest the of this untoward incident.

बालादिहत्याः स्वं भावं, पुण्यप्रत्यूहहेतवे ॥
दर्शयन्ति परं सिद्धि - र्ध्रुवं स्यादेकचेतसः ॥२१२॥

अन्वयः:- बालादिहत्याः पुण्यप्रत्यूहहेतवे स्वं भावं दर्शयन्ति। परं एकचेतसः ध्रुवं सिद्धिः स्यात् ॥२१२॥

विवरणम्:- *बालः आदौ येषां ते बालादयः। बालादीनां हत्या बालादिहत्याः पुण्ये प्रत्यूहः विघ्नः पुण्यप्रत्यूहः। पुण्यप्रत्यूहस्य हेतवे पुण्यप्रत्यूहहेतवे सुकृतकर्मणि विघ्नान् उत्पादयितुं स्वं भावं दर्शयन्ति। परम् एकं दृढं चेतः यस्य सः दृढचेताः, तस्य एकचेतसः पुण्ये कर्मणि दृढमनसः नरस्य ध्रुवं निश्चितं सिद्धिः स्यात्। अतः दृढमनसा वर्तितव्यं ॥२१२॥*

सरलार्थः:- बालादिहत्याः पुण्यकर्मणि विघ्नान् उत्पादयितुं स्वं भावं दर्शयन्ति। परं पुण्यकर्मणि दृढमनाः नरः अवश्यं सिद्धिं प्राप्नोति ॥२१२॥

ગુજરાતી :- "હે રાજન્! તેં જે પૂર્વે ભાનુના ભવમાં બાલહત્યાદિ હત્યાઓ કરી હતી તે પાપો પુણ્યકાર્યમાં વિઘ્ન કરવા માટે પોતાનો ભાગ ભજવે છે, પણ પુણ્યકાર્યમાં પ્રવૃત્ત થયેલ દૃઢ ચિત્તવાળો ખરેખર પોતાના કાર્યમાં ફત્તેહ મેળવે છે"॥૨૧૨॥

हिन्दी :- "हे राजन्! पूर्वजनम में तूने की हुई हत्याओं के पाप इस पुण्यकार्य में बाधा डालने के लिये अपना काम कर रही हैं, फिर भी पुण्य कार्य में दृढ निश्चयी मानव सचमुच अपने कार्य में विजय प्राप्त करता है।"

मराठी :- "हे राजन्। पूर्वजन्मी तू केलेल्या हत्येचे पाप या पुण्यकार्यात अडचणी टाकण्याचे आपले काम करीत आहे, तरी पुण्यकार्यात प्रवृत्त झालेल्या दृढ मनाच्या माणसालाच आपल्या कार्यात सिद्धि मिळते.

English :- At this the rev. priest replied that his sins of his past life, that has accured by murdering, are bringing clogs in his actions. But if one has tenacious and emphatic decisions of doing meritorious deeds, is bound to appease the Goddess of success.

मत्वैवमेकचित्तः स-न्नादिदेवस्मृतौ नृपः ॥
उपशत्रुञ्जयं प्रापा-ऽनवच्छिन्नप्रयाणकैः ॥२१३॥

अन्वयः:- एवं मत्वा नृपः आदिदेवस्मृतौ एकचित्तः सन् अनवच्छिन्नप्रयाणकैः उपशत्रुञ्जयं प्राप ॥२१३॥

विवरणम्:- *एवं गुरोर्वचनं मत्वा नृपः नाभाकः आदिश्चासौ देवश्च आदिदेवः। आदिदेवस्य स्मृतिः आदिदेवस्मृतिः, तस्याम् आदिदेवस्मृतौ भगवतः श्रीऋषभदेवस्य ध्याने एकं चित्तं यस्य सः एकचित्तः एकाग्रमनाः सन् न अवच्छिन्नानि अनवच्छिन्नानि अखण्डानि। अनवच्छिनानि च तानि प्रयाणकानि च अनवच्छिन्नप्रयाणकानि, तैः अनवच्छिन्नप्रयाणकैः अखण्डितप्रयाणैः शत्रुञ्जयस्य समीपे उपशत्रुञ्जयं प्राप आजगाम ॥२१३॥*

सरलार्थः:- एवं गुरोर्वचनं मत्वा नृपः श्रीऋषभदेवस्य ध्याने एकचित्तः सन् अखण्डप्रयाणैः शत्रुञ्जयसमीपं प्राप आजगाम ॥२१३॥

ગુજરાતી :- આ પ્રમાણે ગુરુ મહારાજાનું વચન હૃદયમાં ધરીને શ્રીમાન્ આદીશ્વર પ્રભુના ધ્યાનમાં એકાગ્ર મનવાળો નાભાક રાજા અસ્ખલિત પ્રયાણથી શ્રી શત્રુંજય પર્વત પાસે પહોંચ્યો. ॥૨૧૩॥

हिन्दी :- इस तरह गुरु महाराज का वचन हृदय में धारण कर श्रीमान आदीश्वर प्रभु के ध्यान में एकाग्र मन से लीन होकर वह नाभाकराजा निरन्तर प्रयाण कर के शत्रुंजय पर्वत के पास आ पहुंचा॥२१३॥

मराठी :- ह्याप्रमाणे गुरुमहाराजांचे वचन हृदयात ठेवून, श्रीमान आदीश्वर प्रभूंच्या ध्यानामध्ये तल्लीन होऊन तो नाभाकराजा अस्खलित प्रयाणानें शत्रुंजय पर्वताजवळ येऊन पोहोंचला.॥२१३॥

English :- Having retained the religious aphorisms of the rev priest in his heart, King Nabhak began his earnest feelings of meditation on Lord Aadishwar and then set off for the mount without wasting any more time. He reached the mount in due-course.

दृग्विषयं तीर्थे प्राप्ते, निजसैन्यं निवेश्य सः ॥
शुचिर्भूत्वाऽभितीर्थं च, पदानि कतिचिद्ददौ ॥२१४॥
सिंहासनेऽथ न्यस्यार्हद्बिम्बं सकलसङ्घयुक् ॥
स्नपयित्वा ततः सर्वपूजाभेदैरपूजयत् ॥२१५॥

अन्वयः- तीर्थे दृग्विषयं प्राप्ते सति सः निजसैन्यं निवेश्य शुचिः भूत्वा अभितीर्थं कतिचित् पदानि ददौ ॥२१४॥

अथ सकलसङ्घयुक् सः सिंहासने अर्हद्बिम्बं न्यस्य ततः स्नपयित्वा सर्वपूजाभेदैः अपूजयत् ॥२१५॥

विवरणम्:- *तीर्थे शत्रुञ्जयतीर्थे दृशोः विषयः दृग्विषयः तं दृग्विषयं प्राप्ते सति दृष्टिगोचरे सति सः नाभाकनृपः निजं च तत् सैन्यं च निजसैन्यं तत्रैव निवेश्य संस्थाप्य शुचिः पवित्रः भूत्वा तीर्थमभि अभितीर्थं तीर्थसम्मुखं कतिचित् कानिचित् पदानि ददौ। तीर्थसम्मुखं कानिचित् पदानि अचालीत् ॥२१४॥*

*अथ अनन्तरं सकलश्चासौ सङ्घश्च सकलसङ्घः। सकलसङ्घेन युज्यतेऽसौ सकलसङ्घयुक् साधु-साध्वी-श्रावक-श्राविकाचतुर्विधसङ्घेन सह सिंहासने अर्हतः बिम्बं अर्हद्बिम्बं न्यस्य स्थापयित्वा ततः स्नपयित्वा स्नात्रं विधाय पूजायाः भेदाः पूजाभेदाः। सर्वे च ते पूजाभेदाश्च सर्वपूजाभेदाः तैः सर्वपूजाभेदैः सर्वपूजाप्रकारैः अपूजयत् ॥२१५॥*

सरलार्थः- शत्रुञ्जयतीर्थे दृष्टिगोचरमागते सति सः नृपः तत्रैव स्वसैन्यं संस्थाप्य शुचिः भूत्वा तीर्थसम्मुखं कतिचित् पदानि अचालीत् ॥२१४॥

अनन्तरं सकलसङ्घेन सह सिंहासने अर्हद्बिम्बं संस्थाप्य स्नात्रं विधाय नृपः सर्वपूजाप्रकारैः अपूजयत् ॥२१५॥

ગુજરાતી :- શ્રી શત્રુંજયતીર્થ દષ્ટિએ પડ્યું કે તુર્ત પોતાના સૈન્યને ત્યાંજ સ્થાપન કરી, શરીરે પવિત્ર થઈ, તીર્થ સન્મુખ કેટલાએક ડગલા આગળ જઈ, ॥૨૧૪॥ સર્વ સંઘ સહિત સિંહાસન પર અરિહન્ત પ્રભુની પ્રતિમા પધરાવીને તે પ્રતિમાની પરવાળ પૂજા કરી અને પછી સર્વ સામગ્રી વડે વિધિપૂર્વકની પૂજા કરી॥૨૧૫॥

हिन्दी :- श्री शत्रुंजय तीर्थ दृष्टिगोचर होने पर तुरन्त ही अपने सैन्य को वहीं रुका कर, शरीर से पवित्र होकर तीर्थ के सामने कुछ कदम आगे जाकर, सर्व संघ सहित, अरिहंत प्रभु की प्रतिमा बैठाकर उस का प्रक्षालन कर के, सभी सामग्रियोंसे विधिपूर्वक पूजा की॥२१५॥

मराठी :- श्री शत्रुंजय तीर्थ दृष्टीस पडल्यावर लगेच आपल्या सैन्याला तेथेंच थांबवून, शरीराने शुद्ध होऊन, तीर्थांच्या समोर काही पाऊल पुढे जाऊन, सगळ्या संघासोबत अरिहंत प्रभूची प्रतिमा बसवून, तिचे प्रक्षालन करून नंतर पूजेच्या समग्र सामग्रींनी विधिपूर्वक पूजा केली.॥२१५॥

English :- When the mount of Satrunjay was discernible, he atonce left his army behind, cleansed himself bodily and walking a little ahead towards the mount, installed a statue of Lord Aarihant in the presence of the association (Sangh). He then performed the religious rites (puja) in honour of Lord Aarihant in a ceremonial ordinance..

**स्वर्णरूप्ययवै रत्नस्थालेऽथो मङ्गलाष्टकम् ॥**
**आलिख्याऽष्टोत्तरशतवृत्तैः सानन्दमस्तवीत्॥२१६॥**

अन्वयः- अथो रत्नस्थाले स्वर्णरूप्ययवैः मङ्गलाष्टकम् आलिख्य अष्टोत्तरशतवृत्तैः सानन्दम् अस्तवीत् ॥२१६॥

विवरणम्:- *अथो अनन्तरं रत्नानां स्थालः रत्नस्थालः तस्मिन् रत्नस्थाले स्वर्णस्य रूप्यस्य च यवाः स्वर्णरूप्ययवाः, तैः स्वर्णरूप्ययवैः मङ्गलानामष्टक मङ्गलाष्टकम् आलिख्य विरचय्य अष्टौ उत्तराणि यस्य तद् अष्टोत्तरम्। अष्टोत्तरम् च तत् शतं च अष्टोत्तरशतम्। अष्टोत्तरशतं वृत्तानि छन्दांसि अष्टोत्तरशतवृत्तानि, तैः अष्टोत्तरशतवृत्तैः अष्टोत्तरशतछन्दोभिः (श्लोकैः) आनन्देन सह यथा स्यात् तथा सानन्दम् अस्तवीत् अस्तौत् ॥२१६॥*

सरलार्थः- अनन्तरं रत्नस्थाले सुवर्णस्य रौप्यस्य च यवैः अष्टौ मङ्गलानि विरचय्य अष्टोत्तरशतश्लोकैः अस्तौषीत् ॥२१६॥

ગુજરાતી :- ત્યાર બાદ રત્નના થાળમાં સુવર્ણ અને રૂપાના જવોથી આઠ મંગલ આલેખીને, હૃદયના ઉલ્લાસથી એકસો આઠ શ્લોકો વડે ભાવપૂર્વક પ્રભુની સ્તુતિ કરી.॥૨૧૬॥

हिन्दी :- बाद में रत्नों की थाली में, सोने और चांदी के जवों से आठ मंगल की रचना की और प्रसन्न हृदय से, उमंग के साथ एकसोआठ (१०८) श्लोकों से भावपूर्वक प्रभुकी स्तुति की॥२१६॥

मराठी :- नंतर रत्नांच्या ताटात सोने व चांदीच्या जवांनी आठ मंगल रचून हृदयाच्या हर्षाने एकशेआठ (१०८) श्लोकांनी भावपूर्वक प्रभूची स्तुती केली.॥२१६॥

English :- Then a plate studded with diamonds that was filled with gold and silver coins were presented to the lord. The King then textured the eight auspicious objects *(Mangals)* and sang the hundred and eight psalms of praise of the sanskrit couplet.

Note - The eight Mangals (Auspicious objects)

1) Fylfot (Swastika)

2) The seat on which a king is consecrated. (Badrasan)

3) A pair of fishes. (Matseiayugal)

4) Gahunli (Symbol)

5) A Mirror (Darpaan)

6) An earthern pot (Kumbhe)

7) Shri Vardhaman (symbol)

8) Shri Vatsa (symbol)










शंक्रस्तवेन वन्दित्वा, सिद्धाद्रिं चाऽथ सद्गुरून् ॥
नत्वा स्वर्णमणिरत्न - मुक्ताभिस्तानवीवृधत् ॥२१७॥

अन्वयः- शक्रस्तवेन सिद्धाद्रिं वन्दित्वा अथ सद्गुरून् नत्वा स्वर्णमणिरत्नमुक्ताभिः तान्ः अवीवधत् ॥२१७॥

विवरणम्:- *अथ अनन्तरं नमोत्थुणं शक्रस्य स्तवः शक्रस्तवः, तेन शक्रस्तवेन सिद्धाद्रिं श्रीशत्रुञ्जयगिरिं वन्दित्वा, सद्गुरून् नत्वा स्वर्णं च मणयश्च रत्नानि च मुक्ताश्च स्वर्णमणिरत्नमुक्ताः ताभिः स्वर्णमणिरत्नमुक्ताभिः तान् अवीवृधत् अवर्धापयत् ॥२१७॥*

सरलार्थ:- अनन्तरं नमोत्थुणं शक्रस्तवेन श्री शत्रुञ्जयगिरिं वन्दित्वा, सद्गुरून्, नत्वा च सः तान् स्वर्णमणिरत्नमुक्ताभिः अवीवृधत् ॥२१७॥

ગુજરાતી :- ત્યાર બાદ નમુત્થુણં વડે સિદ્ધાચલને વાંદી, ગુરુમહારાજને નમન કરી તેઓને સુવર્ણ, મણિ, રત્ન અને મોતી વડે વધાવ્યા ॥૨૧૭॥

हिन्दी :- बादमें शक्रस्तव द्वारा सिद्धाचल की वंदना की और गुरुमहाराज को नमन करके उन को सोना, मणि, रत्न और मोतीयों से बधाया॥२१७॥

मराठी :- नंतर शक्रस्तवांने सिद्धाचलाला नमस्कार करून व गुरूंना नमस्कार करून त्याने सोने, मणि, रत्न आणि मोत्यांनी ओवाळणी केली.॥२१७॥

English :- Then along with monk, he bowed down in veneration towards the mount of Satrunjay (Siddhachal) and repeated the prayer, "Namotthunam".

Then bowing in deep devotion towards the monk, the king then circulated a plate filled with gold silver and precious stones, before the monk, to show his deep awed respect and solemn regard and welcomed the monk gladly.

**दत्त्वा यथेच्छमर्थिभ्यो, दानं मिष्टान्नभोजनैः ॥**
**अतूतुषत् सर्वलोकान्, धार्मिकांश्च विशेषतः ॥२१८॥**

अन्वयः:- अर्थिभ्यः मिष्टान्नभोजनैः यथेच्छं दानं दत्त्वा सर्वलोकान् विशेषतः धार्मिकान् अतूतुषत् ॥२१८॥

विवरणम्:- *अर्थिभ्यः याचकेभ्यः मिष्टानि च तानि अन्नानि च मिष्टान्नानि। मिष्टान्नानां भोजनानि मिष्टान्नभोजनानि, तैः मिष्टान्नभोजनैः सह इच्छाम् अनतिक्रम्य यथेच्छं दानं दत्त्वा सर्वे च ते लोकाश्च सर्वलोकाः, तान् सर्वलोकान् विशेषतः धर्मं चरन्तीति धार्मिकाः तान् धार्मिकान् जनान् अतूतुषत् अतोषयत् ॥२१८॥*

सरलार्थः:- अनन्तरं याचकेभ्यः मिष्टान्नभोजनैः सह यथेच्छं दानं दत्त्वा सर्वलोकान् विशेषतः धार्मिकान् जनान् अतोषयत् ॥२१८॥

ગુજરાતી :- યાચક જનોને ઇચ્છિત દાન આપ્યું, તેમજ મિષ્ટાન્ન ભોજન વડે સર્વ લોકોને સંતુષ્ટ કર્યા, તેમાં પણ ધાર્મિક પુરુષોની તો વિશેષ પ્રકારે આદર સત્કારપૂર્વક ભક્તિ કરી તેઓને સંતોષ ઉપજાવ્યો॥૨૧૮॥

हिन्दी :- याचकों को इच्छित दान देकर, सभी लोगो को मिष्टान्न भोजन कराकर और धार्मिक पुरुषोंको विशेष आदर सत्कारपूर्वक भक्ति करके संतुष्ट किया॥२१८॥

मराठी :- त्याने याचकांना इच्छित दान देऊन, सगळ्या लोकांना मिष्टान्न भोजन वाढून, आणि धार्मिक पुरुषांना विशेष आदर सत्कार व भक्तीने संतुष्ट केले.॥२१८॥

English :- Then he gave the desired alms to the mendicants, fed all around with delicious food and sweetmeats, felicitated the religious men with utmost importance and respect. He thus as a sufficer, sufficed one and all.

**ततोतिक्रान्तशेषाऽध्वा, पुरस्कृत्य गुरुं नृपः ॥**
**रेजे चटन् गिरिं मुक्त्यै, प्रस्थानं साधयन्निव ॥२१९॥**

अन्वयः:- ततः अतिक्रान्तशेषाध्वा नृपः गुरुं पुरस्कृत्य मुक्त्यै प्रस्थानं साधयन् इव गिरिं चटन् रेजे ॥२१९॥

*विवरणम्:-* *ततः तदनन्तरं शेषश्चासौ अध्वा च शेषाध्वा। अतिक्रान्तः शेषाध्वा येन सः अतिक्रान्तशेषाध्वा। शेषमार्गमतिक्रान्तः नृपः गुरुं पुरस्कृत्य पुरतः कृत्वा मुक्त्यै मोक्षाय प्रस्थानं साधयन् इव गिरिं श्रीशत्रुञ्जयगिरिं चटन् आरोहन्रेजे शुशुभे ॥२१९॥*

सरलार्थ:- तदनन्तरम् अवशिष्टं मार्गमतिक्रान्तः नृपः नाभाकः गुरुं पुरस्कृत्य मुक्त्यै प्रस्थानं साधयन् इव शत्रुञ्जयगिरिम् आरोहन् शुशुभे ॥२१९॥

ગુજરાતી :- ત્યાર પછી બાકીનો માર્ગ પાર કરી, ગુરુમહારાજને આગળ કરી જાણે મુક્તિને માટે પ્રસ્થાન કરવું હોય તેવી રીતે શત્રુંજય ઉપર ચડતો રાજા શોભવા લાગ્યો.॥૨૧૯॥

हिन्दी :- फिर शेष मार्ग चलकर, महाराज को आगे कर, शत्रुंजय पर्वत पर चढ़ता हुआ वह राजा ऐसे शोभायमान हो रहा था जैसे मुक्ति के लिये प्रस्थान कर रहा हो॥२१९॥

मराठी :- नंतर उरलेला रस्ता पार करून, गुरुमहाराजांना पुढे करून, शत्रुंजय पर्वतावर चढतांना तो राजा असा शोभू लागला की जसे मुक्तीसाठी प्रस्थान करीत आहे.

English :- Then when they had reached close to their destination, the King requesting the monk to walk ahead of all, now began climbing the mount. He now shone with such radiance and magnificance, as he walked up, which seemed as though he is about to walk into the final Salvation.

**प्रासाददर्शने पूर्व-मपूर्वोत्सवपूर्वकम् ॥**
**याचकेभ्यो ददद्दानं, कल्पवृक्षायते स्म सः ॥२२०॥**

अन्वयः- पूर्वं प्रासाददर्शने अपूर्वोत्सवपूर्वकं याचकेभ्यः दानं ददत् सः कल्पवृक्षायते स्म ॥२२०॥

विवरणम्:- श्री शत्रुञ्जयगिरिं आरोहन् सः पूर्वं प्रथमं प्रासादस्य जिनमंन्दिरस्य दर्शने प्रासाददर्शने प्रथममेव प्रासादे दृष्टे अपूर्वश्चासौ उत्सवश्च अपूर्वोत्सवः, अपूर्वोत्सवः पूर्वः यस्मिन् कर्मणि यथा स्यात् तथा अपूर्वोत्सवपूर्वकम् अपूर्वोत्साहेन इत्यर्थः याचकेभ्यः अर्थिभ्यः दानं ददद् यच्छन् सः कल्पवृक्षः इव आचरति कल्पवृक्षायते स्म ॥२२०॥

सरलार्थ:- श्रीशत्रुञ्जयगिरिं आरोहन् सः यदा प्रथममेव प्रासादम् अपश्यत् तदा अपूर्वोत्सवपूर्वकं याचकेभ्यः दानमददात्। तदानीं सः कल्पवृक्षः इव आचरति कल्पवृक्षायते स्म ॥२२०॥

ગુજરાતી :- મહા પવિત્ર તીર્થ શ્રીશત્રુંજય ઉપર ચડતાં પ્રથમ શ્રી આદીશ્વર પ્રભુના દેરાસરનું દર્શન થતાં જ અપૂર્વ ઉત્સવપૂર્વક યાચકોને દાન આપતો તે નાભાક રાજા સાક્ષાત્ કલ્પવૃક્ષ સમાન દેખાવા લાગ્યો.॥૨૨૦॥

हिन्दी :- पवित्र शत्रुंजय तीर्थपर चढते हुए प्रभु के मंदिर का प्रथम दर्शन होते ही अपूर्व उत्सवपूर्वक याचकों को दान देते हुए वह नाभाकराजा साक्षात् कल्पवृक्ष के समान दिखने लगा॥२२०॥

मराठी :- पवित्र शत्रुंजय तीर्थावर चढत असता, प्रभूच्या देवळाचे प्रथम दर्शन होताच त्यानें अपूर्व उत्साहानें लोकांना दान दिले तेव्हां तो राजा कल्पवृक्षांसारखा शोभायमान दिसत होता.॥२२०॥

English :- As he climbed the mount, he first happened to see a temple, built in honour of the Lord Addishwar. He then had a grand fete and rejoicing which reveall ed an unique stupendousness. He then showered a rain of alms upon the medicants, which made him seem and shine like the *"Kalpavrush"*.

Note - *Kalpavrush* is a tree from Indra's paradise which yields anything desired.

स्नात्रपूजाध्वजारोपाऽ मारिस्नाना-शनादिकम्॥
सर्वं सङ्घपतेर्धर्मकर्माऽष्टाहमपि व्यधात् ॥२२१॥

अन्वयः-स नृपः अष्टाहमपि स्नात्रपूजाध्वजारोपाऽमारिस्नानाशनादिकं सर्वं सङ्घपतेः धर्मकर्म व्यधात् ॥२२१॥

*विवरणम्:- सः नृपः अष्टानामह्नां समाहारः अष्टाहम् अपि अष्टौ दिनानि स्नात्रपूजा च ध्वजस्यारोपः ध्वजारोपश्चाऽमारिपटहश्च स्नानं च अशनं (स्वामिवात्सल्यं) च आदौ यस्य तत् स्नात्रपूजाध्वजारोपाऽमारिस्नानाऽशनादिकं सर्वं सङ्घस्य पतिः सङ्घपतिः तस्य सङ्घपतेः सङ्घाधिपस्य धर्मस्य कर्म धर्म कर्म व्यधात् अकरोत्। अष्टाह्निकामहोत्सवं कृत्वा अष्टौ दिनानि यावत् सः स्नात्रपूजादिकं सर्वं सङ्घपतेः धर्मकर्म व्यदधात् ॥२२१॥*

सरलार्थः- सः नृपः अष्टाह्निकामहोत्सवं कृत्वा अष्टौ दिनानि स्नात्रपूजा - ध्वजारोपः अमारिपटहः स्नानं स्वामिवात्सल्यं च इत्येवमादिकं सर्वं संघपतेः धर्मकर्म, व्यधात् ॥२२१॥

ગુજરાતી :- તે નાભાક રાજાએ અઠ્ઠાઈ મહોત્સવ કરી, આઠે દિવસે સ્નાત્રપૂજા, ધ્વજારોપણ, અમારિપડહ, સ્નાન, સ્વામિવાત્સલ્ય વિગેરે સંઘપતિનાં ધર્મ કાર્યો કર્યાં. ॥૨૨૧॥

हिन्दी :- उस नाभाक राजाने अट्ठाई महोत्सव कर के, आठों ही दिन स्नात्रपूजा, ध्वजारोपण, अमारिपडह, स्नान, स्वामीवात्सल्य इत्यादि संघपतिके सभी धार्मिक कार्य किये ॥२२१॥

मराठी :- त्या नाभाक राजाने अठ्ठाइ महोत्सवाची योजना करून आठ ही दिवस स्नात्रपूजा, ध्वजारोपण, अमारिपडह, स्नान, स्वामीवात्सल्य इत्यादि संघपतीचे योग्य धार्मिक कार्य केले.॥२२१॥

English :- King Nabhak had a grand eight day ceremony, in which he performed the *Snatra puja*, hoisted the sacred flag, strongly praticed non-violence, bathed and cleansed himself, fed the multitude and performed all the duties as required by a chief of an association (*sangh*)

तीर्थसेवा चिकीर्भूमानापृच्छ्याऽथ विधिं गुरुम् ॥
धर्मध्यानैकलीनात्मा त्रिकालं पूजयन् जिनम् ॥२२२॥
अहोरात्रं पवित्राङ्गो महामन्त्रमसौ स्मरन् ॥
साधून् साधर्मिकांश्चापि प्रतिपारणकं स्वयम् ॥२२३॥
सत्कारयन् यथायोग्यं भक्तपानैर्यथोचितैः ॥
मासेन दश षष्ठानि निरम्भांसि वितेनिवान् ॥२२४॥

अन्वयः- अथ तीर्थसेवाचिकीः भूमान् गुरून् विधिम् आपृच्छ्य धर्मध्यानैकलीनात्मा त्रिकालं जिनं पूजयन् ॥२२२॥

पवित्राङ्गः असौ आहोरात्रं महामन्त्रं स्मरन् प्रतिपारणकं स्वयं साधून् साधर्मिकान् च अपि ॥२२३॥

यथायोग्यं यथोचितैः भक्तपानैः सत्कारयन् मासेन दश षष्ठानि निरम्भांसि वितेनिवान् ॥२२४॥

विवरणम्:- *अथ अनन्तरं तीर्थस्य सेवा तीर्थसेवा। तीर्थसेवां चिकीर्षति इति तीर्थसेवाचिकीः तीर्थसेवां कर्तुमिच्छुः, भूः अस्यास्तीति भूमान् नृपः गुरून् विधिम् आपृच्छ्य धर्मस्य ध्यानम् धर्मध्यानम्। धर्मध्याने एव लीनः आत्मा मनः यस्य सः धर्मध्यानैकलीनात्मा धर्मध्याने एव लीनमनाः त्रयाणां कालानां समाहारः त्रिकालं त्रिसन्ध्यं जिनं जिनेश्वरं पूजयन् ॥२२२॥*

*पवित्राणि शुद्धानि अङ्गानि यस्य सः पवित्राङ्गः शुद्धाङ्गः असौ नाभाकः अहश्च रात्रिश्च एतयोः समाहारः अहोरात्रं रात्रिन्दिवं महान् चासौ मन्त्रश्च महामन्त्रः तं महामन्त्रं परमेष्ठिमहामन्त्रं स्मरन् सन् पारणे पारणे प्रतिपारणकं स्वयं साधून् समानः धर्मः येषां ते साधर्मिकाः तान् साधर्मिकान् अपि ॥२२३॥ ॥२२४॥*

*योग्यमनतिक्रम्य यथायोग्यं यथोचितैः भक्तानि च पानानि च भक्तपानानि तैः भक्तपानैः विविधान्नपेयैः सत्कारयन् सम्मानयन् मासेन दश षष्ठानि निर्गतमम्भः जलं येभ्यस्तानि निरम्भांसि निर्जलानि वितेनिवान् चक्रे.॥२२३॥ ॥२२४॥*

ગુજરાતી :- તીર્થસેવા કરવાની ઇચ્છા રાખનાર નાભાક નૃપે ગુરુ મહારાજને વિધિ પૂછી, ધર્મધ્યાનમાં લીન આત્માવાળો થઇ,

ત્રણે કાળ અરિહંત પ્રભુની પૂજા કરતાં, રાતદિવસ પરમેષ્ઠિ મહામંત્રનું સ્મરણ કરતાં, દરેક પારણાના દિવસે સાધુઓને અને સધાર્મિક બંધુઓનો યથાયોગ્ય ભોજનપાનથી સત્કાર કરતાં એક માસમાં દસ છઠની તપશ્ચર્યા પાણી વિના કરી॥૨૨૨॥ ॥૨૨૩॥ ॥૨૨૪॥

हिन्दी :- तीर्थसेवा करने की इच्छा से नाभाक राजा ने, गुरुमहाराज को विधि पूछी और धर्मध्यानमें लीन होकर, तीनो काल अरिहंत प्रभु की पूजा कर के, पवित्र बनकर दिनरात परमेष्ठी महामंत्र का स्मरण करते, हर एक पारणे के दिन साधुओं को और स साधर्मिक बन्धुओं को यथायोग्य उचित भोजनपान से सत्कार करते हुऐ, एक महिने में दस छट्ठ की निर्जल तपश्चर्या की। ॥२२२॥ ॥२२३॥ ॥२२४॥

मराठी :- तीर्थसेवा करण्यास तत्पर त्या नाभाक राजाने गुरुमहाराजांना विधि विचारून, धर्मध्यानामध्ये तल्लीन बनून, तिन्ही वेळा अरिहंत प्रभूची पूजा केली व पवित्र बनून रात्रंदिवस परमेष्ठी महामंत्राचे स्मरण केले. प्रत्येक पारण्याच्या दिवशी साधूंना आणि सार्धर्मिक बंधूंना यथायोग्य उचित जेवण देऊन त्यांचा सत्कार केला व एका महिन्यात दहा छठ्ठाची तपश्चर्या पाण्याशिवाय केली.॥२२४॥

English :- Now in order to serve the pilgrim spot, the King questioned the rev monk about the religious procedures. Then the king went into a deep and a rapt meditation of the Navakar mantra. He also performed the puja in honour of Lord Aarihant three times a day. He would feed all the monks and other religious lay-men around on the days, he breaks his fat and thus performed such penences of fasting two days at a stretch, without food and water, ten times a month with a gap, for breaking his fast, on the third day.

**दिने त्रिंशत्तमे ब्राह्म - मुहूर्ते तेन वीक्षिताः॥**
**चतस्रः पादिकामात्रा, मार्जार्यः कर्बुराः पुरा ॥२२५॥**

अन्वयः:- तेन त्रिंशत्तमे दिने ब्राह्ममुहूर्ते पादिकामात्राः चतस्रः कर्बुराः मार्जार्यः वीक्षिताः ॥२२५॥

*विवरणम्:- तेन नाभाकेन त्रिंशत्तमे दिने ब्रह्मणः इदं ब्राह्मम्। ब्राह्मं च तत् मुहूर्तं च ब्राह्ममुहूर्तं तस्मिन् ब्राह्ममुहूर्ते पुरा पादिका प्रमाणं यासां ताः पादिकामात्राः पादप्रमाणाः चतस्रः चतुःसंख्याकाः कर्बुराः कर्बुरवर्णाः मार्जार्यः वीक्षिताः अवलोकिताः ॥२२५॥*

सरलार्थः:- तेन नाभाकेन राज्ञा त्रिंशत्तमे दिने ब्राह्ममुहूर्ते पुरा पादमात्राः कर्बुरवर्णाः मार्जार्यः दृष्टाः ॥२२५॥

ગુજરાતી :- તે રાજાએ ત્રીસમે દિવસે બ્રહ્મ મુહૂર્તમાં પોતાની આગળ પગલાં માત્ર પ્રમાણવાળી ચાર કાબરાવર્ણની બિલાડી જોઈ. ॥૨૨૫॥

हिन्दी :- उस राजाने तीसवें दिन ब्रह्ममुहूर्त में अपने सामने एक पाद मात्र आकार की भूरे रंग की (काबरे रंग की) चार बिल्लियाँ अपने सामने देखी ॥२२५॥

मराठी :- त्या राजाने तिसाव्या दिवशी पहाटे आपल्या समोर एक एक पाऊल आकाराच्या कथ्थीयां रंगाच्या चार मांजरी पाहिल्या.॥२२५॥

English :- On the thirtieth day, at daybreak, the King happened to see four cats, the size of a foot with variegated colours.

**ब्रह्मादिहत्याः एतास्ताः क्षीयन्ते तपसो बलात् ॥**
**अनुमीयेति स प्राग्वद् विदधेऽथाष्टमाष्टकम् ॥२२६॥**

अन्वयः:- एताः ताः ब्रह्मादिहत्याः तपसः बलात् क्षीयन्ते। इति अनुमीय अथ स प्राग्वत् अष्टमाष्टकं विदधे ॥२२६॥

*विवरणम्:- एता: ता: भानुभवे कृता: ब्रह्मादयश्च ता: हत्याश्च ब्रह्मादिहत्या: ब्राह्मणबालस्त्रीगोहत्या: तपस: बलात् सामर्थ्यात् क्षीयन्ते। इति अनुमीय अथ अनन्तरं स: नृप: प्राग्वत् अष्टमानां समूह: अष्टकम् अष्टमं च तदष्टकंच अष्टमाष्टकं विदधे चक्रे ॥२२६॥*

सरलार्थ:- एता: ता: भानुभवे विहिता: ब्राह्मणादिहत्या: तपस: बलात् क्षीयन्ते। इति अनुमीय स: नृप: तत: अष्टमाष्टकं विदधे ॥२२६॥

ગુજરાતી :- "મેં પૂર્વે ભાનુના ભવમાં કરેલી બ્રાહ્મણ વિગેરેની હત્યાઓ તપસ્યાના પ્રભાવથી ક્ષીણ થતી જાય છે" એ પ્રમાણે પૂર્વની જેમ અનુમાન કરી આઠ અઠ્ઠમ કર્યા. ॥૨૨૬॥

हिन्दी :- "मैने पहले भानु के जन्म में की हुई हत्याएं तपस्या के प्रभाव से अब क्षीण होती जाती है," ऐसा पहले के जैसा ही अनुमान करके अब उसने आठ अट्ठम किये॥२२६॥

मराठी :- "मी आधी भानूच्या जन्मी ज्या हत्या केल्या, त्या आतां या तपश्चर्येमुळे क्षीण होत आहेत." असे अनुमान करून त्याने आठ अठ्ठम केले.॥२२६॥

English :- He now found that it was analogic to presume that his sins of murdering in his past life as Bhanu, is being gradually washed away due to the resplendency of his penences. He now began with renewed zeal, an eight day fast, eight times, with a gap on the ninth day, to break his fast.

**तदन्ते कालमात्रास्ता, वीक्षिता धूसरा: पुन: ॥**
**मत्वा तथैव ता: प्राग्वच्चकार दशमानि षट् ॥२२७॥**

अन्वय:- तदन्ते कालमात्रा: धूसरा: ता: पुन: वीक्षिता:। तथा एव ता: मत्वा स: प्राग्वत् षट् दशमानि चकार॥२२७॥

*विवरणम्:- तदन्ते तस्य अष्टमाष्टकस्य अन्ते तदन्ते ब्राह्मे मुहूर्ते काल: कोकिल: प्रमाणं यासां ता: कालमात्रा: कोकिलप्रमाणा: धूसरा: धूम्रवर्णा: ता: मार्जार्य: पुन: वीक्षिता: दृष्टा:। तथा एव पूर्ववत् ता: ब्रह्मादिहत्या: क्षीयन्ते इति मत्वा स: प्राग्वत् षड् दशमानि चतुरुपवासा: चकार॥२२७॥*

सरलार्थः- अष्टमाष्टकस्य अन्ते ब्राह्मे मुहूर्ते कोकिलप्रमाणाः धूसराः ताः मार्जार्यः पुनः वीक्षिताः। ताः तपसः प्रभावात् क्षीयन्ते इति मत्वा सः प्राग्वत् षट् दशमानि (चतुरुपवासाः) चकार ॥२२७॥

ગુજરાતી :- આઠ અઠ્ઠમને છેડે બ્રહ્મ મુહૂર્તમાં કોયલના પરિમાણવાળી ધૂસર વર્ણની ચાર બિલાડી જોઈ, ત્યારે પણ પૂર્વની જેમ 'બ્રહ્મહત્યાદિ હત્યાઓ ક્ષીણ થતી જાય છે, એ પ્રમાણે માની નાભાક રાજાએ છ ચાર ઉપવાસ કર્યા. ॥૨૨૭॥

हिन्दी :- आठ अट्ठम पूर्ण होने के ब्राह्म मुहूर्त में केवल कोयल के आकार की राखोंडी रंग की चार बिल्लियाँ देखी, तब पूर्वानुसार, "ब्राह्म इत्यादी हत्यायें अब क्षीण होती जा रही है।" ऐसा अनुमान करके उस नाभाक राजाने अब छः "चार उपवास" शुरु किये॥२२७॥

मराठी :- आठ अष्टम संपल्यानंतर पहाटे त्याजे नुसत्या कोकिळेच्या आकारांच्या, राखाडी रंगाच्या चार मांजरी आपल्या समोर पाहिल्या. तेव्हा सुद्धा पूर्वीप्रमाणे, "आता ब्राह्मण इत्यादि हत्या आणखी क्षीण होत आहे." असे मानून नाभाक राजाने सहा "चार उपवास" सुरु केले.॥२२७॥

English :- After having concluded his eight day fast, eight times, King Nabhak one day happened to see four eats, the size of a cuckoo, at a time which is about three hours prior to sunrise. He therefore found it analogous to conclude that his sins are gradually attaining diminutiveness. He now began a six day fast, four times with a gap on the seventh day to break his fast.

**तत्प्रान्ते मूषिकामात्रा, दृष्टास्ता धवलाः पुनः ॥**
**ततो विशेषतो हृष्टश्चक्रे द्वादशपञ्चकम् ॥२२८॥**

अंन्वयः- षट् चतुरुपवासव्रतस्य प्रान्ते मूषिकामात्राः ताः पुनः धवलाः दृष्टाः। ततः विशेषतः हृष्टः सः द्वादशपञ्चकं चक्रे ॥२२८॥

*विवरणम्:- तस्य षट् चतुरुपवासव्रतस्य प्रान्ते अन्ते तत्प्रान्ते मूषिका प्रमाणं यासां ताः मूषिकामात्राः मूषिकाप्रमाणाः ताः चतस्रः मार्जार्यः पुनः धवलाः धवलवर्णाः दृष्टाः। ततः तस्मात् कारणात् विशेषतः विशेषरूपेण हृष्ट सः पञ्च उपवासपञ्चकं चक्रे विदधे ॥२२८॥*

सरलार्थः- तस्य षट्चतुरुपवासव्रतस्य अन्ते मूषिकामात्राः ताः चतस्रः मार्जार्यः धवलवर्णाः दृष्टाः। तेन हृष्टः सः पञ्च उपवासपञ्चकं चक्रे ॥२२८॥

ગુજરાતી :- છ ચાર ઉપવાસની તપશ્ચર્યાને છેડે ઉંદરના પ્રમાણ જેટલી ચાર ધોળી બિલાડી જોઈ તેથી વિશેષ હર્ષિત થયેલા નાભાક રાજાએ પાંચ પાંચ ઉપવાસ કર્યા. ॥૨૨૮॥

हिन्दी :- उसने छः चार उपवास की तपस्या के अंत मे केवल चूहे के प्रमाण की सफेद रंगकी चार बिल्लियाँ देखी। इससे ज्यादा हर्षित होकर उसने पांच पांच उपवास किये॥२२८॥

मराठी :- ती सहा चार उपवासांची तपश्चर्या झाल्यानंतर त्याने शेवटी उंदिराच्या आकाराच्या चार पांढऱ्या मांजरी पाहिल्या. त्यामुळे विशेष आनंदाच्या भरात त्याने पांच उपवास पाच वेळा केले.॥२२८॥

English :- On the completion of his eight day fast, eight times, he happened to see four white coloured cats; the size of a rat. This made him all the more happy and contented. He thus began a five day fast, five times, with enthusiastic renewedness.

ईषन्निद्रान्तरेकोनत्रिंशत्तमे दिने ततः ॥
नमस्कारान् स्मरन्नेव स्वप्नमेकम लोकत॥२२९॥

अन्वयः- ततः एकोनत्रिंशत्तमे दिने नमस्कारान् स्मरन् एव ईषत् निद्रान्तः एकं स्वप्नम् अलोकत ॥२२९॥

विवरणम्:- *ततः तदनन्तरम् एकोनत्रिंशत्तमे दिने नमस्कारान् नमस्कारमहामन्त्रान् स्मरन् ध्यायन् एव ईषत् किञ्चित् निद्रायाः अन्तः निन्द्रान्तः एकं स्वप्नं अलोकत अपश्यत्। एकोनत्रिंशत्तमे दिने नमस्कारान् स्मरतः एव तस्य ईषत् निद्रा समायाता। तस्यां निद्रायां स एकं स्वप्नम् अपश्यत् ॥२२९॥*

सरलार्थः- तदनन्तरम् एकोनत्रिंशत्तमे दिने सः यदा नमस्कारान् अस्मरत् तदा तस्य ईषत् निद्रा समायाता। तस्यां सः एकं स्वप्नम् अपश्यत् ॥२२९॥

ગુજરાતી :- ત્યારબાદ ઓગણત્રીશમા દિવસે નમસ્કારનું સ્મરણ કરતાં કરતાં જ થોડી નિદ્રા લીધી. નિદ્રામાં એક સ્વપ્ન જોયું કે, ॥૨૨૯॥

हिन्दी :- उसके बाद उनतीसवें दिन रातको नमस्कार का स्मरण करते करते उसे मामुली सी झपकी लग गयी उतने में उसने ऐसा स्वप्न देखा कि.॥२२९॥

मराठी :- नंतर एकोणतिसाव्या दिवशी तो राजा रात्री नमस्कार मंत्राचे स्मरण करीत असता अर्ध झोपेंतच त्याने एक स्वप्न पाहिले॥२२९॥

English :- Then on the nineteenth day, of his fast, as he was meditating on the Navkar Mantra, he fell off into a light doze, in which he had a dream.

क्वाऽपि स्फटिकशैलेऽहं, सोपाने प्रथमे स्थितः ॥
केनाप्यतीव वृद्धेन, कृशेन लोठितः परम् ॥२३०॥
प्राप्तो द्वितीयं सोपानं तृतीयं च गतस्ततः ॥
शैलशृङ्गमथारुह्य, मुक्तराशौ निविष्टवान् ॥२३१॥

अन्वयः- क्वाऽपि स्फटिकशैले प्रथमे सोपाने स्थितः अहं केनापि कृशेन अतिवृद्धेन लोठितः परम् ॥२३०॥ द्वितीयसोपानं प्राप्तः। ततः तृतीयं गतः। अथ शैलशृङ्गम्आरुह्य मुक्तराशौ निविष्टवान् ॥२३१॥

विवरणम्:- *क्वाऽपि कस्मिन्नपि स्फटिकानां शैलः पर्वतः स्फटिकशैलः तस्मिन् स्फटिकशैले स्फटिकपर्वते प्रथमे सोपाने स्थितः अहं केनापि कृशेन कृशशरीरेण अतिशयेन वृद्धः अतिवृद्धः तेन अतिवृद्धेन पुरुषेण लोठितः। परं परन्तु॥२३०॥*

*अधोगमनं विना द्वितीयं सोपानं प्राप्तः। ततः तृतीयं सोपानं गतः। एवं व्युत्क्रमेण शैलस्य शृङ्गं शैलशृङ्गं पर्वतशिखरमारुह्य अहं मुक्तानां मोक्षं गतानां राशिः मुक्तराशिः तस्मिन् मुक्तराशौ मोक्षं गतानां पङ्क्तौ निविष्टवान् उपविष्टवान् ॥२३१॥*

सरलार्थ:- कस्मिन् अपि स्फटिकपर्वते प्रथमे सोपाने स्थित: अहं केनापि कृशेन अतिवृद्धेन पुरुषेण लोठित: ॥२३०॥

परन्तु अहम् अध: अगत्वा व्युत्क्रमेण द्वितीयं सोपानं तत: तृतीयं सोपानमेवं उपरि उपरि गत्वा पर्वतस्य शिखरम् आरुह्य मुक्तानां राशौ उपविष्टवान् ॥२३१॥

ગુજરાતી :- "હું કોઈ સ્ફટિક પર્વત ઉપર પહેલે પગથિયે ચડયો હતો તેવામાં કોઈ એક કૃશ અને અત્યંત વૃદ્ધ પુરુષે ધક્કો મારી ગબડાવ્યો." ॥૨૩૦॥

પરંતુ નીચે જવાને બદલે ઉલ્ટો બીજે પગથિયે પહોંચ્યો, ત્યાર પછી ત્રીજે પગથિયે ચડ્યો, અને ક્રમસર પર્વતના શિખર ઉપર ચડી છેવટે મોતીઓના ઢગલા પર જઈને બેઠો.॥૨૩૧॥

हिन्दी :- "जैसे की मैं किसी स्फटिक पर्वत की पहली सीढी पर चढा ही था कि उतनेमें कोई एक दुबले और बूढे आदमीने मुझे धक्का मारकर गिरा दिया लेकिन मैं नीचे की ओर गिरने के बजाय उपर की दूसरी सीढी पर जा पहुँचा। वहाँ से फिर तीसरी सीढी पर चढा और ऐसे क्रम से पर्वत की चोटी तक चढकर अंत में मोतीयों के ढेर में जा बैठा॥२३१॥"

मराठी :- "मी एखाद्या स्फटिकांच्या पर्वताची पहिली पायरी चढलो होतो तितक्यात कोणी अशक्त म्हाताऱ्याने धक्का दिला. पण मी खाली पडण्याऐवजी दुसऱ्या पायरीवर पोंहोचलो, नंतर तिसरी पायरी चढलो आणि क्रमाने पर्वतांच्या शिखरापर्यंत चढून तेथे मोत्यांच्या राशीत बसलो." ॥२३१॥

English :- In his dream, he found himself on a crystalline mount. Now as he was on the first step of the mount a feeble and a frail looking man gave him a push. To his suprise, he found himself falling on the second step, with that push. He now began climbing the mount and ultimetly reached a big heap of precious stones, on the pinnacle of the mount. He then sat on it.

**प्रभो! फलं किमस्येति, पृष्टाः श्रीगुरवो जगुः ॥**
**स्फटिकाद्रिर्जिनधर्मः, सोपानं मानुषो भवः ॥२३२॥**

अन्वयः:- प्रभो! अस्य स्वप्नस्य किं फलम् इति पृष्टाः श्रीगुरवः जगुः। स्फटिकाद्रिः जिनधर्मः, सोपानं मानुषो भवः अस्ति ॥२३२॥

*विवरणम्:- प्रभो! मया दृष्टस्य अस्य स्वप्नस्य किं फलम् अस्ति। इति पृष्टाः श्रीगुरवः जगुः जगदुः। स्फटिकाद्रिः जिनस्य धर्मः जिनधर्मः अस्ति। सोपानं मानुषः भवः अस्ति।२३२॥*

सरलार्थः:- प्रभो! अस्य स्वप्नस्य किं फलमस्ति? इति पृष्टे श्रीगुरवः अवदन् - हे राजन्! जिनधर्मः स्फटिकाद्रिसदृशः अस्ति। मानुषः भवः च सोपान सदृशो भवति ॥२३२॥

ગુજરાતી :- આ પ્રમાણે આશ્ચર્યકારી સ્વપ્ન જોઈ જાગૃત થયેલા નાભાક રાજાએ પ્રાતઃકાલે મુનિરાજને પૂછ્યું કે 'પ્રભો! આ સ્વપ્નનું ફળ શું?' ત્યારે ગુરુમહારાજે કહ્યું કે "જે તું સ્ફટિક પર્વત ઉપર જડ્યો તે જિનધર્મ જાણવો, તે પર્વતના પહેલા પગથી મનુષ્ય જન્મ સમજવો."॥૨૩૨॥

हिन्दी :- इस तरह का आश्चर्यकारक स्वप्न देखकर सुबह गुरू से पूछा "इस आश्चर्यकारक स्वप्न का फल क्या है", तब उन्होने कहा "तू जिस स्फटिक पर्वत पर चढ़ा था, उसे जैनधर्म जानना और उसकी पहली सीढी मनुष्य जन्म समझना॥२३२॥"

मराठी :- ह्या प्रकारचे आश्चर्यकारक स्वप्न पाहून सकाळी जाग आल्यानंतर राजाने मुनिराजांना त्याचे फळ विचारले. तेव्हा मुनिराज म्हणाले, "ज्या पर्वतावर तू चढला होतास त्याला जैनधर्म समज, आणि त्याची पहिली पायरी मनुष्य जन्म समज."॥२३२॥

English :- At dawn the king asked the rev. monk the of this astounding and a strange dream. At this the monk replied that the crystalline mount signified the jain religion and its first step meant the human birth.

**अतो धर्माच्च यत्नेनाऽन्तरायस्वल्पकर्मणा।**
**पात्यमानोऽपि सत्त्वेनाऽच्युतस्त्वं स्वर्गमेष्यसि ॥२३३॥**

अन्वयः- अतो धर्मात् अन्तरायस्वल्पकर्मणा यत्नेन पात्यमानः अपि सत्त्वेन अच्युतः त्वं स्वर्गं एष्यसि ॥२३३॥

विवरणम्:- *अतः अस्मात् धर्मात् जिनधर्मरूपात् स्फटिकाद्रिप्रथमसोपानात् अन्तरायरूपं यत् स्वल्पं कर्म तेन अन्तरायस्वल्पकर्मणा केनापि कृशेन वृद्धपुरुषेण यत्नेन प्रयत्नेन पात्यमानः निपात्यमानः अपि सत्त्वेन न च्युतः अच्युतः त्वं स्वर्गं एष्यसि गमिष्यसि ॥२३३॥*

सरलार्थः- अस्मात् जिनधर्मात् अन्तरायस्वल्पकर्मणा यत्नेन पात्यमानः अपि सत्त्वेन अच्युतः त्वं स्वर्गं गमिष्यसि॥२३३॥

ગુજરાતી :- આ જિનધર્મરૂપી સ્ફટિક પર્વતના પહેલા પગથિયાથી અંતરાયરૂપી સ્વલ્પ કર્મ વડે ગબડાવાયો છતાં સત્વ વડે દઢ રહેલો તું પતિત નહીં થયો, તેથી દેવલોકરૂપી બીજે પગથિયે જઈશ ॥૨૩૩॥

हिन्दी :- इस जिनधर्मरूपी स्फटिक पर्वत की पहली सीढी पर से अन्तरायरूपी स्वल्प कर्म द्वारा गिराये जाने पर भी अपने सत्त्व से दृढ हो कर गिरा नही, अतः तू स्वर्ग में जायेगा॥२३३॥

मराठी :- या जिनधर्मरुपी स्फटिक पर्वतांच्या पहिल्या पायरीपासून विघ्नरूपी स्वल्प कर्माने ढकलला गेला असतांना सुध्दा, तूं स्वतःच्या सत्त्वामुळे दृढ राहून खाली पडला नाहीस. म्हणून तू स्वर्गात जाशील.॥२३३॥

English :- On the crystalline mount, which signifies the *jain* religion, he was pushed by his few immeritable deeds, in the form of a frail man. But because of his presence of mind and his uncountable meritable deeds he was able to withstand the push which signifies that he shall be a claimant of heavenly bliss.

ज्ञानं तृतीयं सोपानं नृभवेऽवाप्य केवलम्॥
सर्वकर्मविनिर्मुक्तो मुक्तराशौ निवेक्ष्यसि ॥२३४॥

अन्वयः- नृभवे सर्वकर्मविनिर्मुक्तः तृतीयसोपानं केवलं ज्ञानम् अवाप्य मुक्तराशौ निवेक्ष्यसि ॥२३४॥

विवरणम्:- देवलोकात् (स्वर्गात्) च्युत्वा नृभवमागतस्त्वं नुः नरस्य भवः नृभवः तस्मिन् नृभवे मनुष्यभवे सर्वाणि च तानि कर्माणि च सर्वकर्माणि घात्यघातिरूपेभ्यः सर्वकर्मभ्यः विनिर्मुक्तः सर्वकर्मविनिर्मुक्तः त्वं तृतीयं च तत् सोपानं च तृतीयसोपानं केवलं ज्ञानम् अवाप्य लब्ध्वा मुक्तानां राशिः मुक्तराशिः तस्मिन् मुक्तराशौ निवेक्ष्यसि उपवेक्ष्यसि मोक्षं गमिष्यसि ॥२३४॥

सरलार्थ:- स्वर्गात् च्युत्वा नृभवमागतः त्वं नृभवे सर्वकर्मभ्यः विनिर्मुक्तः सन् तृतीयसोपानं केवलं ज्ञानमधिगम्य मुक्तराशौ उपवेक्ष्यसि मोक्षं प्राप्स्यसि ॥२३४॥

ગુજરાતી :- દેવલોકમાંથી ચ્યવી મનુષ્યભવમાં આવે તું સર્વ કર્મોથી રહિત થયા પછી ત્રીજા પગથીયારૂપ કેવલજ્ઞાન પામી મોક્ષરાશિમાં પ્રવેશ કરીશ ॥૨૩૪॥

हिन्दी :- देवलोक में से आयुष्य पूरा कर के मनुष्य भव में आ कर, तू समस्त कर्मों से रहित हो कर तीसरी सीढीरूप केवलज्ञान को प्राप्त करके मोक्ष राशिमें प्रवेश करेगा॥२३४॥

मराठी :- देवलोकामधून च्युत होऊन मनुष्य जन्मात येऊन तू सगळ्या कर्मांतून मुक्त होशील व तिसरी पायरी स्वरूपी केवलज्ञान प्राप्त करुन मोक्ष राशीत प्रवेश करशील.॥२३४॥

English :- After completing his life as a God in heaven, he shall again attain a human form on this earth. Then after irradicating all his sins, he shall attain supreme Knowledge *(Keval gyan)*, which signifies the third step. And in due course, he shall catch a flight to the final Salvation.

परं तत् प्राक्तनं कर्मच्छद्मस्थत्वान्न बुध्यते ॥
अतः पृच्छ विदेहेषु, श्रीमत्सीमन्धरं जिनम् ॥२३५॥

अन्वयः:- परं छद्मस्थत्वात् मया तत् प्राक्तनं कर्म न बुध्यते। अतः विदेहेषु श्रीमत्सीमन्धरं जिनं पृच्छ॥२३५॥

विवरणम्:- *परं परन्तु छद्मे तिष्ठतीति छद्मस्थः, छद्मस्थस्य भावः छद्मस्थत्वं, तस्मात् छद्मस्थत्वात् मया तत् त्वया कृतं प्राक् भवं प्राक्तनं कर्म न बुध्यते न ज्ञायते। अतः त्वं विदेहेषु क्षेत्रेषु श्रीः अस्यास्तीति श्रीमान्। श्रीमान् चासौ सीमन्धरश्च श्रीमत्सीमन्धरः तं श्रीमत्सीमन्धरं जिनं पृच्छ विचारय ॥२३५॥*

सरलार्थ:- परन्तु अहं छद्मस्थत्वात् त्वया कृतं प्राक्तनं कर्म ज्ञातुं न शक्नोमि अतः त्वं विदेहेषु क्षेत्रेषु श्रीमत्सीमन्धरं जिनं पृच्छ ॥२३५॥

ગુજરાતી :- પરંતુ હું છદ્મસ્થ હોવાથી તેં પૂર્વે કરેલું તે અન્તરાય્ કર્મ જાણી શકતો નથી, માટે મંહાવિદેહ ક્ષેત્રમાં વિરાજમાન્ શ્રી સીમંધર પ્રભુને પૂછ. ॥૨૩૫॥

हिन्दी :- "लेकिन मैं छद्मस्थ होने से तूने पूर्व भव में किये हुए उस अन्तराय कर्म को नहीं जान सकता हूँ। इसलिये महाविदेह क्षेत्र में विराजमान श्री सीमन्धर स्वामी को पूछा॥२३५॥"

मराठी :- "परंतु मी छद्मस्थ असल्यामुळे तू केलेले ते अन्तराय कर्म जाणू शकत नाही, म्हणून महाविदेह क्षेत्रामध्ये विराजमान श्री सीमन्धर प्रभूंना विचार.॥२३५॥"

English :- But the priest continues that because of his limited knowledge, he is not able to see the sins of his past life that has bought about obstacles in this present life. So he askes the king to ask the Lord, Simandar who shines with utmost radiance and effugence in the Mahavedheha Shetra.

प्राप्नोमीदृक्कथं राज्ञे - त्युक्ते श्रीगुरवोऽवदन् ॥
भवत्पुण्यप्रभावेन, भवितेत्यचिरादपि ॥२३६॥

अन्वयः:- ईदृक् अहं कथं प्राप्नोमि? इति राज्ञा उक्ते सति श्रीगुरवः अवदन्। भवत्पुण्यप्रभावेण अचिरादपि भविता ॥२३६॥

विवरणम्:- *ईदृक् अहं श्रीसीमन्धरप्रभुं कथं प्राप्नोमि? इति राज्ञा नृपेण उक्ते सति श्रीगुरवः अवदन् - अभाषन्त। भवतः पुण्यं भवत्पुण्यम्। भवत्पुण्यस्य प्रभावः भवत्पुण्यप्रभावः तेन भवत्पुण्यप्रभावेण अचिरादपि अल्पेन कालेनापि तव तत्र गमनं भविता भविष्यति ॥२३६॥*

सरलार्थः:- ईदृक् अहं श्री सीमन्धरप्रभुं कथं प्राप्नोमि? इति नृपः गुरून् अपृच्छत्। तदा गुरवः अभाषन्त तव पुण्यप्रभावेण अचिरादपि तव तत्र गमनं भविष्यति ॥२३६॥

ગુજરાતી :- નાભાક રાજાએ પૂછ્યું કે "શ્રી સીમંધર સ્વામી પાસે કેવી રીતે જવાય?" ત્યારે ગુરુમહારાજ બોલ્યા, "તમારા પુણ્યના પ્રભાવથી થોડાજ વખતમાં તમારે ત્યાં જવાનું થશે."॥૨૩૬॥

हिन्दी :- तब नाभाक राजाने पूछा, "श्री सीमन्धर स्वामी के पास किस प्रकार जाऊंगा?" तब श्री गुरुमहाराज ने कहा, "तेरे पुण्य के प्रभाव से थोडे ही समय में तेरा वहाँ जाना होगा॥२३६॥"

मराठी :- तेव्हा नाभाकराजाने विचारले, "श्री सीमन्धर स्वामीकडे मला कसे जाता येईल?" तेव्हा श्री गुरुमहाराज म्हणाले, "तुझ्या पुण्याच्या प्रभावामुळे थोड्याच वेळात तुझे तेथे जाणे होईल."॥२३६॥

English :- At this the King asked the rev. monk the path to go to Lord Simandar. The monk than replied that he shall be able to go there due to the efficacy of his own meritrocratic deeds, in a short span of time.

एतद्विशेषलाभाया-दिदिशे गुरुणा तदा ॥
अन्यथा केवलिप्रश्नात् पूर्वविद् बुध्यतेऽखिलम् ॥२३७॥

अन्वयः:- तदा गुरुणा एतद्विशेषलाभाय आदिदिशे। अन्यथा पूर्वविद् केवलिप्रश्नात् अखिलं बुध्यते॥२३७॥

विवरणम्:- *तदा तस्मिन् समये गुरुणा श्रीयुगन्धरसूरिणा विशेषश्चासौ लाभश्च विशेषलाभः। एतस्य नाभाकस्य विशेषलाभः एतद्विशेषलाभः तस्मै एतद्विशेषलाभाय नाभकस्य विशेषलाभाय आदिदिशे। अन्यथा पूर्वाणि वेत्तीति पूर्वविद् चतुर्दशपूर्वज्ञानवान् केवलिनः प्रश्नः केवलिप्रश्नः तस्मात् केवलिप्रश्नात् केवलिनं पृष्ट्वा अखिलं सर्वं बुध्यते जानाति ॥२३७॥*

सरलार्थः:- तदा श्रीयुगन्धरगुरुणा नृपस्य विशेषलाभाय तथा आदिदिशे। अन्यथा पूर्वविद् केवलज्ञानिनं पृष्ट्वा सर्वं जानीते॥२३७॥

**ગુજરાતી :- તે વખતે નાભાક રાજાના વિશેષ લાભ માટે યુગંધરસૂરિએ ઉપર પ્રમાણે કહ્યું, નહીંતર ચૌદપૂર્વના જાણકાર તો કેવલી ભગવાનને પૂછવાથી સર્વ વાત જાણી શકે છે. ॥૨૩૭॥**

हिन्दी :- उस समय नाभाक राजा के विशेष लाभ के लिये ही श्री युगन्धरस्वामी ने उस को इस प्रकार कहा, अन्यथा चौदह पूर्व के ज्ञानी तो केवली भगवान को पूछने से ही सब बात जान लेते है॥२३७॥"

मराठी :- त्या वेळी नाभाक राजाला विशेष लाभ व्हावा, म्हणूनच श्री युगन्धर स्वामीने त्याला वर लिहिलेले सांगितले. नाहीतर चौदापूर्वांचे ज्ञान असलेला केवली भगवंताला विचारल्या शिवायही सर्व जाणतो.॥२३७॥

English.:- In order that King Nabhak gets the maximum fruit out of his visit, the rev monk Yugandhar said that he should question a man who is well conversant with the fourteen Purve religious books, who in turn can question the Lord who is entitled to obtain Salvation.

अथान्तरायविच्छित्त्यै पारणाहेऽप्युपोषितः ॥
ईषन्निद्रां गतो यावज्जागर्ति स निशात्यये ॥२३८॥
तावद्वीक्ष्य महारण्ये, पतितं स्वं व्यचिन्तयत् ॥
हा हा! कथं स एवाऽय-मन्तरायः समापतत् ॥२३९॥

अन्वयः:- अथ अन्तरायविच्छित्त्यै पारणाहे अपि उपोषितः ईषन्निद्रां गतः सः निशात्यये यावत् जागर्ति॥२३८॥

तावत् स्वं महारण्ये पतितं वीक्ष्य व्यचिन्तयत् - हा हा! कथं स एवं अयम् अन्तरायः समापतत् ॥२३९॥

विवरणम्:- *अथ अनन्तरम् अन्तरायस्य विच्छित्तिः अन्तरायविच्छित्तिः, तस्यै अन्तरायविच्छित्त्यै-अन्तरायनाशाय पारणस्य अहः पारणाहं, तस्मिन् पारणाहे पारणादिने अपि उपोषितः उपवासं कृतवान् रात्रौ धर्मज्ञानपूर्वकं सुप्तः ईषत् किंचित् निद्रां गतः सः निशायाः अत्ययः निशात्ययः तस्मिन् निशात्यये रजन्यवसाने यावत् जागर्ति प्रबुध्यते॥२३८॥*

*तावत् स्वमात्मानं महत्च तद् अरण्यं च महारण्यं तस्मिन् महारण्ये पतितं वीक्ष्य दृष्ट्वा व्यचिन्तयत् - व्यचारयत् : हा हा! अरेरे! स एव गुरुणा कथितः एव अयम् अन्तरायः समापतत् आजगाम ॥२३९॥*

सरलार्थः:- अनन्तरमन्तरायकर्मणः विच्छित्त्यै पारणदिनेऽपि उपवासं कृत्वा धर्मध्यानलीनः रात्रौ सुप्तः किञ्चित् निद्रां प्राप्य निशायाः अवसाने स यावत् जागर्ति प्रबुध्यते----॥२३८॥

तावत् आत्मानं महारण्ये पतितम् अवलोक्य सः व्यचिन्तयत् - अरेरे। सः एव गुरुणा कथितः एव अयम् अन्तरायः समायात् ॥२३९॥

ગુજરાતી :- ત્યારબાદ અંતરાય કર્મનો વિચ્છેદ કરવા માટે રાજાએ પારણાને દિવસે પણ ઉપવાસ કર્યો, અને ધર્મધ્યાનપૂર્વક સાંજે સુઈ ગયો. થોડી નિદ્રા કરી રાત્રિના છેલ્લે પહોરે જેવામાં જાગે છે,॥૨૩૮॥

તેવામાં પોતાને એક મોટી વિકટ પરિસ્થિતિમાં અટવાઈ પડેલો જોઇ વિચારવા લાગ્યો કે, "અરેરે ! શું મને ગુરુમહારાજે જે અન્તરાય કર્મ કહ્યું હતું તેજ કર્મ ઉદયમાં આવી પડ્યું?"॥૨૩૯॥

हिन्दी :- बाद में अन्तराय कर्म का विच्छेद करने के लिये उसने पारणे के दिन भी उपवास किया और धर्मध्यान कर के रात को सो गया, थोडी नींद लेकर रात्री के अंतिम प्रहर में जब जागा तो स्वयं को एक कठिन विपदा नें फसा हुआ देख कर सोचने लगा, "अरे हाय! मुझे श्री गुरुमहाराजने जो अन्तराय कर्म के संबंध में कहा था, वही अब उदय में आ गया है क्या?"॥२३९॥

मराठी :- नंतर अन्तराय कर्माचा विच्छेद करण्यासाठी त्याने पारण्याच्या दिवशी सुध्दा उपवास केला आणि धर्मध्यान करीत करीत रात्री झोपला. थोडीसी झोप घेतली आणि रात्रीच्या शेवटच्या प्रहरी जागा झाला. तितक्यात स्वतःला एका दाट जंगलात पडलेला पाहून विचार करू लागला, "अरेरे! मला श्री गुरुमहाराजांनी जे अन्तराय कर्म सांगितले होते, तेच आता उदयास आले आहे काय?॥२३९॥"

English :- Now the King in order to irradicate the obstocles of his past immeritable deeds, the king abstinated even on the day he had to break his fast. At night he devoutly meditated on the *Navkar mantra* and fell off to sleep. After a short nap, he woke up during the last three hours of the night only to find himself in a dangerous labyrinth. He now said to himself that this could be the vexatious deed, which has emerged now.

**अथवाऽलं विषादेन, श्री शत्रुञ्जयनायकम् ॥**
**नत्वा श्री ऋषभदेव - मादास्ये भक्तपानकम्॥२४०॥**

अन्वयः- अथवा विषादेन अलम्। श्री शत्रुञ्जयनाकं श्री ऋषभदेवं नत्वा भक्तपानकं आदास्ये ॥२४०॥

विवरणम्:- *अथवा विषादेन अलम्। विषादेन किमपि न साध्यम्। श्री शत्रुञ्जयस्य नायकः श्रीशत्रुञ्जयनायकः तं श्रीशत्रुञ्जयनायकं, श्रिया युतः ऋषभदेवः श्री ऋषभदेवः तं श्रीऋषभदेवं नत्वा वन्दित्वा भक्तं च पानकं च एतयोः समाहारः भक्तपानकम् अथवा भक्तं वा पानकं वा भक्तपानकं भोजनं जलादिकं च आदास्ये ग्रहीष्यामि॥२४०॥*

सरलार्थः- अथवा विषादेन अलम्। अहं श्रीशत्रुञ्जयस्य नायकं श्री ऋषभदेवं नत्वा भोजनं पानकम् आदास्ये वाहोष्यामि ॥२४०॥

ગુજરાતી :- અથવા વિશેષ ખેદ કરવાથી શું વળવાનું છે? શ્રી શત્રુંજય તીર્થના અધિરાજ ભગવાન્ શ્રી આદીશ્વર પ્રભુને વંદન કર્યા બાદ હું ભોજન અને જલ વાપરીશ ॥૨૪૦॥

हिन्दी :- अथवा ज्यादा दुःखी होने से क्या होनेवाला है? मैं श्री शत्रुंजय तीर्थ के अधिराज भगवान श्रीआदीश्वर प्रभु को वंदन करने के बाद ही भोजन और जल ग्रहण करूंगा ॥२४०॥

मराठी :- अथवा ज्यादा दुःख करून काय होणार? श्री शत्रुंजय तीर्थाचे अधिराज भगवान श्री आदीश्वर प्रभूंना नमस्कार करून मी अन्न पाणी घेईन.॥२४०॥

English :- He now pacified himself saying that it is fruitless to feel sad and low during such a circumstance. So he vowed that he shall now only accept food and water, after he has paid his homage to the potentatus divine power of the mount of Shree Satrunjay, Lord Aadishwar.

**निश्चित्येत्यनुपानत्कः क्षरद्रक्ताकुलक्रमः ॥**
**तपःक्रान्तस्तृषाक्लान्तः परिश्रान्तः क्षुधार्दितः ॥२४१॥**
**मध्यालातपसन्तप्तवालुकाभिः पथि ज्वलन् ॥**
**अनिर्विण्णमना देवध्यानादेव चचाल सः ॥२४२॥युग्मम्॥**

अन्वयः- इति निश्चित्य अनुपानत्कः क्षरद्रक्ताकुलक्रमः तपःक्रान्तः तृषाक्लान्तः परिश्रान्तः क्षुधार्दितः ॥२४१॥

मध्यालातपसन्तप्तवालुकाभिः पथि ज्वलन् अनिर्विण्ण-मनाः स देवध्यानादेव चचाल ॥२४२॥

विवरणम्:- *इति श्रीऋषभदेवं नत्वैव भक्तपानकमादास्ये इति निश्चित्य नियमं गृहीत्वा न विद्येते उपानहौ यस्य सः अनुपानत्कः पादत्राणरहितः, क्षरत्च तद् रक्तं च क्षरद्रक्तम्। क्षरद्रक्तेन आकुलौ क्रमौ पादौ यस्य सः क्षरद्रक्ताकुलक्रमः स्रवद्रुधिरव्याकुलपादः, तपसा आतपेन क्रान्तः तपःक्रान्तः आतपपीडितः, तृषया पिपासया आक्लान्तः तृषाक्लान्तः*

...क्रान्तः तपःक्रान्तः आतपपीडितः, तृष्णया पिपासया आक्लान्तः तृषाक्लान्त...



पिपासाग्लानः, परिश्रान्तः परितः श्रान्तः, क्षुधया अर्दितः पीडितः क्षुधार्दितः क्षुधापीडितः,॥२४१॥ मध्यम् अलः मध्यालः। मध्यालस्य आतपः मध्यालातपः। मध्यालातपेन सन्तप्ताः मध्यालातपसन्तप्ताः। मध्यालातपसन्तप्ताश्च ताः वालुकाश्च मध्यालातपसन्तप्तवालुकाः ताभिः मध्यालातपसन्तप्तवालुकाभिः मध्याह्ने प्रखरतरसूर्यांशुभिः तप्ताभिः सिकताभिः पथि मार्गे ज्वलन् अपि न निर्विण्णम् अनिर्विण्णम्। अनिर्विण्णं मनः यस्य सः अनिर्विण्णमनाः देवस्य ध्यानं देवध्यानं तस्मात् देवध्यानात् एव चचाल॥२४२॥

सरलार्थः:- इति निश्चित्य पादत्राणरहितः क्षरता रुधिरेण व्याकुलचरणः, आतपेन क्लान्तः, तृषया परिश्रान्तः, क्षुधया बुभुक्षया पीडितः ॥२४१॥

मध्याह्ने प्रखरतरातपेन सन्तप्ताभिः वालुकाभिः मार्गे ज्वलन् अपि अखिन्नमनाः सः देवस्य ऋषभदेवस्य ध्यानादेव अग्रे अचालीत् ॥२४२॥

ગુજરાતી :- આ પ્રમાણે પોતે દઢતાપૂર્વક નિયમ ગ્રહણ કરી, પગરખાં રહિત હોવાથી અટવીમાં ચાલતાં લોહીથી ખરડાયેલ પગવાળો, તડકાથી વ્યાકુલ બનેલો, તૃષાથી શરીરે ગ્લાનિ પામેલો, ચાલતાં ચાલતાં થાકી ગયેલો, ભૂખથી પીડાયેલો- ॥૨૪૧॥

અને ખરા બપોરના તડકાથી તપી ગયેલી રેતીથી પગે બળતાં હતાં, છતાં પણ ચિત્તમાં જરા પણ ખેદ નહીં લાવતો, ધૈર્યવાન નાભાક રાજા આદીશ્વર પ્રભુનું ધ્યાન ધરતો આગળ ચાલવા લાગ્યો. ॥૨૪૨॥

हिन्दी :- इस प्रकार दृढ निश्चय कर के बिना पादत्राण के (चप्पल आदि के) जंगल में चलने से खून से भरे हुऐ पैरवाला, धूप से व्याकुल होकर, प्यास से ग्लानियुक्त शरीरवाला, चलते चलते थका हुआ, भूख से पीडित और दोपहर में गर्म हुई रेत पर चलने से पैर जलने पर भी मन में जरा सी भी खिन्नता न ला कर, वह धैर्यवान राजा नाभाक आदीश्वर प्रभु का स्मरण करता हुआ आगे ही आगे बढता गया॥२४१॥ ॥२४२॥

मराठी :- श्रीऋषभदेवांना नमस्कार करूनच अन्नपाणी ग्रहण करीन असा निश्चय करून पायात जोडा न घालता चालू लागला त्यामुळे पायातून रक्त वाहू लागले. प्रखर उन्हाने व्याकुळ झाला, तहानेने म्लान झाला, भुकेने पीडला गेला, अतिशय थकला. मध्याह्न कालच्या प्रखर उन्हाने तापलेल्या वाळूंने रस्त्यांत पाय जळत असताना सुद्धा किंचितही खिन्न न होता तो नाभाक राजा श्री आदिश्वर प्रभूचे ध्यान करीत करीत धैर्याने पुढे चालू लागला. ॥२४१॥ ॥२४२॥

English :- In this way, King Nabhak who had maintained his iron-bounded and rigid decisions, walked along with his bare feet being tortured by thorns on the path, which made his feet cry out tears of blood, his stomach demanded immediate food, his body out of sheer exaustion cried out tears of pespiration, his throat that was parched demanded water, to water its walls, His feet demanded a cool path as it was being taken through hot sands at noon time, when the sun is out to inflict its torturous heat. But even after all these difficutties, the king did not feel discouraged, but walked along, calling to mind the almighty, Lord Aadishwar to assist him.

**अपराह्ने, पुरः क्वापि कयाचिन्नवीनस्त्रिया ॥**
**ढौकितं न फलमादत् सत्त्वान्नापि पयः पपौ ॥२४३॥**

अन्वयः- अपराह्ने; क्वापि कयाचित् नवीनस्त्रिया पुरः ढौकितं फलं न आदत्। सत्त्वात् पयः अपि न पपौ ॥२४३॥

*विवरणम्:- पुरः अग्रे अपरमह्नः अपराह्नः तस्मिन् अपराह्ने, अपराह्नसमये क्व अपि कस्मिन्नपि स्थाने कयाचित् नवीना चासौ स्त्री च नवीनस्त्री तया नवीनस्त्रिया नूतनया एव (अपरिचितया एव) स्त्रिया पुरः पुरस्तात् ढौकितम् उपायनीकृतं फलं न आदत् न अखादत्। सत्त्वात् पयः जलमपि न पपौ ॥२४३॥*

सरलार्थः- अपराह्नसमये एकस्मिन् स्थाने कयाचित् नवीनया स्त्रिया पुरः पुरतः फलं ढौकितम्। परं सत्त्वात् सः तत्फलं नाऽखादत् जलमपि न पपौ ॥२४३॥

ગુજરાતી :- રાજા આગળ ચાલ્યો જાય છે તેવામાં બપોર પછીના સમયમાં કોઈક અજાણી સ્ત્રીએ આવી તેની સન્મુખ સુંદર ફળ તથા શીતલ જળ મૂક્યાં, પણ તેને શ્રી આદિશ્વર પ્રભુનું દર્શન કર્યા સિવાય કાંઈ ન લેવાનો નિયમ હોવાથી સત્વશાળી તે મહાપુરુષે ફળ ખાધા નહીં તેમ જળ પણ પીધું નહીં ।।૨૪૩।।

हिन्दी :- राजा आगे चलता रहा है तभी दोपहर के बाद कोई अनजान स्त्री ने आ कर उन के सन्मुख सुंदर फल और शीतल जल रखा। परंतु श्री आदीश्वर प्रभु के दर्शन किये बिना कुछ भी खाने पीने का नहीं ऐसा दृढ नियम होने से अपने सत्व से राजा ने कुछ भी खाया नही और कुछ पिया भी नही॥२४३॥

मराठी :- राजा पुढे चालू लागला इतक्यांत दुपारी कोणी एक अपरिचित स्त्रीने येऊन त्यांच्या समोर सुंदर फळ आणि थंड पाणी ठेवले. परंतु त्यांचा श्री आदीश्वर प्रभूच्या दर्शनाशिवाय काहीच खायचे प्यायचे नाही असा दृढ नियम असल्याने स्वतः सत्वशील राजाने काहीच खाल्ले प्यायले नाही.॥२४३॥

English :- As he walked along he happened to see an unknown women in the evening. She kept some beautiful fruits and chilled water, in front of him. But as he had vowed that he shall not accept any food nor water, until and unless he pays his homage to the Lord Aadishwar, on the mount, he refused to accept it.

तया सह महःस्तोम - व्योमव्यापिनि मन्दिरे ॥
आश्चर्यपरिपूर्णान्तः स्वच्छेन मनसा ययौ ॥२४४॥

अन्वयः- आश्चर्यपरिपूर्णान्तः सः तया सह महःस्तोमव्योमव्यापिनि मन्दिरे स्वच्छेन मनसा ययौ॥२४४॥

*विवरणम्:- आश्चर्येण परिपूर्णमाश्चर्यपरिपूर्णम्। आश्चर्यपरिपूर्णम् अन्तः अन्तःकरणं यस्य सः आश्चर्यपरिपूर्णान्तः विस्मयापूर्णमानसः सः नाभाकः तया स्त्रिया सह महसां तेजसां स्तोमः समूहः यस्मिन् तत् महःस्तोमं तेजःसमूहयुक्तम्। व्योम आकाशं व्याप्नोतीत्येवंशीलं व्योमव्यापि, महःस्तोमचतद्व्योमव्यापि च तस्मिन् महःस्तोमव्योमव्यापिनि तेजःसमूहयुते*

गगनचुम्बिनि मन्दिरे स्वच्छेन निर्मलेन मनसा ययौ जगाम ॥२४४॥

सरलार्थः- आश्चर्यपरिपूर्णमनाः सः तया सह तेजसां समूहेन युक्ते गगनचुम्बिनि मन्दिरे स्वच्छेन मनसा जगाम ॥२४४॥

ગુજરાતી :- ત્યારબાદ આશ્ચર્યથી પૂર્ણ બનેલા હૃદયવાળો નાભાક આકાશમાં વ્યાપી રહેલા તેજના ઝળહળા વાળા એક મહેલમાં તે સ્ત્રી સાથે સ્વચ્છ ચિત્તે ગયો. ॥૨૪૪॥

हिन्दी :- बाद में आश्चर्यचकित सा वह राजा (आसमान) आकाशतक पहुंचे हुए और तेज से प्रकाशमान होनेवाले एक सुंदर महल में उस स्त्री के साथ स्वच्छ चित्त से गया॥२४४॥

मराठी :- नंतर आश्चर्याने युक्त मन असलेला तो राजा प्रकाशाने चमकणाऱ्या गगनचुंबी मंदिरात त्या स्त्री बरोबर स्वच्छ मनानें गेला॥२४४॥

English :- Then the king was overcome with astonishment, when he happened to see a palace, whose pinnacle touched the sky and it was shinning with utmost radiance. He then entered the palace, along with the woman with a clear and a pure mind.

स तत्र चित्रकृद्रूपाः, सारशृङ्गारहारिणीः ॥
हरिणाक्षीर्निरैक्षिष्ट, विलसन्तीः सहस्रशः ॥२४५॥

अन्वयः- सः तत्र चित्रकृद्रूपाः सारशृङ्गारहारिणीः विलसन्तीः सहस्रशः हरिणाक्षीः निरैक्षिष्ट॥२४५॥

विवरणम्:- सः नाभाकः तत्र तस्मिन् मन्दिरे चित्रमाश्चर्यं करोतीति चित्रकृत् आश्चर्यकारि। चित्रकृत् रूपं यासां ताः चित्रकृद्रूपाः आश्चर्यकारिरूपशालिन्यः, ताः चित्रकृद्रूपाः आश्चर्यकारिरूपशालिनीः, सारश्चासौशृङ्गारश्च सारशृङ्गारः। सारशृङ्गारेण हरन्ति इत्येवंशीलाः सारशृङ्गारहारिण्यः, ताः सारशृङ्गारहारिणीः सर्वोत्कृष्टशृङ्गारैः मनोहारिणीः विलसन्तीः विलासं कुर्वाणाः सहस्रशः हरिणस्य अक्षिणीव अक्षिणी यासां ताः हरिणाक्ष्यः ताः हरिणाक्षीः सुन्दरीः निरैक्षिष्ट अद्राक्षीत् ॥२४५॥

सरलार्थः- सः नाभाकः तस्मिन् मन्दिरे आश्चर्यकृद्रूपशालिनीः सर्वोत्कृष्टशृङ्गारेण मनोहारिणीः विलसन्तीः सहस्रशः हरिणाक्षीः सुन्दरीः अपश्यत्॥२४५॥

ગુજરાતી :- પોતાને અપરિચિત તે નુતન પ્રાસાદમાં નાભાક રાજાએ આશ્ચર્યકારક સ્વરૂપવાળી, ઉત્કટ શૃંગારથી ચિત્તને આકર્ષણ કરનારી, મનોહર વિલાસ કરતી હજારો સુંદરીઓને જોઈ. ॥૨૪૫॥

हिन्दी :- राजा ने अपने को अनजान उस नये महल में आश्चर्यकारक रूपवाली उत्तम श्रृंगार से चित्त को हरनेवाली,-हिरनी जैसे नेत्रोंवाली, और मनोहर विलास करती हुई ऐसी हजारो सुंदर स्त्रियों को देखा॥२४५॥

मराठी :- नाभाक राजाने, त्या मंदिरात आश्चर्यकारक रूप असलेल्या उत्तम श्रृंगाराने मनाला हरण करुन घेणाऱ्या, मृगासारखे नयन असलेल्या, आणि मनोहर विलास करणाऱ्या हजारो स्त्रिया पाहिल्या.॥२४५॥

English :- The king found himself lost in this palace. He then happened to see thousands of philandroses with astoned beauty, whose emblishments would drown a man in an ocean of passions and whose eyes could seduce a man.

**तासां मध्यादथोत्थाय स्वामिनी हंसगामिनी ॥**
**योजिताञ्जलिरभ्येत्य सानुरागमदोऽवदत् ॥२४६॥**

अन्वयः- अथ तासां मध्यात् हंसगामिनी स्वामिनी उत्थाय योजिताञ्जलिः अभ्येत्य सानुरागं अदः अवदत् ॥२४६॥

विवरणम्:- *तासां हरिणाक्षीणां मध्यात् तासां स्वामिनी उत्थाय हंस इव गच्छतीत्येवंशीला हंसगामिनी तासां योजितः अञ्जलिः यया सा योजिताञ्जलिः अभ्येत्य नाभिकराजंच अनुरागेण सह यथा स्यात् तथा सानुरागं अदः वक्ष्यमाणं वचनं अवदत् - अब्रवीत् ॥२४६॥*

सरलार्थः- अथ अनन्तरं तासां सुन्दरीणां मध्यात् तासां स्वामिनी हंसगत्या बद्धाञ्जलिः नृपसमीपमागत्य इदं वक्ष्यमाणं वचनमब्रवीत् ॥२४६॥

*गगनचुम्बिनि मन्दिरे स्वच्छेन निर्मलेन मनसा ययौ जगाम ॥२४४॥*

सरलार्थः- आश्चर्यपरिपूर्णमनाः सः तया सह तेजसां समूहेन युक्ते गगनचुम्बिनि मन्दिरे स्वच्छेन मनसा जगाम ॥२४४॥

ગુજરાતી :- ત્યારબાદ આશ્ચર્યથી પૂર્ણ બનેલા હૃદયવાળો નાભાક આકાશમાં વ્યાપી રહેલા તેજના ઝળહળા વાળા એક મહેલમાં તે સ્ત્રી સાથે સ્વચ્છ ચિત્તે ગયો. ॥૨૪૪॥

हिन्दी :- बाद में आश्चर्यचकित सा वह राजा (आसमान) आकाशतक पहुँचे हुए और तेज से प्रकाशमान होनेवाले एक सुंदर महल में उस स्त्री के साथ स्वच्छ चित्त से गया॥२४४॥

मराठी :- नंतर आश्चर्याने युक्त मन असलेला तो राजा प्रकाशाने चमकणाऱ्या गगनचुंबी मंदिरात त्या स्त्री बरोबर स्वच्छ मनानें गेला॥२४४॥

English :- Then the king was overcome with astonishment, when he happened to see a palace, whose pinnacle touched the sky and it was shinning with utmost radiance. He then entered the palace, along with the woman with a clear and a pure mind.

**स तत्र चित्रकृद्रूपाः, सारशृङ्गारहारिणीः ॥**
**हरिणाक्षीर्निरैक्षिष्ट, विलसन्तीः सहस्रशः ॥२४५॥**

अन्वयः- सः तत्र चित्रकृद्रूपाः सारशृङ्गारहारिणीः विलसन्तीः सहस्रशः हरिणाक्षीः निरैक्षिष्ट॥२४५॥

विवरणम्:- *सः नाभाकः तत्र तस्मिन् मन्दिरे चित्रमाश्चर्यं करोतीति चित्रकृत् आश्चर्यकारि। चित्रकृत् रूपं यासां ताः चित्रकृद्रूपाः आश्चर्यकारिरूपशालिन्यः, ताः चित्रकृद्रूपाः आश्चर्यकारिरूपशालिनीः, सारश्चासौशृङ्गारश्च सारशृङ्गारः। सारशृङ्गारेण हरन्ति इत्येवंशीलाः सारशृङ्गारहारिण्यः, ताः सारशृङ्गारहारिणीः सर्वोत्कृष्टशृङ्गारैः मनोहारिणीः विलसन्तीः विलासं कुर्वाणाः सहस्रशः हरिणस्य अक्षिणीव अक्षिणी यासां ताः हरिणाक्ष्यः ताः हरिणाक्षीः सुन्दरीः निरैक्षिष्ट अद्राक्षीत् ॥२४५॥*

सरलार्थ:- स: नाभाक: तस्मिन् मन्दिरे आश्चर्यकृद्रूपशालिनी: सर्वोत्कृष्टशृङ्गारेण मनोहारिणी: विलसन्ती: सहस्रश: हरिणाक्षी: सुन्दरी: अपश्यत्॥२४५॥

ગુજરાતી :- પોતાને અપરિચિત તે નુતન પ્રાસાદમાં નાભાક રાજાએ આશ્ચર્યકારક સ્વરૂપવાળી, ઉત્કટ શ્રૃંગારથી ચિત્તને આકર્ષણ કરનારી, મનોહર વિલાસ કરતી હજારો સુંદરીઓને જોઈ. ॥૨૪૫॥

हिन्दी :- राजा ने अपने को अनजान उस नये महल में आश्चर्यकारक रूपवाली उत्तम श्रृंगार से चित्त को हरनेवाली,-हिरनी जैसे नेत्रोंवाली, और मनोहर विलास करती हुई ऐसी हजारो सुंदर स्त्रियों को देखा॥२४५॥

मराठी :- नाभाक राजाने, त्या मंदिरात आश्चर्यकारक रूप असलेल्या उत्तम श्रृंगाराने मनाला हरण करून घेणाऱ्या, मृगासारखे नयन असलेल्या, आणि मनोहर विलास करणाऱ्या हजारो स्त्रिया पाहिल्या.॥२४५॥

English :- The king found himself lost in this palace. He then happened to see thousands of philandroses with astoned beauty, whose emblishments would drown a man in an ocean of passions and whose eyes could seduce a man.

तासां मध्यादथोत्थाय स्वामिनी हंसगामिनी ॥
योजिताञ्जलिरभ्येत्य सानुरागमदोऽवदत् ॥२४६॥

अन्वय:- अथ तासां मध्यात् हंसगामिनी स्वामिनी उत्थाय योजिताञ्जलि: अभ्येत्य सानुरागं अद: अवदत् ॥२४६॥

विवरणम्:- तासां हरिणाक्षीणां मध्यात् तासां स्वामिनी उत्थाय हंस इव गच्छतीत्येवंशीला हंसगामिनी तासां योजित: अञ्जलि: यया सा योजिताञ्जलि: अभ्येत्य नाभिकराजंच अनुरागेण सह यथा स्यात् तथा सानुरागं अद: वक्ष्यमाणं वचनं अवदत् - अब्रवीत् ॥२४६॥

सरलार्थ:- अथ अनन्तरं तासां सुन्दरीणां मध्यात् तासां स्वामिनी हंसगत्या बद्धाञ्जलि: नृपसमीपमागत्य इदं वक्ष्यमाणं वचनमब्रवीत् ॥२४६॥

ગુજરાતી :- તે સુંદરીઓમાંથી તેઓની સ્વામિની એવી એક અગ્રેસર સ્ત્રી ઊઠીને હંસની જેવી મંદ મંદ ગતિ કરતી નાભાક રાજા પાસે આવી અને બે હાથ જોડી પ્રેમપૂર્વક બોલી કે - ॥૨૪૬॥

हिन्दी :- उन मनोहर सुंदरियोमें से उन की स्वामिनी जैसी एक अग्रेसर ऊठ कर हंस के समान मंद मंद गति से नाभाक राजा के पास आयी और दो हाथ जोड़कर बड़े प्रेम से बोलने लगी॥२४६॥

मराठी :- त्या मनोहर सुंदर स्त्रियांमधून हंसासारखी मंद मंद गतीने त्यांची स्वामिनी उठून नाभाक राजाजवळ आली व दोन्ही हात जोडून मोठ्या प्रेमाने म्हणाली.॥२४६॥

English :- The queen of the philandroses, then came up to the king with graceful slow movements, like a swan and joining her hands spoke to the king with utmost quintessence of love.

**अस्मदीयेन भाग्येन समेतोऽसि गुणोदधे ॥**
**स्त्रीणां राज्यमिदं विद्धि योऽत्रैति पतिरेव नः ॥२४७॥**

अन्वयः- हे गुणोदधे! अस्मदीयेन भाग्येन त्वं समेतःअसि। इदं स्त्रीणां राज्यं विद्धि। यः अत्र ऐति सः नः पतिः एव ॥२४७॥

*विवरणम्:- गुणानामुदधिः गुणोदधिः, तत्सम्बुद्धौ हे गुणोदधे! हे गुणसागर! अस्माकमिदम् अस्मदीयं तेन अस्मदीयेन भाग्येन त्वम् अत्र समेतः प्राप्तः असि। इदं स्त्रीणां राज्यं वर्तते, इति त्वं विद्धि जानीहि। यः अत्र ऐति आगच्छति। सः नः अस्माकं पतिः एव भवति ॥२४७॥*

सरलार्थः- हे गुणसागर! त्वम् अस्माकं भाग्येन अत्र आगतः असि। इदं स्त्रीणां राज्यमस्ति। अत्र यः आगच्छति। सः अस्माकं पतिः एव भवति ॥२४७॥

ગુજરાતી :- "હે ગુણસમુદ્ર! તમે અમારા ભાગ્યથીજ અહીં પધાર્યા છો, આ સ્ત્રીઓનું રાજ્ય છે, અને જે અહીં આવે છે તેને અમે પતિ તરીકે જ માનીએ છીએ" ॥૨૪૭॥

हिन्दी :- "हे गुणसमुद्र! आप हमारे भाग्य से ही यहाँ पधारे है, यह स्त्रियों का राज्य है और यहाँ जो भी आता है उन को हम पति की तरह मानते है॥२४७॥",

मराठी :- हे गुणनिधे! आमच्या भाग्यानेच तुम्ही येथे आलात. हे स्त्रियांचे राज्य आहे आणि जो येथे येतो त्याला आम्ही पति म्हणूनच मानतो.॥२४७॥

English :- Addressing king Nabhak as an ocean of potentialities, the queen said to him that they were fortunate to have him in their midst. She added that this was a kingdom of women and the man who enters here is treated as a husband by one and all.

श्रुत्वेति नृपतिर्दध्यौ संकटान्तरमागतम् ॥
मौनमेवाऽत्र मे श्रेयो मौनं सर्वार्थसाधनम्॥२४८॥

अन्वयः- इति श्रुत्वा नृपतिः दध्यौ - सङ्कटान्तरम् आगतम्। अत्र मे मौनमेव श्रेयः। मौनं सर्वार्थसाधनम् अस्ति॥२४८॥

विवरणम्:- इति स्वामिन्याः वचनं श्रुत्वा नृणां पतिः नृपतिः नृपः दध्यौ चिन्तयामास। इदम् अन्यत् सङ्कटं सङ्कटान्तरम् आगतम् अस्ति। अत्र विषये मे मम मौनमेव मौनधारणमेव श्रेयः कल्याणकारकमस्ति। तथाहि मौनं सर्वे च ते अर्थाश्च सर्वार्थाः। सर्वार्थानां साधनं सर्वार्थसाधनमस्ति। मौनेन सर्वाणि कार्याणि सिध्यन्ति ॥२४८॥

सरलार्थः- इति तासां सुन्दरीणां स्वामिन्याः वचनं श्रुत्वा नृपः व्यचिन्तयत् एतदपरं सङ्कटं अस्ति। अत्र मम मौनमेव श्रेयः। तथाहि - मौनं सर्वार्थसाधकमस्ति ॥२४८॥

ગુજરાતી :- આ પ્રમાણે સ્નેહસહિત પ્રેમાળ વચનવિલાસ સાંભળી રાજા વિચારવા લાગ્યો, "આ વળી મારે માથે બીજું સંકટ આવી પડ્યું! 'ઈતો વ્યાઘ્ર ઈતસ્તતી' એ ન્યાય પ્રમાણે હું પણ અહીં સપડાયો છું. હવે આવા પ્રસંગે મારે મૌન ધારણ કરવું એ જ સર્વથા શ્રેયકર છે, કારણ કે મૌન એ સર્વ ઈચ્છિત વસ્તુનું સાધન છે." ॥૨૪૮॥

हिन्दी :- इस तरह स्नेहयुक्त प्रिय वचन सुनकर राजा सोचने लगा, "अब मुझ पर यह संकट आ गया है," 'इतो व्याघ्र इतस्तथी इस न्याय के समान मैं भी फस गया हूँ, अब इस प्रसंग में मुझे मौन धारण करना ही अच्छा होगा क्योंकि मौन यही सब इच्छित वस्तु का साधन है"॥२४८॥

मराठी :- त्या सुन्दरींच्या स्वामिनीचे ते वचन ऐकून राजा विचारात पडला, ""हे पुन्हा माझ्या डोक्यावर दुसरे संकट येऊन कोसळले, 'इतो व्याघ्रः इतस्तटी' या न्यायाप्रमाणे मी सुद्धा येथे कात्रीत सापडलो आहे. आता अशा प्रसंगामध्ये मला मौन धारण करणे हेच सर्वथा योग्य आहे, कारण मौन हेच सर्व इच्छित वस्तूंचे साधन आहे.''॥२४८॥

English .- Having heard the quintessentializing words of the queen, the king thought that he was now in a hazardous crisis, where he sights death on both the boundaries. So he decides that the best way to be free from such a lurch, is to keep mum.

**इति तूष्णीं स्थिते भूपे, मुख्यादिष्टाः स्त्रियोऽपि ताः ॥**
**स्नानभोजनसामग्रीं, सज्जीकृत्योपतस्थिरे ॥२४९॥**

अन्वयः- इति भूपे तूष्णीं स्थिते मुख्यादिष्टाः ताः स्त्रियः अपि स्नानभोजनसामग्रीं सज्जीकृत्य उपतस्थिरे ॥२४९॥

विवरणम्:- *इति मत्वा भुवं पातीति भूपः तस्मिन् भूपे नृपे तूष्णीं स्थिते सति मुख्यया स्वामिन्या आदिष्टाः मुख्यादिष्टाः स्वामिन्यादिष्टाः ताः स्त्रियः सुन्दर्यः अपि स्नानं च भोजनं च स्नानभोजने। स्नानभोजनयोः सामग्री स्नानभोजनसामग्री तां स्नानभोजनसामग्रीं न सज्जा असज्जा, असज्जां सज्जां कृत्वा सज्जीकृत्य उपतस्थिरे उपस्थिताः बभूवुः ॥२४९॥*

सरलार्थः- इति मौनमेव वरमिति मत्वा भूपः यदा तूष्णीं स्थितः तदा स्वामिन्या आदिष्टाः ताः सर्वाः सुन्दर्यः स्नानस्य भोजनस्य च सामग्रीं सज्जीकृत्य उपस्थिताः अभवन् ॥२४९॥

ગુજરાતી :- આ પ્રમાણે જ્યારે રાજાએ મૌન ધારણ કરી કાંઈ પણ ઉત્તર આપ્યો નહીં ત્યારે તે મુખ્ય સ્વામીનિના હુકમ થી બીજી સુંદરીઓ સ્નાન અને ભોજનની સામગ્રી તૈયાર કરી રાજાની સમક્ષ ઉપસ્થિત થઈ. અને કહ્યું. ॥૨૪૯॥

हिन्दी :- इस तरह जब राजाने मौन धारण कर कोइ भी जवाब नहीं दिया तब मुख्य स्वामिनी के आदेश के अनुसार दूसरी सुंदरियोने स्नान और भोजन की सामग्री तैयार की और वे राजा के सामने उपस्थित हुई और कहा,॥२४९॥

मराठी :- याप्रमाणे जेव्हा राजाने मौन धारण करून काहीच उत्तर दिले नाही तेव्हा मुख्य स्वामिनीच्या आज्ञेप्रमाणे दुसऱ्या सुंदरींनी स्नान आणि भोजनाची सामग्री तयार केली आणि त्या राजा समोर उपस्थित झाल्या. आणि म्हणाल्या,॥२४९॥

English :- when the queen found that king wishes to keep mum, she ordered her mates to arrange for the bath and food for the king.

**प्रसद्य सद्यः प्राणेश! स्नात्वा भुक्त्वा यथारुचि ॥**
**यावज्जीवं सहाऽस्माभि-र्भोगान् भुङ्क्ष्वाऽकुतोभयः ॥२५०॥**

अन्वयः- हे प्राणेश! सद्यः प्रसद्य यथारुचि स्नात्वा भुक्त्वा च अस्माभिः सह यावज्जीवं अकुतोभयः भोगांन् भुङ्क्ष्व॥२५०॥

*विवरणम्:- प्राणानामीशः प्राणेशः तत्सम्बुद्धौ हे प्राणेश! प्राणस्वामिन्! सद्यः शीघ्रं प्रसद्य प्रसन्नो भूत्वा रुचिमनतिक्रम्य यथारुचि स्नात्वा स्नानं कृत्वा भुक्त्वा भोजनं कृत्वा च अस्माभिः सह यावत् जीवसि तावत् यावज्जीवं न विद्यते कुतः भयं यस्य सः अकुतोभयः निर्भयः सन् भोगान् भुङ्क्ष्व उपभुङ्क्ष्व ॥२५०॥*

सरलार्थः- हे प्राणेश। शीघ्रं प्रसन्नो भूत्वा यथारुचि स्नात्वा भोजनं कृत्वाच अस्माभिः सह यावज्जीवं निर्भयः सन् भोगान् भुङ्क्ष्व ॥२५०॥

ગુજરાતી :- "હે પ્રાણેશ! અમારા ઉપર જલ્દી કૃપાદષ્ટિ કરી, સ્નાન અને યથારુચિ ભોજન કરી અમારી સાથે જિંદગીપર્યંત ભોગ ભોગવો, અહીં તમારે કોઈપણ તરફથી કાંઈ પણ ભય રાખવો નહીં." ॥૨૫૦॥

हिन्दी :- "हे प्राणेश! हमारे उपर जल्दी कृपा दृष्टि करके स्नान और यथारुचि भोजन कर के हमारे साथ जीवनपर्यंत भोग भोगो। यहां आप हम किसीसे किसी प्रकार का भय न रखो॥२५०॥"

मराठी :- "हे प्राणेश! आमच्या वर त्वरित कृपादृष्टी करुन स्नान आणि रूचीनुसार भोजन करून आमच्या सोबत आयुष्यभर भोग भोगा, येथे आमच्यापैकी कोणाकडूनही कोणत्याही प्रकारची भिती बाळगू नका.॥२५०॥"

English :- When this was arranged, they, addressing King Nabhak as their husband, asked him to have a bath and food according to his likes and dislikes and thereafter continue staying with them for his whole life, experiencing the pleasures of seductive passions and joy.

**एवं वदन्त्यः शीताम्भःसिता-द्राक्षाम्भसी अपि ॥**
**सिताघृतपुरःस्निग्ध - पायसादि च तत्पुरः ॥२५१॥**
**प्रदर्श्य चाटुभिर्वाक्यै - रूपसर्गाननेकशः ॥**
**पूर्व - कृत्वाऽनुकूलांस्ताः, प्रतिकूलानपि व्यधुः ॥२५२॥**

अन्वयः- एवं वदन्त्यः शीताम्भः सिता - द्राक्षाम्भसी अपि सिताघृतपुरःस्निग्धपायसादि च तत्पुरः (अग्रिमेण श्लोकेन सम्बन्धः) ॥२५१॥

प्रदर्श्य पूर्व चाटुभिः वाक्यैः अनेकशः अनुकूलान् उपसर्गान् कृत्वा ताः प्रतिकूलानपि उपसर्गान् व्यधुः ॥२५२॥

विवरणम्:- *एवं वदन्त्यः ब्रुवत्यः ताः सुन्दर्यः तस्य नाभाकस्य पुरः पुरतः शीतं च तद् अम्भःच शीताम्भः, सुरभिशीतलजलं, सिता शर्करा च द्राक्षाम्भश्च सिताद्राक्षाम्भसी शर्कराद्राक्षोदके सिताच घृतंच सिताघृते। सिताघृताभ्यां युक्तं स्निग्धं स्वादिष्टं पायसादि दूधपाकदिमिष्टान्नम् ॥२५१॥*

*प्रदर्श्य दर्शयित्वा पूर्व प्रथमं चाटुभिः मधुरैः वाक्यैः वचनैः अनेकशःअनेकान् अनुकूलान् उपसर्गान् कृत्वाऽनन्तरं ताः प्रतिकूलानपि उपसर्गान् व्यधुः चक्रुः ॥२५२॥*

सरलार्थः- एवं वन्दत्यः ताः सुन्दर्यः नाभाकस्य पुरः सुरभिशीतलं जलं सितां द्राक्षाम्भः शर्करापृतयुक्तं स्निग्धं दुग्धपाकादिमिष्टान्नम् (अग्रिमेन श्लोकेन संबंन्ध) ॥२५१॥

ताः प्रदर्श्य प्रथमं मधुरैः वचनैः अनुकूलान् अनेकशः उपसर्गान् चक्रुः। ततः प्रतिकूलानपि उपसर्गात् व्यधुः ॥२५२॥

ગુજરાતી :- આ પ્રમાણે બોલાતી તે મનહરણી સુંદરીઓએ નાભાક રાજા આગળ શીતલ અને સુવાસિત જલ, સાકર અને દ્રાક્ષનું પાણી, ઘી અને સાકર નાખી સ્વાદિષ્ટ બનાવેલા દૂધપાક વિગેરે મિષ્ટાન્ન દેખાડી મીઠાં મીઠાં વચનો વડે. ॥૨૫૧॥

પહેલાં તો અનુકૂલ ઉપસર્ગો કર્યા, અને ત્યાર પછી અનેક પ્રતિકૂલ ઉપસર્ગો કરવા માંડ્યા ॥૨૫૨॥

हिन्दी :- इसप्रकार बोलती हुई उन मनोहर सुंदरियों ने नाभाक राजा के सामने शीतल और सुंगधित जल (पाणी), सक्कर और अंगुर का पाणी घी और सक्कर मिलाकर स्वादिष्ट तैयार किया हुआ दुधपाक आदि मिष्टान्न दिखा कर मधुर एवं प्रिय वचनों के द्वारा पहेले तो अनेक अनुकूल उपसर्ग किये और उसके बाद अनेक प्रतिकूल उपसर्ग करने लगीं। ॥२५१॥ ॥२५२॥

मराठी :- असे बोलत असलेल्या त्या मनोहर सुंदरीनी नाभाक राजा समोर शीतल आणि सुवासिक जल (पाणी), साखर आणि द्राक्षाचा रस, तूप आणि साखर यालून स्वादिष्ट बनविलेला दूधपाक वगैरे मिष्टान्न ठेवून प्रथम गोड गोड मधुर वचनांनी अनेक अनुकूल उपसर्ग केले, आणि त्यानंतर त्या अनेक प्रतिकूल उपसर्ग करू लागल्या.॥२५१॥ ॥२५२॥

English :- Having spoken in a quintessentializing tone, the philandroses, offered King Nabhak chilled and scented water diluted with sugar, grape juice, a sweet dish made out of milk, pure ghee and sugar, and delicious sweetmeats. At firot they began pressing him to have those snacks with utmost importunateness. When they noticed that the King had still not touched those snacks, they began to utilze refract and perverse means.

**तथाप्यक्षुब्धचेताः स, धर्मे यावदवस्थितः ॥**
**श्री शत्रुञ्जयश्रृङ्गस्थं, तावदात्मानमैक्षत ॥२५३॥**

अन्वयः- तथापि अक्षुब्धचेताः सः यावत् धर्मे अवस्थितः तावत् आत्मानं श्री शत्रुञ्जयशृङ्गस्थं ऐक्षत ॥२५३॥

विवरणम्:- तथापि ताभिः सुन्दरीभिः अनेकशः अनेकेषु अनुकूलेषु प्रतिकूलेषुच उपसर्गेषु कृतेष्वपि न क्षुब्धम् अक्षुब्धम्। अक्षुब्धं चेतः यस्य अक्षुब्धचेताः क्षोभरहितमनाः स नाभाकः यावत् धर्मे अवस्थितः तावत् आत्मानं श्रिया युतः शत्रुञ्जयः श्रीशत्रुञ्जयः। श्रीशत्रुञ्जयस्य शृङ्गं श्रीशत्रुञ्जयशृङ्गम्। श्रीशत्रुञ्जयशृङ्गे तिष्ठतीति श्रीशत्रुञ्जयशृङ्गस्थः तं श्रीशत्रुञ्जयशृङ्गस्थं श्रीशत्रुञ्जयशिखरस्थितम् ऐक्षिष्ट अद्राक्षीत् ॥२५३॥

सरलार्थः- ताभिः सुन्दरीभिः अनुकूलप्रतिकूलोपसर्गान् कृत्वा क्षोभितः अपि सः नाभाकः अक्षुब्धचेताः धर्मे एव अवस्थितः । तदा स आत्मानं श्रीशत्रुञ्जय शिखरस्थितम् अपश्यत् ॥२५३॥

ગુજરાતી :- તે સ્ત્રીઓએ અનેક અનુકૂલ અને પ્રતિકૂલ ઉપસર્ગો કરવા છતાં પણ જ્યારે અસ્ખલિત ચિત્તવાળો નાભાક જરા માત્ર નહીં ડગતા ધર્મ ધ્યાનમાં જ લીન રહ્યો, તેવામાં પોતાને શ્રી શત્રુંજય પર્વતના શિખર ઉપર જોયો. ॥૨૫૩॥

हिन्दी :- उन स्त्रियोंने अनेक अनुकूल और प्रतिकूल उपसर्ग करने पर भी जब अस्खलित चित्तवाला नाभाकराजा जरा भी विचलित न होकर निरंतर अपने धर्मध्यान में लीन रहा उतने में राजाने स्वयं को श्री शत्रुंजय पर्वत के शिखर पर पाया।

मराठी :- त्या स्त्रियांनी अनेक अनुकूल आणि प्रतिकूल उपसर्ग केल्यानंतर देखील मनात यत्किंचित्ही क्षोभ उत्पन्न होऊ न देता तो नाभाक राजा जराही न डगमगता धर्मध्यानात स्थिर राहिला. तेवढ्यात स्वतःला राजाने श्री शत्रुंजय पर्वताच्या शिखरावर पाहिले.॥२५३॥

English :- Even after using importunate means at first and then refract mean to make the king wilt from his vow, the king remained tongue-tied and did not divulge from his vow and remained firm on his part, and only allowed his mind to wander towards the Lord. He the suddenly found himself on the peak of mount Satrunjay.

**अहो! किमेतदित्येवं, साश्चर्ये नृपपुङ्गवे॥**
**सौरभ्याकृष्टभृङ्गालि:, पुष्पवृष्टिर्दिवोऽपतत् ॥२५४॥**

अन्वय:- अहो! एतत् किं? इत्येवं साश्चर्ये नृपपुङ्गवे दिव: सौरभ्याकृष्टभृङ्गालि: पुष्टवृष्टि: अपतत् ॥२५४॥

विवरणम्:- *अहो! एतं किम्? इति एवं आश्चर्येण सह वर्ततेऽसौ साश्चर्य: तस्मिन् साश्चर्ये विस्मिते नृपपुङ्गवे नृपश्रेष्ठे सति दिव: आकाशात् सुरभे: भाव: सौरभ्यम्। सौरभ्येन आकृष्टा भृङ्गानां भ्रमराणामालि: पङ्क्ति: यया सा सौरभ्याकृष्टभृङ्गालि: सुरभिगन्धाकृष्टभ्रमरपङ्क्ति: पुष्पाणां वृष्टि: पुष्पवृष्टि: अपतत् निपपात ॥२५४॥*

सरलार्थ:- अहो! एतत् किं? इति नृपश्रेष्ठे नाभाके विस्मिते सति आकाशात् सुगन्धिपुष्पवृष्टि: अपतत्। या सुगन्धेन भ्रमरपङ्क्तिमाकर्षत् ॥२५४॥

ગુજરાતી :- **'અહો! આ તે શું સ્વપ્ન છે કે સાચો બનાવ છે?' એ પ્રમાણે આશ્ચર્યમાં ગરકાવ બનેલો નૃપવર વિચાર કરે છે તેવામાં આકાશમાંથી પુષ્પોની વૃષ્ટિ થઈ ॥૨૫૪॥**

हिन्दी :- "अरे! यह क्या स्वप्न है या सत्य घटना है?" इस प्रकार आश्चर्य में डुबा वह राजा विचार करता है उतने में आसमान से सुगंध खींचकर लायी हुई भ्रमरों की पंक्तिसे व्यास फूलों की वर्षा हुई॥२५४॥

मराठी :- "अरे! हे काय?" असे म्हणून आश्चर्यचकित झालेल्या राजावर आकाशातून सुगंधामुळे भुंग्याच्या पंक्तींना आकर्षून घेणाऱ्या सुगंधी फुलांची वृष्टि झाली.॥२५४॥

English :- At this astonishing incident, the King wondered if he was in a trance or was it a dream. Just then, there was a shower of flowers, whose fresh odoriferousness attracted many black wasps.

पुरः सुरः स्फुरत्कान्तिः कश्चित् काञ्चनकुण्डलः ॥
प्रादुर्भूयेत्यभाषिष्ट, कुर्वन् जयजयारवम् ॥२५५॥

अन्वयः:- तदा काञ्चनकुण्डलः स्फुरत्कान्तिः जयजयारावं कुर्वन् कश्चित् सुरः पुरः प्रादुर्भूय इति अभाषिष्ट ॥२५५॥

विवरणम्:- *तदा तस्मिन् समये काञ्चने कुण्डले यस्य सः काञ्चनकुण्डलः सुवर्णकुण्डलः स्फुरन्ती कान्तिः यस्य सः स्फुरत्कान्तिः कान्तिमान् जय जय इति आरावः जयजयारावः तं जयजयारावं जयजयकारं कुर्वन् विदधत् कश्चित् सुरः देवः पुरः पुरतः प्रादुर्भूय प्रकटीभूय इति वक्ष्यमाणम् अभाषिष्ट बभाषे ॥२५५॥.*

सरलार्थ:- तदा सुवर्णकुण्डलः कान्तिमान् कश्चित् सुरः जयजयारावं कुर्वन् पुरतः प्रादुर्भूय इति अभाषिष्ट ॥२५५॥

**ગુજરાતી :-** **તથા તેની સન્મુખ સુવર્ણકુંડલ ધારણ કરનાર, દેદીપ્યમાન કાંતિવાળા અને 'જય જય' શબ્દોનો ગુંજારવ કરતા કોઈક દેવે પ્રગટ થઈને કહ્યું, ॥૨૫૫॥**

हिन्दी :- और सुवर्णकुंडल धारणकर देदीप्यमान कांतियुक्त किसी देवने 'जय जय' शब्द का उद्घोष करते हुए उनके सामने प्रगट होकर कहा,॥२५५॥

मराठी :- आणि तेव्हा त्याच्या सन्मुख सुवर्णकुंडल धारण करणारा, देदीप्यमान, कांतियुक्त असा कोणी एक देव 'जय जय' शब्दांचा उद्घोष करीत प्रगट होऊन म्हणाला,॥२५५॥

English :- All of a sudden, he happened to see a God who had worn a large ring in his ear and whose resplendence and splendor was beyond compare. He began singing out slogans of cheers in honour of King Nabhak when he revealed himself.

तव प्रशंसां सद्धर्मन्! सौधर्मस्वामिनिर्मिताम् ॥
असासहिरहं सर्व - मकार्षमिदमीदृशम् ॥२५६॥

अन्वय:- हे सद्धर्मन्! सौधर्मस्वामिनेर्मातां तव प्रशंसां असासहिः अहम् इदम् ईदृशं सर्वम् अकार्षम् ॥२५६॥

विवरणम्:- सन् धर्मः यस्य सः सद्धर्मा तत्सम्बुद्धौ हे सद्धर्मन्! सौधर्मस्य स्वामी सौधर्मस्वामी। सौधर्मस्वामिना निर्मिता सौधर्मस्वमिनिर्मिता, तां सौधर्मस्वामिनिर्मितां सौधर्मेन्द्रकृतां तव प्रशंसां स्तुतिं न सासहात्तेऽसौ असासहिः असहमानः अहम् इदम् ईदृशं सर्वम् अकार्षम् अकरवम् ॥२५६॥

सरलार्थ:- हे सद्धर्मन्! सौधर्मे देवलोके सौधर्मस्वामिना कृतां तव प्रशंसाम् असहमानः अहम् इदम् ईदृशं सर्वम् अकार्षम् ॥२५६॥

ગુજરાતી :- "હે ધાર્મિક શિરોમણિ! દેવલોકમાં સૌધર્મેન્દ્રે કરેલી તમારી પ્રશંસા સહન ન થવાથી પરીક્ષા માટે મેં આ સર્વ કાર્ય કર્યું છે."॥૨૫૬॥

हिन्दी :- "हे धर्म शिरोमणि! देवलोक में सौधर्मन्द्र द्वारा की गई प्रशंसा सहन न होने के कारण मैंने तुम्हारी परीक्षा करने के लिये यह सब कार्य किया॥२५६॥"

मराठी :- "हे धर्मशिरोमणे! देवलोकामध्ये सौधर्मेन्द्राने केलेली तुझी प्रशंसा सहन न झाल्यामुळे तुझी परीक्षा घेण्यासाठी मी असे हे सर्व कार्य केले आहे."॥२५६॥

English :- The God addressing him as a religious and a prominent personality, said to him that he could'nt bear his praises being blurted out in Indra's court. So in order to test his controllability, as a celibatarian he had created such a scene.

**तत् क्षमस्व महाभाग! यदेवं क्लेशितो भवान्॥**
**तुष्टोऽस्मि तव सत्त्वेन, वरं वृणु वरं वृणु ॥२५७॥**

अन्वयः- हे महाभाग! यद् एवं भवान् क्लेशितः। तत्क्षमस्व। अहं तव सत्त्वेन तुष्टः अस्मि। वरं वृणु। वरं वृणु ॥२५७॥

*विवरणम्:- महान् भागः यस्य सः महाभागः, तत्सम्बुद्धौ हे महाभाग! भाग्यशालिन्! मया यद् यस्मात् कारणात् भवान् एवं क्लेशितः क्लेशं दुःखं प्रापितः। तत् क्षमस्व। अहं तव सत्त्वेन तुष्टः अस्मि। अतः इष्टं वरं वृणु। वरं वृणु।*

सरलार्थः- हे महाभाग। मया भवान् क्लेशं प्रापितः, तत्क्षमस्व। अहं तव सत्त्वेन तुष्टः अस्मि। त्वं वरं वृणु। वरं वृणुम् ॥२५७॥

ગુજરાતી :- "હે મહાભાગ્યશાલી! જે મેં તમને દુઃખ આપ્યું તે બદલ ક્ષમા કરો. હું તમારા સત્ત્વથી સંતુષ્ટ થયો છું, માટે જે તમારે જોઈએ તે વરદાન માગી લ્યો" ॥૨૫૭॥

हिन्दी :- "हे महाभाग्यशाली! मैने आपको जो दुःख दिया उस के लिए क्षमा करो। मैं तुम्हारे सत्व से संतुष्ट हो गया हूँ, इसलिये तुम्हे जो वरदान चाहिये वह मांग लो"॥२५७॥

मराठी :- "हे महाभाग्यशाली! मी तुम्हाला दुःख दिले त्या बदल मला क्षमा करा. मी तुमच्या सत्वाने संतुष्ट झालो आहे, म्हणून तुम्हाला जो पाहिजे तो वर मागून घ्या.॥२५७॥

English :- The God then addressing him as a man of providence, asked for apolozies, as he had put him into an incommodious situation. He added that he was pleased with him and therfore requested him to ask for a boon.

राजाऽवोचन्न याचेऽहं - मासधर्मधनः परम् ।
परं सीमन्धरस्वामि-निनंसां मम पूरय ॥२५८॥

अन्वयः- राजा अवोचत् - आसधर्मधनः अहं परं न याचे। परं मम सीमन्धरस्वामिनिनंसां पूरय ॥२५८॥

विवरणम्:- राजा नाभाकः अवोचत् - आसं प्राप्तं धर्मः एव धनं येन सः आसधर्मधनः अहं परं अन्यं न याचे न वन्वो परन्तु मम सीमन्धरः एव स्वामी सीमन्धरस्वामी सीमन्धरस्वामिनं नन्तुमिच्छा निनंसा, तां निनंसां पूरय। अहं सीमन्धरस्वामिनं नन्तुमिच्छामि अतः त्वं मम नमनेच्छां पूरय ॥२५८॥

सरलार्थः- राजा नाभाकः अवोचत् - मया धर्मधनं प्राप्तमस्ति। अहं परं न याचे। किन्तु केवलं सीमन्धरस्वामिनं नन्तुमिच्छामि। मम तां इच्छां पूरय ॥२५८॥

ગુજરાતી :- રાજાએ કહ્યું, "મેં ધર્મરૂપી અખૂટ ખજાનો પ્રાપ્ત કરેલો હોવાથી મારે માગવાનું કાંઈ રહ્યું નથી, પણ મારે શ્રીસીમંધર સ્વામીને વંદન કરવાની ઈચ્છા છે તે પૂર્ણ કરો" ॥૨૫૮॥

हिन्दी :- तब राजाने कहा, "मुझे धर्मरुपी कभी न खत्म होनेवाला खजाना प्राप्त हुआ है इसलिये मुझे मागने जैसा कुछ भी रहा नहीं है, पर मुझे श्रीसीमन्धर स्वामी को प्रणाम करने की इच्छा है वह तुम पूरी करवाओ." ॥२५८॥

मराठी :- राजा म्हणाला, "मी धर्मरूपी कधी ही न संपणारा खजीना प्राप्त केलेला आहे. त्यामुळे दुसऱ्याजवळ काहीही मागत नाही, पण मला श्रीसीमंधर स्वामीना नमस्कार करण्याची इच्छा आहे ती इच्छा तुम्ही पूर्ण करा." ॥२५८॥

English :- At this the King replied that he has attained a never ending wealth of the knowledge of religion. So there is nothing left worth asking as there is nothing more worthful as religious knowledge. But he adds that he wishes to make his obeisance to Lord Simander. So he requests the God to make the necessary arrangements.

अथो देवगुरून्नत्वा, सत्त्वाधिकशिरोमणिः ॥
नाकिक्लृप्तविमानेन, विदेहेषु ययौ नृपः ॥२५९॥

अन्वयः:- अथो सत्त्वाधिकशिरोमणिः नृपः देवगुरून् नत्वा नाकिक्लृप्तविमानेन विदेहेषु ययौ ॥२५९॥

*विवरणम्:- अथो अनन्तरं सत्त्वेन अधिकाः सत्वाधिकाः (सत्वमधिकं येषां ते सत्त्वाधिकाः इति वा) सत्त्वाधिकानां शिरोमणिः सत्त्वाधिकशिरोमणिः सत्त्वशाल्यग्रेसरः न्नन् पातीति नृपः नाभाकः देवाश्च गुरवश्च देवगुरवः तान् देवगुरून् नत्वा सुरेण क्लृप्तं रचितं नाकिक्लृप्तम्। नाकिक्लृप्तं च तद् विमानं च नाकिक्लृप्तमनं, तेन नाकिक्लृप्तविमानेन सुररचितविमानेन विदेहेषु क्षेत्रेषु ययौ जगाम ॥२५९॥*

सरलार्थः:- अनन्तरं सत्त्वशालिशिरोमणिः नृपः नाभाकः देवगुरून् नत्वा सुररचितविमानेन विदेहेषु ययौ ॥२५९॥

ગુજરાતી :- ત્યાર બાદ દેવે વિમાન બનાવ્યું, તેની અંદર સત્ત્વશાળી, પુરુષોમાં શિરોમણિ નાભાક રાજા દેવ ભગવાન અને ગુરુને નમસ્કાર કરી બેઠો, અને દેવની સહાયથી તે વિમાન વડે મહાવિદેહ ક્ષેત્રમાં જ્યાં શ્રીસીમંધર સ્વામી બિરાજેલા હતા ત્યાં ગયો. ॥૨૫૯॥

हिन्दी :- तब बाद में देवने विमान तैयार किया, उस में सत्वशील पुरुष के शिरोमणि नाभाक राजा देव (भगवान) और गुरु को प्रणाम कर के बैठ गया और उस देव की सहायता से वह विमान जहाँ महाविदेह क्षेत्र मे श्री सीमंन्धर स्वामी विराजमान थे वहाँ गया।

मराठी :- त्यानंतर अत्यन्त सत्त्वशील, लोकात श्रेष्ठ असलेला नाभाक राजा देव (भगवान) आणि गुरूंना नमस्कार करुन देवांनी तयार केलेल्या विमानाने विदेह क्षेत्रात गेला.॥२५९॥

English :- Then the God prepared a plane, which would take them to the *Mahavedeha Schetra* where the Lord, Simandhar's glory and power reigns. Then saluting the almighty God and his spirit'al instructor, King Nabhak boarded the plane and in due-course reuched his destination.

तत्राऽष्टप्रातिहार्यश्री-सेव्यं सीमन्धरं जिनम् ॥
नत्वाऽपृच्छच्चिरत्नो मेऽन्तरायः कोऽयमित्यसौ ॥२६०॥

अन्वयः:- असौ तत्र अष्टप्रातिहार्यश्रीसेव्यं सीमन्धरं जिनं नत्वा अपृच्छत् - मम कोऽयं चिरत्नः अन्तरायः अस्ति? ॥२६०॥

विवरणम्:- असौ नाभाकः तत्र विदेहेषु अष्टौ प्रातिहार्याणि एव श्रीः अष्टप्रातिहार्यश्रीः। अष्टप्रातिहार्य-श्रिया सेव्यं श्रीसेव्यं सीमन्धरं जिनं नत्वा वन्दित्वा अपृच्छत् - मम अयं कः चिरत्न चिरन्तनः अन्तरायः विघ्नः अस्ति? इति ॥२६०॥

सरलार्थ:- असौ नाभाकः तत्र विदेहेषु अष्टप्रातिहार्यश्रिया सेवितुं योग्यं श्रीसीमन्धरं जिनं नत्वाऽपृच्छत् - मम अयं कः चिरंतनः अन्तरायः अस्ति । इति ॥२६०॥

ગુજરાતી :- ત્યાં આઠ મહાપ્રાતિહાર્યરૂપ લક્ષ્મી વડે સેવાતા શ્રીસીમન્ધર જિનેન્દ્રને વંદન કરી પૂછ્યું, 'હે પ્રભો! મને ઘણા લાંબા કાળથી શું અંતરાય કર્મ લાગ્યું છે.?' ॥૨૬૦॥

हिन्दी :- उस आठ महाप्रतिहार्यरूप लक्ष्मी द्वारा सेवित श्रीसीमन्धर जिनेन्द्र को प्रणाम कर के पूछा, ''हे प्रभो! मुझे बहुत लंबे समय से, क्या अंतराय कर्म लगा है?''॥२६०॥

मराठी :- त्या नाभागाने महाविदेक्षेत्रात आठ महाप्रातिहार्यरूपी लक्ष्मी ज्यांची सेवा करीत आहे. अशा श्रीसीमन्धर स्वामींना नमस्कार करून विचारले, ''हे प्रभो । मला कित्येक दिवसापासून कोणते अंतराय कर्म त्रास देत आहे.''

English :- When he reached there he happened to see the eight Laxmi's in the form of the eight *Mahapratiharyiea's* deeply engrossed in vendering their humble services to the almighty Simandar. Paying his homage to the Lord, the king asked him for how long would the disturbances of his past sins would keep causing a fracas in his life.

Note - *Mahapratiharyea's.*

1) The *Ashoka* tree,
2) The ordinary Gods showering flowers, (*Pushe Vrusti*)
3) Playing the divine musical instruments, (*Divye Dhuani*)
4) *Chamar* (A fan prepared out of the tail of a specific cow-*chamri*)
5) The Throne (*Sihasan*)
6) Halo (*Bhamandal*)
7) Kettle drums (*Dundubhi*)
8) The royal Umberalla (*Chhatra*)

**समुद्रसिंहयोर्नागगोष्ठिकस्य च सा कथा ॥**
**यथा युगन्धराचार्यैः प्रोक्ता स्वामी तथाऽऽदिशत् ॥२६१॥**

अन्वयः- समुद्रसिंहयोः नागगोष्ठिकस्य च सा कथा युगन्धराचार्यैः यथा प्रोक्ता तथा स्वामी आदिशत् ॥२६१॥

*विवरणम्:- समुद्रश्च सिंहश्च समुद्रसिंहौ, तयोः समुद्रसिंहयोः, नागश्चासौ गोष्ठिकश्च नागगोष्ठिकः तस्य नागगोष्ठिकस्य च कथा युगन्धराचार्यैः यथा प्रोक्ता कथिता तथा सीमन्धरस्वामी आदिशत् अकथयत् ॥२६१॥*

सरलार्थः- समुद्रसिंहयोः नागगोष्ठिकस्य च कथा युगन्धराचार्यैः यथा कथिता तथैव सीमन्धरस्वामी तां कथाम् अकथयत् ॥२६१॥

**ગુજરાતી :- આ પ્રમાણે નાભાક રાજાનો પ્રશ્ન સાંભળી પ્રભુ શ્રી સીમંધર સ્વામીએ જેવી રીતે યુગંધરાચાર્યે સમુદ્રપાલ સિંહ અને નાગગોષ્ઠિકની કથા કહી હતી તેવી રીતે સંપૂર્ણ કથા કહી ॥૨૬૧॥**

हिन्दी :- इस तरह का नाभाकराजा का सवाल सुनकर प्रभु श्री सीमन्धरस्वामीने श्री युगन्धराचार्य ने समुद्रपाल, सिंह और नागगोष्ठिक की कथा जैसे कही थी, उसी प्रकार पूर्णतया कही॥२६१॥

मराठी :- असा नाभाकराजाचा प्रश्न ऐकून प्रभु श्री युगन्धराचार्यांनी समुद्रपाल सिंह आणि नागगोष्ठिक यांची कथा जशी सांगितली होती. तशीच सीमंधर स्वामींनी सांगितली.॥२६१॥

English :- Having heard the query of King Nabhak, the Lord narrated to him the two biographies of Samudrapal-Sihe and Nag, just as the rev priest Yughandar had narrated.

**पुनः प्राह प्रभुर्भूपं न पूर्वकृतकर्मतः ॥**
**विमुच्येत क्वचित् कोऽपि त्वमेवास्य निदर्शनम् ॥२६२॥**

अन्वयः- प्रभुः पुनः भूपं प्राह - कोऽपि क्वचिदपि पूर्वकृतकर्मतः न विमुच्येत। अस्य त्वमेव निदर्शनमसि ॥२६२॥

*विवरणम्:- प्रभुः सीमन्धरस्वामी पुनः भुवं पातीति भूपः तं भूपं नृपं प्राह ब्रवीति स्मा कः अपि क्वचिदपि पूर्वं कृतं पूर्वकृतम्। पूर्वकृतं च तत्कर्म पूर्वकृतकर्म तस्मात् पूर्वकृतकर्मतः न विमुच्येत। अस्य त्वम् एव निदर्शनम् उदाहरणमसि ॥२६२॥*

सरलार्थः- प्रभुः सीमन्धरस्वामी पुनः भूपं अब्रवीत्। कोऽपि जीवः कदाचिदपि पूर्वकृतकर्मणः मुक्तो न भवति। अस्य त्वमेवोदाहरणमसि ॥२६२॥

ગુજરાતી :- વળી પ્રભુએ રાજાને કહ્યું, 'પૂર્વભવના કર્મબંધનમાંથી કોઈપણ કદાપિ છૂટી શકતું નથી, તે સબંધમાં તુ જ પોતે દૃષ્ટાંતરૂપ છે.' ॥૨૬૨॥

हिन्दी :- फिर प्रभु ने राजा से कहा, "पूर्व जन्म मे उपार्जित किये हुए कर्म भोगे बिना कोइ भी प्राणी कभी छूट नहीं सकता, इस सम्बन्ध में तू स्वयं ही दृष्टान्तरूप है॥२६२॥"

मराठी :- सीमंधर स्वामी पुन्हा राजाला म्हणाले, "पूर्वजन्मी उपार्जित केलेले कर्म भोगल्याशिवाय कोणी ही प्राणी केव्हा ही सुटू शकत नाही, या संदर्भात तू स्वतःच दृष्टान्त आहेस.॥२६२॥"

English :- Then the Lord said that every man is bound to pay for his sinful deeds of his past lives. So the Lord says that the King has become a historicist of his own life.

**त्वया सिंहभवे यात्राऽन्तरायोऽकारि बान्धवम् ॥**
**धारयित्वा स विज्ञेयो वृद्धः सोपानलोढकः ॥२६३॥**

अन्वयः:- त्वया सिंहभवे बान्धवं धारयित्वा यात्रान्तरायः अकारि। सः अन्तरायः सोपानलोढकः वृद्धः विज्ञेयः ॥२६३॥

*विवरणम्:- त्वया सिंहस्य भवः सिंहभवः तस्मिन् सिंहभवे बान्धवं धारयित्वा यात्रायाम् अन्तरायः प्रत्यूहः यात्रान्तरायः यात्राप्रत्यूहः अकारि सः अन्तरायः एव सोपानात् लोढकः सोपानलोढकः वृद्धः पुरुषः विज्ञेयः विज्ञातव्यः ॥२६३॥*

सरलार्थः:- हे राजन्। त्वया सिंहस्य भवे समुद्रपालस्य भ्रातुः यात्रायाम् अन्तरायः अकारि। सः अन्तरायः एव सोपानलोढकः वृद्धः विज्ञेयः ॥२६३॥

**ગુજરાતી :- "તેં સિંહના ભવમાં તારા ભાઇ સમુદ્રપાલને યાત્રા કરતાં અટકાવી અંતરાય કર્યો હતો, અને તેથી તે અંતરાય કર્મ ઉપાર્જન કર્યું હતું, તે અંતરાય કર્મ જ તને પહેલે પગથીયેથી ગબડાવનાર વૃદ્ધ પુરુષ જાણવો. ॥૨૬૩॥**

हिन्दी :- तुमने सिंह के जन्म में अपने भाई समुद्रपाल को यात्रा करने से रोक कर अन्तराय उत्पन्न किया और इससे तुमने अन्तराय कर्म उपार्जन किया, वह अन्तराय कर्म ही तुझे पहली सीढी से गिरानेवाला वृद्ध पुरुष समझ"॥२६३॥

मराठी :- तू सिंहाच्या जन्मी तुझ्या भावाला यात्रेस जातांना रोखून विघ्न उपस्थित करून अंतरायरूपी कर्म (पाप) उपार्जित केले, ते अन्तराय कर्मच तुला पहिल्या पायरीपासून लोटून देणारा म्हातारा पुरुष होता असं समज.॥२६३॥

English :- The Lord then says that the fracas that has been caused regarding his past sinful deeds is because he, during his birth as Sihe, had stopped his brother Samudrapal from carrying out the pilgrimage and so this sinful deed had caused the fall from the first step, in the form of an aged man.

असौ नागस्य जीवोऽपि चन्द्रादित्यभवे पुरा ॥
क्षालिताखिलासत्कर्मा सौधर्मेऽजनि निर्जरः ॥२६४॥

अन्वयः:- असौ नागस्य जीवः अपि पुरा चन्द्रादित्यभवे क्षालिताखिलासत्कर्मा सौधर्मेनिर्जरः अजनि॥२६४॥

विवरणम्:- असौ नागस्य जीवः अपि पुरा चन्द्रादित्यस्य भवः चन्द्रादित्यभवः, तस्मिन् चन्द्रादित्यभवे अखिलानि च तानि असत्कर्माणि च अखिलासत्कर्माणि। क्षालितानि अखिलासत्कर्माणि येन सः क्षालिताखिलासत्कर्मा सौधर्मे देवलोके निर्गता जरा यस्मात् सः निर्जरः देवः अजनि॥२६४॥नागस्य जीवः चन्द्रादित्यभवे सर्वाणि असत्कर्माणि क्षालयित्वा सौधर्मे देवलोके देवः अजनि ॥२६४॥

सरलार्थः:- असौ त्वया सह आगतः देवः नागस्य जीवः अस्ति। असौ पुरा चन्द्रादित्यस्य भवे सकलपापकर्माणि विनाश्य सौधर्मे देवः अजनि ॥२६४॥

ગુજરાતી :- વળી જે આ તારી સાથે દેવ આવેલો છે તે નાગશ્રેષ્ઠીનો જીવ છે, તેણે પહેલાં ચન્દ્રાદિત્યના ભવમાં પુણ્યકર્મ વડે સમગ્ર પાપ પ્રક્ષાલન કર્યું, અત્યારે તે સૌધર્મ દેવલોકમાં દેવતા થયો છે. ॥૨૬૪॥

हिन्दी :- और तेरे साथ यह जो देव आया हुआ है वह नागश्रेष्ठि का जीव है, वह पहले चंद्रादित्य के जन्म में पुण्यों के द्वारा सभी पापों का प्रक्षालन कर के अभी सौधर्म देवलोक में देव हुआ है॥२६४॥

मराठी :- आणि तुझ्या सोबत असलेला हा देव नागश्रेष्ठीचा जीव आहे. त्याने चन्द्रादित्याच्या जन्मी पुण्यकर्मामुळे सगळे पाप पुऊन टाकले व तो आता सौधर्म देवलोकांत देव झाला आहे.॥२६४॥

English :- He continued saying that the God that has arrived there along with the king, is none other than the soul of *Nag*, who had cleased himself from his past sins, by performing meritorious deed during his birth as Chandraditya and therfore was born as a God in the heaven named *Saudharme*.

**इति सीमन्धरस्वामी-मुखात्तौ चरितं निजम् ॥**
**श्रुत्वा प्रीतौ जिनं नत्वा, शत्रुञ्जयमगच्छताम् ॥२६५॥**

अन्वयः:- इति सीमन्धरस्वामिमुखात् निजं चरितं श्रुत्वा प्रीतौ तौ जिनं नत्वा शत्रुञ्जयम् अगच्छताम् ॥२६५॥

विवरणम्:- *इति इत्थं सीमन्धरस्वामिनः मुखं सीमन्धरस्वामिमुखं, तस्मात् सीमन्धरस्वामिमुखात् निजं चरितं श्रुत्वा आकर्ण्य प्रीतौ सन्तुष्टौ तौ देवनाभाकौ जिनं सीमन्धरस्वामिनं नत्वा प्रणम्य शत्रुञ्जयम् अगच्छताम् ॥२६५॥*

सरलार्थः:- इत्थं सीमन्धरस्वामिनः मुखात् निजं चरित्रं श्रुत्वा तौ देवः नाभाकनृपः च प्रीतौ भूत्वा सीमन्धरस्वामिनं नत्वा शत्रुञ्जयम् अगच्छताम्॥२६५॥

ગુજરાતી :- આ પ્રમાણે સીમંધર સ્વામીના શ્રીમુખથી તે દેવ અને નાભાક રાજા પોતપોતાનું ચરિત્ર સાંભળી ઘણા હર્ષિત થયા, અને તે પ્રભુને વંદન કરી શ્રી શત્રુંજય પર્વત ઉપર ગયા॥૨૬૫॥

हिन्दी :- इस तरह श्री सीमन्धर स्वामी के मुखसे वह देव और नाभाक राजा अपने अपने चरित्र सुनकर बडे ही हर्षित हुए, और प्रभु को प्रणाम कर के श्री शत्रुंजय पर्वत पर गये॥२६५॥

मराठी :- तो देव व नाभाक राजा ह्याप्रमाणे श्री सीमन्धर स्वामीच्या मुखांतून आपआपले चरित्र ऐकून फारच आनंदित झाले. श्री जिन प्रभूला नमस्कार करून श्री शत्रुंजय पर्वतावर गेले.॥२६५॥

English :- In this manner, both the God and King Nabhak were overcome with contentment when they had heard their respective biographies being narrated by the Lord Simandar. And then after paying their obeisance to the Lord, they arrived back to the mount of Satrunjay.

तत्र श्रीआदिदेवस्य स्नात्रपूजामहोत्सवम्।
कृत्वाऽष्टाहत्रयं भक्त्या तौ स्वं धन्यममन्येताम्॥२६६॥

अन्वयः:- तत्र भक्त्या अष्टाहत्रयं श्रीआदिदेवस्य स्नात्रपूजामहोत्सवं कृत्वा तौ स्वं धन्यम् अमन्येताम् ॥२६६॥

विवरणम्:- तत्र शत्रुञ्जयपर्वते भक्त्या अष्टानामह्नां समाहारः अष्टाहम्। अष्टाहानां त्रयं अष्टाहत्रयम् । श्रीआदिदेवस्य स्नात्रपूजायाः महोत्सवः स्नात्रपूजामहोत्सवः तं स्नात्रपूजामहोत्सवम् कृत्वा तौ देवनाभाकौ स्वमात्मानं धन्यम् अमन्येताम् ॥२६६॥

सरलार्थः:- तस्मिन् शत्रुञ्जयपर्वते त्रीणि अष्टाहानि यावत् भक्त्या श्रीस्नात्रपूजामहोत्सवं कृत्वा तौ देवनाभाकौ आत्मानं धन्यं अमन्येताम् ॥२६६॥

ગુજરાતી :- તે પછી શત્રુંજય પર્વત પર તે બન્ને જણાએ ત્રણ અઠવાડિયા સુધી ભક્તિપૂર્વક શ્રી આદીશ્વર પ્રભુની સ્નાત્રપૂજાનો મહોત્સવ કરી પોતાના આત્માને ભાગ્યશાળી માનવા લાગ્યા ॥૨૬૬॥

हिन्दी :- उसके बाद श्री शत्रुंजय पर्वत पर उन दोनों ने तीन सप्ताह तक भक्तिपूर्वक श्री आदीश्वर प्रभु की स्नात्रपूजा का महोत्सव किया और अपने आप को धन्य मानने लगे॥२६६॥

मराठी :- नंतर श्री शत्रुंजय पर्वतावर त्या दोघांनी तीन आठवड्यापर्यंत मोठ्या भक्तीने श्री आदीश्वर प्रभूचा स्नात्रपूजा महोत्सव केला व ते दोघे स्वतःला धन्य मानू लागले.॥२६६॥

English :- When they had arrived back both the God and the king performed a grand honorifit religious celebration of the Snatrapuja with a great devotional sentiment and began carressing feelings of fortunateness for being successful in their attempts.

Note - *Snatra puja*

When a Lord is born at night fifty six Goddeses *(Digekumari's)* decend the earth to perform duties of purifications, towards the child. Then the Indra and his Gods, lifting up the child tenderly, take him to the mount of Meru that is in the middle of the *Jambudueep*. Here they bathe the child in turns and then return him back in his swing. This is known a *Snatra puja*.

**अथ शाश्वतपूजार्थ-सर्वाङ्गाभरणानि तौ ॥**
**कारयित्वा महापूजा-क्षणेऽरोपयतां क्रमात् ॥२६७॥**

आन्वयः:- अथ शाश्वतपूजार्थं सर्वाङ्गाभरणानि कारयित्वा महापूजाक्षणे क्रमात् आरोपयताम् ॥२६७॥

विवरणम्:- *अथ स्नात्रपूजानन्तरं शाश्वतपूजार्थं शाश्वतपूजायाः कृते सर्वाणि च तानि अङ्गानिच सर्वाङ्गाणि। सर्वाङ्गानाम् आभरणानि सर्वाङ्गाभरणानि कारयित्वा महती चासौ पूजा च महापूजा। महापूजायाः क्षणः महापूजाक्षणः, तस्मिन् महापूजाक्षणे क्रमात् तत्तदङ्गेषु आरोपयताम् ॥२६७॥*

सरलार्थः:- अनन्तरं शाश्वतपूजार्थं सर्वाङ्गाभरणानि कारयित्वा महापूजायाः क्षणे तौ क्रमात् तत्तदङ्गेषु तत्तदङ्गालङ्कारान् आरोपयताम् ॥२६७॥

ગુજરાતી :- ત્યાર પછી શાશ્વત પૂજા માટે સર્વ અંગના આભૂષણોનો કરાવી તે મહાપૂજા વખતે આભૂષણોને ક્રમસર પ્રભુના અંગ ઉપર ચડાવ્યા ॥૨૬૭॥

हिन्दी :- बाद में शाश्वत पूजा के लिये (प्रभु के) सभी अंगो के आभूषण बनवा कर वे आभूषण महापूजा के समय क्रमसर श्री प्रभु के अंगो पर चढाये ॥२६७॥

मराठी :- नंतर शाश्वत पूजेसाठी प्रभूच्या सगळ्या अंगाचे दागिने बनवून घेऊन महापूजेच्या वेळी क्रमाक्रमाने ते प्रभूच्या त्या त्या अंगावर चढविले.॥२६७॥

English :- Then in order to perform an immortal *puja*, they prepared ornaments for every part of the Lord's body and emblished the Lord in a methodic manner, during the *mahapuja*.

माणिक्यरत्नखचितां दत्त्वा हैमीं महाध्वजाम् ॥
अभङ्गरङ्गसङ्गीतभक्तिं दर्शयतश्च तौ ॥२६८॥

अन्वयः:- तौ माणिक्यरत्नखचितां हैमीं महाध्वजां दत्त्वा अभङ्गरङ्गसङ्गीतभक्तिं दर्शयतः ॥२६८॥

विवरणम्:- तौ देवनाभाकौ माणिक्यानि च रत्नानि च माणिक्यरत्नानि माणिक्यरत्नैः खचिता माणिक्यरत्नखचिता, तां माणिक्यरत्नखचितां, हेम्नः इयं हैमी तां हैमीं सुवर्णमयीं, महती चासौ ध्वजा च महाध्वजा, तां महाध्वजां दत्त्वा न विद्यते भङ्गः यस्य तद् अभङ्गं च तत् रङ्गसंगीतं च अभङ्गरङ्गसंगीतम्। अभङ्गरङ्गसंगीतेन भक्तिः, ताम् अखण्डरङ्गसङ्गीतभक्तिं दर्शयतः स्म ॥२६८॥

सरलार्थः:- तौ देवनाभाकौ माणिक्यरत्नखचितां सुवर्णमयीं महाध्वजां दत्त्वा अभङ्गरङ्गेण सङ्गीतं कृत्वा स्वां भक्तिं अदर्शयताम् ॥२६८॥

ગુજરાતી :- ત્યાર પછી માણેક અને રત્નોથી જડેલી સુવર્ણની મહાધજા ચડાવી અને અખંડિત ભાવોલ્લાસ પૂર્વક સંગીત ગાન કરી પ્રભુની પ્રત્યે પોતાની અવર્ણનીય ભક્તિ દેખાડી.॥૨૬૮॥

हिन्दी :- उसके बाद माणिक और रत्नों से जड़ी हुई स्वर्णमय महापताका चडाई और अखंडित भावोल्लास के साथ संगीत गान कर के प्रभु के प्रति अपनी अवर्णनीय भक्ति दिखाई॥२६८॥

मराठी :- त्यानंतर त्या दोघांनी माणिक आणि रत्नांनी जडित सोन्यांची महाध्वजा चढविली आणि अखंडित भावनेच्या भरात संगीत गान करून प्रभुबदलची आपली अवर्णनीय भक्ति दाखविली.॥२६८॥

English :- Then they hoisted a golden flag, studded with carbuncles and gems and then sang psalms of praise in honour to the Lord with unrefuted devotion, which revealed their ineffable faith and votary in the Lord.

**एवं निर्माय निर्मायौ, प्राप्यप्रौढप्रभावनाः॥**
**सर्वज्ञशासनौन्नत्यं, तौ व्यस्तारयतां चिरम् ॥२६९॥**

अन्वयः- एवं प्राप्यप्रौढप्रभावनाः निर्माय निर्मायौ तौ सर्वज्ञशासनौन्नत्यं चिरं व्यस्तारयताम् ॥२६९॥

*विवरणम्:- एवं प्राप्याश्च ताः प्रौढाश्च प्राप्यप्रौढाः। प्राप्यप्रौढाश्च ताः प्रभावनाः च प्राप्यप्रौढप्रभावनाः निर्माय विधाय निर्गता माया याभ्यां तौ निर्मायौ सर्वज्ञस्य शासनं सर्वज्ञशासनं सर्वज्ञशासनस्य औन्नत्यं सर्वज्ञशासनौन्नत्यं चिरं चिरकालं व्यस्तारयतां व्यतनुताम् ॥२६९॥*

सरलार्थः- एवं प्राप्याः प्रौढाः च प्रभावनाः कृत्वा निर्मायौ तौ देवनाभाकौ सर्वज्ञशासनस्य औन्नत्यं व्यतनुताम् ॥२६९॥

**ગુજરાતી :- આ પ્રમાણે કોઈ પણ પ્રકારની માયા રહિત, પવિત્ર હૃદયે તે રાજા અને દેવે અત્યંત મોટી પ્રભાવના કરી લાંબા વખત સુધી સર્વજ્ઞ પ્રભુના શાસનની ઉન્નતિ વિસ્તારી. ॥૨૬૯॥**

हिन्दी :- इसप्रकार किसी भी प्रकार की माया से रहित होकर, पवित्र हृदय से, उस राजा और देव ने बहुत बडी प्रभावना कर के लम्बे समय तक सर्वज्ञ प्रभु के शासन की उन्नति विस्तृत की॥२६९॥

मराठी :- अशारीतीने कुठल्याही प्रकाराचा मोह नसलेल्या अशा त्या दोघांनी शुद्ध मनाने मोठी प्रभावना करून सर्वज्ञप्रभूच्या शासनाचे श्रेष्ठत्व चिरकाल पसरविले.॥२६९॥

English :- In this way, both the God and the King freed themselves from any worldly phantasms and with a heart of sanctity, they began propagating the resplendency and authority of the omniscient Lord, for a long time to come.

अथाऽनन्तगुणोत्साहबद्धरोमाञ्चकञ्चुकः॥
नाभाकभूपतिर्धर्मशालास्थानमशिश्रियत् ॥२७०॥

अन्वयः :- अथ अनन्तगुणोत्साहबद्धरोमाञ्चकञ्चुकः नाभाकभूपतिः धर्मशालास्थानम् अशिश्रियत् ॥२७०॥

विवरणम् :- अथ अनन्तेन गुण्यतेऽसौ अनन्तगुणः। अनन्तगुणश्चासौ उत्साहश्च अनन्तगुणोत्साहः। अनन्तगुणोत्साहेन बद्धः रोमाञ्चः एव कञ्चुकः येन सः अनन्तगुणोत्साहबद्धरोमाञ्चकञ्चुकः नाभाकः भूपतिः धर्मशालायाः स्थानम् अशिश्रियत् आश्रितवान् ॥२७०॥

सरलार्थः :- अथ अनन्तगुणेन उत्साहेन येन रोमाञ्चः एव कञ्चुकः बद्धः अस्ति (अनन्तगुणोत्साहेन रोमाञ्चिताङ्गः) सः नाभाकनृपः धर्मशालायाः स्थानम् अशिश्रियत् आश्रितवान् ॥२७०॥

ગુજરાતી :- ત્યાર બાદ અનંતગણા ઉત્સાહથી, પ્રફુલ્લિત, રોમાંચવાળા નાભાક રાજાએ ધર્મશાળાના સ્થાનનો આશ્રય લીધો ॥૨૭૦॥

हिन्दी :- बाद में अनंतगुने उत्साह से रोमांचित होकर उस नाभाक राजाने धर्मशाला के स्थान का आश्रय लिया॥२७०॥

मराठी :- नंतर अनंतपट उत्साहाने रोमांचित होऊन त्या नाभाक राजाने धर्मशाळेचा आश्रय घेतला.॥२७०॥

English :- Then the meritorious King Nabhak who was being horripilated with enthusiasm, took refuge in a hospice.

तत्र न्यक्कृतकल्पद्रुर्डिण्डिमोद्घोषपूर्वकम् ॥
स्वमर्थमर्थिसात्तन्वन्नवारिद्र्यं जगद् व्यधात् ॥२७१॥

अन्वयः :- तत्र डिण्डिमोद्घोषपूर्वकं न्यक्कृतकल्पद्रुः स्वं अर्थिसात् तन्वन् सः जगत् अवारिद्र्यं व्यधात् ॥२७१॥

विवरणम् :- तत्र धर्मशालायां स्थित्वा डिण्डिमेन उद्घोषः (वाद्योद्घोषः) डिण्डिमोद्घोषः। डिण्डिमोद्घोषः पूर्वं यस्मिन् कर्मणि यथा स्यात्तथा डिण्डिमोद्घोषपूर्वकं न्यक्कृतः तिरस्कृतः अधरीकृतः वा कल्पद्रुः कल्पवृक्षः येन सः न्यक्कृतकल्पद्रुः दानेनाधरीकृतकल्पवृक्षः सः नाभाकः स्वम् अर्थं धनम् अर्थिसात् अर्थ्यधीनं याचकाधीनं तन्वन् कुर्वन् जगत् न विद्यते दारिद्र्यं यस्मिन् तत् अवारिद्र्यं दारिद्र्यरहितं व्यधात् अकरोत्॥२७१॥

सरलार्थः- तत्र धर्मशालायां स्थित्वा स नाभाकः डिण्डिमोद्घोषपूर्वकं तथा दानम् अददात्। यथा सर्वं धनम् अर्थिसात् कृत्वा कल्पवृक्षमपि अधरीकृतवान् जगत् च दारिद्र्यरहितं व्यधात् ॥२७१॥

ગુજરાતી :- ત્યાં રહી દાન આપવા માટે પટહોદ્‌ઘોષણા કરાવી, અને જેના દાનગુણ સામે કલ્પવૃક્ષો પણ હલકા પડી જાય એવા તે રાજાએ પોતાનું ધન યાચકજનોને આપી બધાનું દારિદ્ર્ય દૂર કરી દીધું. ॥૨૭૧॥

हिन्दी :- वहाँ रहकर दान देने के लिये पटह घोषणा कराई और जिस के दानगुण के सामने कल्पवृक्ष भी फिके पड गये ऐसे उस राजाने अपना धन उन याचकों के बीच बाँटकर पुरे जगत् को दारिद्र्यसे रहित किया॥२७१॥

मराठी :- त्या धर्मशाळेत राहून नाभाक राजाने नगारा वाजवून घोषणापूर्वक इतके दान दिले की त्या धनाने कल्पवृक्षालाही लाजविले आणि साऱ्या जगातील दारिद्र्य नाहीसे करून टाकले.॥२७१॥

English :- Then King Nabhak, staying in a hospice send a herald to proclaim that he shall be distributing alms among the medicants. Then the king gave such a shower of his wealth that even the great tree, *Kalpavrush* seemed to be experiencing mawkishness. Thus King Nabhak had made the entire world free from the bondage of poverty.

**अथ पुण्यपवित्रात्मा क्षालिताऽखिलकश्मलः ॥**
**गुरुभिः सह भूपालः प्रतस्थे स्वपुरं प्रति ॥२७२॥**

अन्वयः- अथ पुण्यपवित्रात्मा क्षालिताऽखिलकश्मलः भूपालः गुरुभिः सह स्वपुरं प्रति प्रतस्थे ॥२७२॥

*विवरणम्ः- अथ अनन्तरं पुण्येन पवित्रः आत्मा यस्य सः पुण्यपवित्रात्मा अखिलानि च तानि कश्मलानि च अखिलकश्मलानि सकलपापानि। क्षालितानि अखिलकश्मलानि येन सः क्षालिताखिलकश्मलः क्षालितसकलपापः भुवं पालयतीति भूपालः नृपः नाभाकः गुरुभिः युगन्धरसूरिभिः सह स्वपुरं स्वनगरं प्रतस्थे निर्जगाम ॥२७२॥*

सरलार्थः- अनन्तरं पुण्यकर्मभिः पूतात्मा क्षालितसकलायः सः नाभाकः नृपः गुरुभिः सह स्वपुरं प्रतस्थे ॥२७२॥

ગુજરાતી :- હવે પુણ્ય વડે પવિત્ર આત્માવાળો તે નાભાક રાજા પોતાના સમગ્ર પાપની શુદ્ધિ કરી ગુરુ મહારાજ સાથે પોતાના નગર તરફ ચાલ્યો ॥૨૭૨॥

हिन्दी :- अब पुण्य के द्वारा पवित्र बना हुआ नाभाक राजा अपने समग्र पापों की शुद्धि करके गुरुमहाराजके साथ अपने नगर की ओर रवाना हुआ॥२७२॥

मराठी :- नंतर पुण्याने पवित्र झालेला तो नाभाक राजा आपल्या सगळ्या पापांची शुद्धि करून गुरुमहाराजाबरोबर आपल्या नगराकडे जाण्यास निघाला.॥२७२॥

English :- Then King Nabhak, who had cleansed himself from all his past sins and attaining purification left for his kingdom along with his spritual instructor.

**अनुपानद् गुरोर्वामभागेन पथि सञ्चरन् ॥**
**दर्शयन् उच्चनीचां च भुवं भक्ताग्रणीरभूत् ॥२७३॥**

अन्वयः- पथि गुरोः वामभागेन अनुपानद् सञ्चरन् उच्चनीचां भुवं दर्शयन् भक्ताग्रणीरभूत् ॥२७३॥

विवरणम्:- *पथि मार्गे गुरोः युगन्धरसूरेः वामश्चासौ भागश्च वामभागः तेन वामभागेन न विद्येते उपानहौ यस्य सः अनुपानद् पादत्राणरहितः सञ्चरन् विहरन् उच्चा चासौ नीचा च उच्चनीचा तामुच्चनीचां भुवं भूमिं नतोन्नतां भूमिमित्यर्थः दर्शयन् सः नाभाकः भक्तानामग्रणीः भक्ताग्रणीः भक्ताग्रेसरः भक्तशिरोमणिः अभूत् अभवत् ॥२७३॥*

सरलार्थः- मार्गे गुरोः श्रीयुगन्धरसूरेः वामभागेन उपानद्भ्यां विना सञ्चलन् नतोन्नतां भूमिं गुरवे दर्शयन् सः नाभाकः गुरोः भक्तशिरोमणिः अभवत् ॥२७३॥

ગુજરાતી :- રસ્તામાં ગુરુમહારાજને ડાબે પડખે, ઉઘાડે પગે ચાલતો અને ઉંચાણ - નીચાણવાળી પૃથ્વીને બતાવતો તે નાભાક રાજા ગુરુભક્ત શિરોમણિ થયો ॥૨૭૩॥

हिन्दी :- रास्ते में गुरुमहाराज के बायीं ओर, बिना जूतों के चलता हुआ और उबड़-खाबड़ जमीन को बताता हुआ यह राजा गुरुभक्तों में शिरोमणि हुआ॥२७३॥

मराठी :- रस्त्यात गुरुमहाराजांच्या डाव्या बाजूने पादत्राणा शिवाय चालत व उंच सखल जमीन दाखवीत तो नाभाक राजा गुरुभक्तामध्ये शिरोमणि झाला.॥२७३॥

English :- The King walking on the left side of the rev monk, barefooted, was warning the monk continuously about the up's and downs of the road. Thus taking immense care of the monk. He therfore became the most ardent devotee among devotees.

**चन्द्रादित्यसुरः सेना - मानं छत्रं वितानयन् ॥**
**चामरांश्चालयन् पार्श्व - द्वये सद्गुरुभूपयोः ॥२७४॥**

अन्वयः :- चन्द्रादित्यसुरः सेनामानं छत्रं वितानयन् सद्गुरुभूपयोः पार्श्वद्वये चामरान् चालयन् ॥२७४॥

विवरणम् :- चन्द्रादित्यः एव सुरः चन्द्रादित्यसुरः चन्द्रादित्यदेवः सेनायाः मानं प्रमाणमिव मानं प्रमाणं यस्य तत् सेनामानं सेनाप्रमाणकं छत्रं आतपत्रं वितानयन् विस्तारयन् सर्वस्यामेव सेनायां छत्रं धारयन्, सन् चासौ गुरुश्च सद्गुरुः, भुवं पातीति भूपः, सद्गुरुश्च भूपश्च सद्गुरुभूपौ, तयोः सद्गुरुभूपयोः श्री युगन्धरनाभाकयोः पार्श्वयोः द्वयं पार्श्वद्वयं तस्मिन् पार्श्वद्वये उभयोः पार्श्वयोः चामरान् चालयन् वीजयन् गुरूणां भक्तिं महीपतेः च सान्निध्यं विधत्ते, इति पञ्चमेन सम्बन्धः ॥२७४॥

सरलार्थः :- चन्द्रादित्यसुरः सेनाप्रमाणं छत्रं विस्तारयन् सद्गुरोः भूपस्य च उभयोः पार्श्वयोः चामरान् चालयन् ''गुरूणां भक्तिं महीपतेः च सान्निध्यं विधत्ते'' इति पञ्चमेन सम्बन्धः ॥२७४॥

ગુજરાતી :- ચન્દ્રાદિત્ય દેવ પણ સેનાના પરિમાણ જેટલું છત્ર વિસ્તારતો, સદ્ગુરુમહારાજ અને રાજાના બન્ને પડખે ચામરો વીંજતો ॥૨૭૪॥

हिन्दी :- चन्द्रादित्य देव भी सेना के परिमाण जितना छत्र तानता हुआ गुरुमहाराज और राजा के दोनो तरफ (ओर) चामर ढालता हुआ॥२७४॥

मराठी :- चन्द्रादित्य देव सुद्धा सेनेच्या मापा इतके छत्र पसरवीत गुरुमहाराज व राजाच्या दोन्ही बाजूंना चामर विंझवीत।।२७४।।

English :- The God Chandraditya prepared a parasol, that stretched over the whole army and also fanned the king and the religious instructor on both sides.

**संवर्तकानिलेनाग्रे कण्टकाद्यपसारयन् ।।**
**गन्धोदकस्य वर्षेण मार्गस्थं शमयन् रजः ।।२७५।।**

अन्वयः- संवर्तकानिलेन अग्रे कण्टकादि अपसारयन् गन्धोदकस्य वर्षेण मार्गस्थं रजः शमयन् -।।२७५।।

विवरणम्:- *संवर्तकश्चासौ अनिलश्च संवर्तकानिलः संवर्तकवायुना अग्रे अग्रभागे कण्टकाः आदौ यस्य तत् कण्टकाद कण्टककर्करावस्करादिकम् अपसारयन् निःसारयन् दूरीकुर्वन्, गन्धेन युक्तम् उदकं गन्धोदकं तस्य गन्धोदकस्य गन्धजलस्य वर्षेण मार्गे तिष्ठतीति मार्गस्थं पथि वर्तमानं रजः धूलिं शमयन् - (अग्रे पञ्चमेन सम्बन्धः।) ।।२७५।।*

सरलार्थः- संवर्तकवायुना अग्रे पुरतः वर्तमानं कण्टककर्करावस्करादिकं अपसारयन्, गन्धोदकस्य वर्षेण मार्गस्थां धूलिं शमयन् ।।२७५।।

ગુજરાતી :- સંવર્તક વાયરા વડે રસ્તામાં આગળ આગળ કાંટા વિગેરેને દૂર કરતો, સુગંધ-પાણી વરસાવી માર્ગની ધૂળી શાંત કરતો, ।।૨૭૫।।

हिन्दी :- संवर्तक पवन द्वारा रास्ते में आगे के कांटो को दूर करता हुआ, सुगंधित पाणी बरसा कर रास्ते की धूल शांत करता हुआ,।।२७५।।

मराठी :- संवर्तक वाऱ्यामुळे पुढे रस्त्यात असलेले काटे, केरकचरा दूर सारीत व सुवासिक पाणी शिंपडून रस्त्यांतील धूळ खाली बसवत,।।२७५।।

English :- He even created clouds to shower its showers to blow away the thorns on the road, with the help of the westerlies, as they proceeded ahead. He even created occasional sweet-scented showers to calm off the flying dust.

सुगन्धिभिः पञ्चवर्णैर्दिव्यपुष्पैर्भुवं स्तृणन् ॥
संचारयन् पुरस्थं च योजनोच्चमहाध्वजम् ॥२७६॥

अन्वयः:- सुगन्धिभिः पञ्चवर्णैः दिव्यपुष्पैः भुवं स्तृणन् पुरस्थं योजनोच्चं महाध्वजं स चारयन् ॥

विवरणम्:- *शोभनः गन्धः येषां तानि सुगन्धीनि, तैः सुगन्धिभिः पञ्चवर्णाः येषां तानि पञ्चवर्णानि तैः पञ्चवर्णैः दिवि भवानि दिव्यानि दिव्यानिच तानि पुष्पाणिच दिव्यपुष्पाणि तैः दिव्यपुष्पैः दिव्यकुसुमैः भुवं भूमिं स्तृणन् आच्छादयन्, पुरेः तिष्ठतीति पुरस्थः तं पुरस्थं योजनमुच्चः योजनोच्चः। महान् चासौ ध्वजश्च महाध्वजः। योजनोच्चः चासौ महाध्वजश्च, तं योजनोच्चमहाध्वजं संचारयन् -- ॥२७६॥*

सरलार्थः:- सुगन्धिभिः पञ्चवर्णैः दिव्यपुष्पैः भूमिम् आच्छादयन् पुरःच योजनोच्चं महाध्वजं संचारयन्-॥२७६॥

ગુજરાતી :- સુગંધથી મહેકી રહેલા પાંચ વર્ણના દિવ્ય પુષ્પોથી પૃથ્વીને આચ્છાદિત કરતો, આગળ એક યોજન ઊંચી મોટી ધ્વજા ફરકાવતો, ॥૨૭૬॥

हिन्दी : सुगन्ध से महकते हुए पांच रंगो के दिव्य फूलों को पृथ्वी पर बिखराता हुआ, सबसे आगे सामने एक योजन उंची बडी धजा लहराता हुआ,॥२७६॥

मराठी :- सुगंधी पंचरंगी दिव्य फुलांनी पृथ्वीला आच्छादित करीत, व सर्व लोकांच्या पुढे एक योजन उंचीचा मोठा ध्वज फडकावीत,॥२७६॥

English :- He even scattered a shower of aromatic, divine flowers of five different colours, on the earth and even created a fluttering flag as tall as eight miles (one yojan) in the front of the whole army.

**एतयोरवमन्तारो, यास्यन्ति प्रलयं स्वयम्॥**
**एतत्पादाब्जनन्तारो, वर्द्धिष्यन्ते महाश्रिया ॥२७७॥**

अन्वयः- एतयोः अवमन्तारः स्वयं प्रलयं यास्यन्ति। एतत्पादाब्जनन्तारः महाश्रिया वर्द्धिष्यन्ते॥२७७॥

विवरणम्:- *एतयोः एतस्य गुरोः नृपस्य च अवमन्तारः अपमानस्य कर्तारः स्वयमेव प्रलयं विनाशं यास्यन्ति। पादौ अब्ज इव पादाब्जे। एतयोः पादाब्जे एतत्पादाब्जे। एतत्पादाब्जयोः नन्तारः एतत्पादाब्जनन्तारः एतयोः चरणकमलयोः नम्राः भवितारः महती चासौ श्रीः च महाश्रीः तया महाश्रिया महत्या लक्ष्म्या वर्द्धिष्यन्ते ॥२७७॥*

सरलार्थः- एतौ गुरुनृपौ अवमन्यमानाः स्वयं विलयं यास्यन्ति नङ्क्ष्यन्ति। एतत्पादाब्जे प्रणमन्तः महत्या लक्ष्म्या वर्द्धिष्यन्ते ॥२७७॥

ગુજરાતી :- **આ ગુરુમહારાજ અને રાજાનું અપમાન કરનારા સ્વયં નાશ પામશે, અને એમના ચરણકમલને નમસ્કાર કરનાર લોકોનો વૈભવ વૃદ્ધિ પામશે." ॥૨૭૭॥**

हिन्दी :- गुरूमहाराज और राजा इन दोनों का अपमान करनेवालों का स्वयं नाश होगा और इनके चरणों पर नमस्कार करनेवाले बडे वैभव से वृद्धि पायेंगे॥२७७॥

मराठी :- गुरुमहाराज व राजा या दोघांचा अपमान करणारे स्वतःच नाश पावतील व यांच्या चरण कमलावर नम्र होणारे मोठ्या वैभवाने वृद्धि पावतील.॥२७७॥

English :- The one who scorns and slurs the religious instructor or the king, Nabhak shall experience damnation but the one who reveres towards them shall inherit untold wealth and grandeur double fold.

इत्यम्बरगिरा साकं दुन्दुभिं दिवि ताडयन् ॥
गुरूणां विदधे भक्तिं, साम्निध्यं च महीपते:॥२७८॥

अन्वय:- इति अम्बरगिरा साकं दिवि (पञ्चभि: कुलकं।) दुन्दुभिं ताडयन् गुरूणां भक्तिं महीपते: च साम्निध्यं विदधे ॥२७८॥

*विवरणम्:- इति अम्बरगिरा आकाशवाण्या साकं दिवि अन्तरिक्षे दुन्दुभिं पटहं ताडयन् निनादयन् चन्द्रादित्यसुर: गुरूणां भक्तिं मह्या: पति: महीपति: तस्य महीपते: भूपते: च सान्निध्यं सन्निधि: एव साम्निध्यं विदधे चक्रे ॥२७८॥*

सरलार्थ:- इति आकाशवाण्या सह दिवि दुन्दुभिं निनादयन् चन्द्रादित्यसुर: गुरूणां भक्तिं नृपस्य च साम्निध्यं चक्रे ॥२७८॥

ગુજરાતી :- એવી આકાશવાણી સાથે ગગનમાં દુંદુભિનો નાદ કરતો ગુરુમહારાજની ભક્તિ કરતો હતો, તેમ જ રાજાનું સાન્નિધ્ય કરતો હતો. ॥૨૭૮॥

हिन्दी :- ऐसी आकाशवाणी के साथ गगन में दुंदुभि का नाद करता हुआ चन्द्रादित्य देव गुरुमहाराज की भक्ति करता था और राजा का संपर्क करता था॥२७८॥

मराठी :- अश्या आकाशवाणी बरोबरच गगनामध्ये दुंदुभीचा नाद करीत चंद्रादित्य देव गुरुमहाराजांची भक्ति करीत असे व राजाचे साम्निध्य प्राप्त करीत होता.॥२७८॥

English :- The God Chandraditya used to beat the kettle-drums and proclaim such an oracle. He thus used to serve the monk zealously and also procure the king's proximity.

**इत्थं प्रतिपदं नैकभूपैः प्राभृतपाणिभिः ॥**
**प्रवर्धमानभव्यश्रीर्नृपः प्रापन्निजं पुरं ॥२७९॥**

अन्वयः:- इत्थं प्रतिपदं प्राभृतपाणिभिः नैकभूपैः प्रवर्धमानभव्यश्रीः नृपः निजं पुरं प्रापत् ॥२७९॥

*विवरणम् :- इत्थं पदे पदे प्रतिपदं प्राभृतानि उपायनानि पाणौ येषां ते प्राभृतपाणयः तैः प्राभृतपाणिभिः उपायनहस्तैः न एकः नैके। नैके च ते भूपाश्च नैकभूपाः तैः नैकभूपैः अनेकराजभिः प्रवर्धमाना चासौ भव्या चासौ श्रीः यस्य सः प्रवर्धमानभव्यश्रीः न्रन् पातीति नृपः नाभाकः निजं स्वकं पुरं नगरं प्रापत् आगमत् ॥२७९॥*

सरलार्थः:- इत्थं पदे पदे पाणिषु प्राभृतकानि गृहीत्वा आगच्छद्भिः अनेकैः राजभिः यस्य भव्यश्रीः प्रवर्ध्यते सः नृपः नाभाकः स्वं पुरमाजगाम ॥२७९॥

ગુજરાતી :- આવી રીતે માર્ગમાં ચાલતા, પગલે પગલે અનેક રાજાઓ હાથમાં ભેટણાં લઈ નાભાક રાજાનું સન્માન કરવા લાગ્યા, અને તેનાથી વૃદ્ધિ પામતો મનોહર લક્ષ્મીવાળો રાજા પોતાના નગરમાં આવી પહોંચ્યો. ॥૨૭૯॥

हिन्दी :- इस तरह रास्ते में चलते चलते अनेक राजाओं द्वारा अर्पण किये हुए उपहारों द्वारा वैभव संपन्न बना हुआ नाभाक राजा अपने नगर में आ पहुँचा॥२७९॥

मराठी :- याप्रमाणे रस्त्यात पावलोपावली अनेक राजांनी सन्मान करून दिलेल्या भेटीमुळे वृध्दिंगत झालेल्या सुंदर लक्ष्मीने युक्त होऊन तो राजा आपल्या नगरात येऊन पोहोचला.॥२७९॥

English :- In this manner King Nabhak who had attained great fame and granduer, was bestowed with countless gifts from the different kings. Then in due-course he reached his city.

गुरवोऽपि ततो दत्त्वा, श्रीमन्नाभाकभूपतेः॥
सम्यक्त्वमूलश्राद्धाणु - व्रतानि व्यहरन् भुवि ॥२८०॥

अन्वयः:- ततः गुरवः अपि श्रीमन्नाभाकभूपतेः सम्यक्त्वमूलश्राद्धाणुव्रतानि दत्त्वा भुवि व्यहरन् ॥२८०॥

विवरणम्:- *ततः तदनन्तरं गुरवः अपि श्रीः अस्यास्तीति श्रीमान् श्रीमान् चासौ नाभाकभूपतिः च श्रीमन्नाभाकभूपतिः तस्य श्रीमन्नाभाकनृपतेः सम्यक्त्वं मूलं येषां तानि सम्यक्त्वमूलानि। श्राद्धानां श्रावकाणां अणुव्रतानि श्राद्धाणुव्रतानि। सम्यक्त्वमूलानि च तानि श्राद्धाणुव्रतानि च सम्यक्त्वमूलश्राद्धाणुव्रतानि दत्त्वा भुवि व्यहरन् ॥२८०॥*

सरलार्थः:- ततः गुरवः अपि श्रीमन्नाभाकनृपतये सम्यक्त्वमूलानि श्रावकाणां अणुव्रतानि दत्त्वा भूमौ व्यहरन् ॥२८०॥

ગુજરાતી :- ત્યાર બાદ ગુરુમહારાજે નાભાકરાજાને સમ્યક્ત્વમૂળ શ્રાવકના અણુ વ્રત ઉચરાવી શુદ્ધ શ્રાવક કર્યો, પછી ગુરુમહારાજે બીજે સ્થળે વિહાર કર્યો. ॥૨૮૦॥

हिन्दी :- उसके बाद गुरुमहाराजने नाभाक राजा को सम्यक्त्वमूल श्रावक के अणुव्रत का प्रत्याख्यान करा के (उच्चार कराके) शुद्ध श्रावक बनाया, और दूसरी जगह विहार किया॥२८०॥

मराठी :- नंतर गुरुमहाराजसुद्धा नाभाक राजाला सम्यकत्वाचे मूक असलेल्या श्रावकांच्या अणुव्रतांचे प्रत्याख्यान करवून पृथ्वीवर विहार करू लागले.॥२८०॥

English :- The rev monk then spelled out for the king the commandments of a lay-men, thus transforming the king into a chaste and a modest layman. Then the monk wandered off to another place.

**अथ देवस्य सान्निध्यात् वासुदेव इव स्वयम् ॥**
**भूपालो भरतार्धस्य त्रीणि खण्डान्यसाधयत् ॥२८१॥**

अन्वयः:- अथ अनन्तरं देवस्य चन्द्रादित्यदेवस्य सान्निध्यात् सामीप्यात् वासुदेवः इव भूपालः स्वयं भरतार्धस्य त्रीणि खण्डानि असाधयत् ॥२८१॥

विवरणम्:- *अथ गुरोः प्रस्थानानन्तरं देवस्य चन्द्रादित्यसुरस्य सान्निध्यात् सामीप्यात् वासुदेवः इव भुवं पालयतीति भूपालः नाभाकनृपः स्वयं भरतस्यार्धं भरतार्धं, तस्य भरतार्धस्य त्रीणि खण्डानि असाधयत् ॥२८१॥*

सरलार्थः:- अथ गुरोः प्रस्थानात् अनन्तरं चन्द्रादित्यसुरस्य साम्निध्येन वासुदेवः इव भूपः नाभाकः भरतार्धस्य त्रीणि खण्डानि असाधयत् ॥२८१॥

ગુજરાતી :- ત્યાર પછી ચન્દ્રદિત્યદેવની સહાયથી નાભાકરાજાએ વાસુદેવની પેઠે ભરતના ત્રણે ખંડ સાધ્યા. ॥૨૮૧॥

हिन्दी :- फिर चन्द्रादित्य देव की सहायता से नाभाक राजाने वासुदेव के समान अर्ध भरत के तीनों खंड प्राप्त किये। (सिद्ध किये।)॥२८१॥

मराठी :- त्यानंतर चन्द्रादित्य देवाच्या सहाय्याने नाभाक राजांने वासुदेवाप्रमाणे अर्धभरताचे तीन खंड मिळविले.॥२८१॥

English :- Then King Nabhak conquered the half of Bharat and its three sections, like Vasudev, with the help of the God, Chandraditya.

**भूमिपतिसहस्राणां, षोडशानां च मूर्धनि ॥**
**आज्ञां संस्थाप्य राज्यं स्वं धर्मंच समपालयत् ॥२८२॥**

अन्वयः :- षोडशानां भूमिपतिसहस्राणां मूर्धनि आज्ञां संस्थाप्य राज्यं स्वधर्मं च समपालयत् ॥२८२॥

विवरणम् :- *षोडशानां षोडशसङ्ख्याकानां भूम्याः पतयः भूमिपतयः राजानः भूमिपतीनां सहस्राणि भूमिपतिसहस्राणि तेषां भूमिपतिसहस्राणां मूर्धनि शिरसि, षोडससहस्रभूपतीनां शिरसि स्वामाज्ञां संस्थाप्य स्वं राज्यं स्वधर्मं च समपालयत् सम्यक्तया पालयामास ॥२८२॥*

सरलार्थः :- षोडशसहस्रनृपाणां मूर्धनि स्वां आज्ञां संस्थाप्य स्वं राज्यं धर्मं च सम्यक्तया पालयामास ॥२८२॥

ગુજરાતી :- **નાભાકરાજાએ સોળ હજાર રાજાઓ ઉપર પોતાની આજ્ઞા પ્રવર્તાવી ને સમ્યક્ પ્રકારે પોતાના રાજ્યનું અને ધર્મનું પાલન કરવા લાગ્યો. ॥૨૮૨॥**

हिन्दी :- नाभाक राजा ने सोलह हजार राजाओं के ऊपर शासन किया। (अपनी आज्ञा प्रवर्तित की।) और वह सम्यक् प्रकार से अपने राज्य और धर्म का पालन करने लगा॥२८२॥

मराठी :- नाभाक राजाने सोळा हजार राजावर आपली आज्ञा चालविली आणि तो उत्तम रीतीने आपले राज्य आणि धर्माचे पालन करू लागला.॥२८२॥

English :- King Nabhak exercised his authority over sixteen thousand kings and as a nutrient nutured his kingdom and his religion whole-heartedly.

**त्रिकालम् देवमभ्यर्चन्, द्विसन्ध्यम् सद्गुरून्नमन् ॥**
**षडावश्यककृत्यम् च, तन्वन् राज्यफलम् ययौ ॥२८३॥**

अन्वय:- त्रिकालम् देवमभ्यर्चन् द्विसन्ध्यम् सद्गुरून्, नमन्, षडावश्यककृत्यम् च तन्वन् राज्यफलम् ययौ ॥२८३॥

विवरणम्:- *त्रयाणाम् कालानाम् समाहार: त्रिकालम् प्रात: मध्याह्ने सायाह्ने च देवम् अभ्यर्चन् पूजयन्, द्वयो: सन्धयो: समाहार: द्विसन्ध्यम् सन्तश्च ते गुरवश्च सद्गुरव:, तान् सद्गुरून् नमन् वन्दमान:, आवश्यकानि च तानि कृत्यानि च आवश्यककृत्यानि। षण्णामावश्यककृत्यानाम् समाहार: षडावश्यककृत्यम् षड् आवश्यककर्माणि तन्वन् कुर्वन् राज्यस्य फलम् ययौ प्राप॥२८३॥*

सरलार्थ:- त्रिकालम् देवम् पूजयन् द्विसन्ध्यम् च सद्गुरून् नमन् षड् आवश्यककृत्यानि कुर्वन् नाभाकनृप: राज्यस्य फलम् प्राप ॥२८३॥

**ગુજરાતી :- રાજાએ ત્રણ કાળ પ્રભુની પૂજા, અને સાંજ સવાર સદ્‌ગુરુ મહારાજને વંદન તથા છ આવશ્યક કૃત્ય કરતાં રાજ્યનું શુભ ફળ મેળવ્યું. ॥૨૮૩॥**

हिन्दी :- उस राजा ने तीनो समय जिनप्रभु की पूजा और सुबह शाम गुरु महाराज को प्रणाम और छ: आवश्यक कृत्य करते हुऐ राज्य का शुभ फल प्राप्त किया॥२८३॥

मराठी :- नंतर त्या राजाने तीन वेळां प्रभूची पूजा, सकाळ आणि संध्याकाळ श्री गुरुमहाराजांना नमस्कार आणि सहा आवश्यक कृत्यें करून राज्याचे शुभफळ प्राप्त केले.॥२८३॥

English :- The king performed to puja in honour of Lord Jinendra, three times a day and venerated towards his spritual guide every morning and evening. He thus performed the six essential duties which are indispensable necessities and attained the fruit of a vast kingdom.

Note - The six essentialities.
1) Samahika,
2) Chauvisatthao- Praising the twenty-four Tirthankars,
3) Vandan- To pay one's homage to the spritual guide,
4) Pratikaman, - (A prayer to self-retrospect)
5) Kayotsarga, - (A type of a meditation)
6) Pratyakhyan - (A solemn vow to be detatched from sins)

**प्रतिग्रामपुरम् जैन - प्रासादास्तुङ्गतोरणाः ॥**
**व्यधाप्यन्त नरेन्द्रेण, धर्मशालाः सहस्रशः ॥२८४॥**

अन्वयः- नरेन्द्रेण प्रतिग्रामपुरम् तुङ्गतोरणाः जैनप्रासादाः सहस्रशः धर्मशालाः व्यधाप्यन्त॥२८४॥

विवरणम्:- *नराणामिन्द्रः नरेन्द्रः तेन नरेन्द्रेण नाभाकनृपेण ग्रामे ग्रामे पुरे पुरे च प्रतिग्रामम् प्रति पुरम् तुङ्गानि तोरणानि येषाम् ते तुङ्गतोरणाः जिनस्य इमे जैनाः। जैनाश्च ते प्रासादाश्च जैनप्रासादाः जिनमन्दिराणि सहस्रशः धर्मशालाः च व्यधाप्यन्त अकार्यन्त ॥२८४॥*

सरलार्थः- श्रीनाभाकनरेन्द्रेण ग्रामे ग्रामे पुरे पुरे च तुङ्गतोरणानि जिनमन्दिराणि सहस्रशः धर्मशालाः च अकार्यन्त ॥२८४॥

ગુજરાતી :- તે રાજાએ દરેક ગામ અને શહેરોમાં ઉંચા તોરણવાળા જિનમંદિરો બંધાવ્યા, તેમજ હજારો ધર્મશાળા બંધાવી. ॥૨૮૪॥

हिन्दी :- उस राजाने हर एक गांव में और शहरो में ऊंचे ऊंचे तोरणोवाले जिनमंदिरो का निर्माण करावाया और हजारो धर्मशालायें बनवाई॥२८४॥

मराठी :- नंतर त्या राजाने प्रत्येक गावात आणि शहरात उंच उंच तोरण असलेली जिनमंदिरे आणि सहस्रावधि धर्मशाळा बांधविल्या.॥२८४॥

English :- This king then build jain temples in every village and city and emblished them with high arched festoons. He even constructed thousands of hospices.

सहिलीकपरद्रोह - पैशून्यकलिमत्सराः ॥
निमूलम् वारिताः सप्त - व्यसनानि विशेषतः ॥२८५॥

अन्वयः- तेन नरेन्द्रेण साहिलीक - परद्रोह - पैशून्य - कलि - मत्सराः निमूलम् वारिताः । विशेषतः सप्तव्यसनानि वारितानि ॥२८५॥

विवरणम्:- तेन नरेन्द्रण नाभाकनृपेण साहिलीकम् - परनिन्दाकरणम्, परस्य द्रोहः परद्रोहः परद्वेषः, पिशुनस्य भावः पैशुन्यम्, केलिः कलहः मत्सरः परोत्कर्षासहनम् निर्गतम् मूलम् यस्मिन् कर्मणि यथा स्यात् तथा निर्मूलम् वारिताः निवारिताः। विशेषतः सप्त च तानि व्यसनानिच सप्तव्यसनानि द्यूतादीनि समूलम् वारितानि निःसारितानि ॥२८५॥

सरलार्थः- तेन नाभाकनरेन्द्रेण निन्दा - परद्रोह - पैशुन्य कलह - मत्सराः निःशेषिताः। सप्त व्यसनानि च विशेषरूपेण निःसारितानि ॥२८५॥

ગુજરાતી :- તે રાજાએ પોતાના રાજ્યમાં ચાડી, કજીઓ, ઈર્ષ્યા વિગેરનું નિર્મુલન કર્યું, તથા સાત વ્યસનોનો તો વિશેષ પ્રકારે નિષેધ કર્યો. ॥૨૮૫॥

हिन्दी :- फिर उस राजाने अपने राज्यमें निंदा, परद्रोह, चुंगली, टंटे, ईर्ष्या इत्यादि का जड सहित निवारण किया और सात व्यसनों का तो विशेष प्रकार से निषेध किया॥२८५॥

मराठी :- नंतर त्या राजाने आपल्या राज्यांत परनिंदा द्रोह, चुगली, भांडण ईर्ष्या, इत्यादिकांचे मुळासकट निवारण केले आणि सात व्यसनांचा तर विशेष प्रकाराने नाश केला.॥२८५॥

English :- The king in his kingdom, detered from the very roots, slanderous hostility, calumny, wrangling, malice etc. He even banned the seven vices.

Note - The seven vices.
1) Intake of alcohol,
2) Intake of meat,
3) Gambling,
4) Debauchery,
5) Prostitution,
6) Hunting
7) Theft

**मिथ्यात्वम् पापमन्यायम्, विधत्ते मनसाऽपि यः ॥**
**तस्य देवः स्वयम् शिक्षाम्, दत्ते तत्क्षणमेव सः ॥२८६॥**

अन्वयः- य: मनसाऽपि मिथ्यात्वम् पापम् अन्यायम् विधत्ते। सः देवः तस्य तत्क्षणमेव स्वयम् शिक्षाम् दत्ते ॥२८६॥

*विवरणम्:- यः नरः मनसा अपि मिथ्यात्वम् पापम् अन्यायम् च विधत्ते करोति। सः चन्द्रादित्यः देवः तस्य तत्क्षणमेव स्वयम् शिक्षाम् दण्डम् दत्ते तम् स्वयमेव दण्डयति ॥२८६॥*

सरलार्थः- यः नरः मिथ्यात्वम् पापम् अन्यायम् च करोति। तम् पुरुषम् सः चन्द्रादित्यः देवः स्वयमेव तत्क्षणमेव दण्डयति ॥२८६॥

ગુજરાતી :- તેના રાજ્યમાં કોઈ પણ માણસ મિથ્યાત્વ પાપ અને અનીતિ મનથી પણ કરતો તો તેને ચન્દ્રાદિત્ય દેવ તે જ ક્ષણે શિક્ષા કરતો. ॥૨૮૬॥

हिन्दी :- उस राज्य में यदि कोई भी मनुष्य मिथ्यात्व, पाप और अनीति मन से भी करता था तो चन्द्रादित्य देव उसी क्षण उसे सजा देता था॥२८६॥

मराठी :- त्या राज्यात जो कोणी मनुष्य मनानेसुद्धा मिथ्यात्व पाप आणि अनीति करीत असे. त्याला चन्द्रादित्यदेव त्याच वेळी शिक्षा करीत असत.॥२८६॥

English :- If anyone in the kingdom would indulge themselves in deeds of malversation and mendacity, they would have to undergo severe punishment, meathed out by Chandraditya at that very moment.

**तद्देशवास्तव्यजना - स्ततः पुण्यैकबुद्धयः।**
**राजवर्त्माऽनुवर्तन्ते, यथा राजा तथा प्रजाः ॥२८७॥**

अन्वयः- ततः पुण्यैकबुद्धयः तद्देशवास्तव्यजनाः राजवर्त्म अनुवर्तन्ते । यथा राजा तथा प्रजाः ॥२८७॥

विवरणम्:- ततः तस्मात् कारणात् पुण्ये एव एका बुद्धिः येषाम् ते पुण्यैकबुद्धयः सुकृतानि एव कुर्वाणाः, तस्य नाभाकस्य देशः तद्देशः। तद्देशे वास्तव्यम् येषाम् ते तद्देशवास्तव्याः । तद्देशवास्तव्याश्च ते जनाश्च तद्देशवास्तव्यजनाः तद्देशनिवासिनः राज्ञः वर्त्म राजवर्त्म धर्मनीत्यात्मकम् अनुवर्तन्ते। अनुसरन्ति। राजवत् धर्मे न्याये च तत्परा आसन् । यथा राजा वर्तते तथा प्रजाः भवन्ति॥२८७॥

सरलार्थः- तस्मात् कारणात् पुण्यैकबुद्धयः नाभाकराजदेशवासिनो जनाः राज्ञः नाभाकस्य धर्मन्यायात्मकम् वर्त्म मार्गमन्वसरन्। तथाहि यथा राजा तथा प्रजाः भवन्ति॥२८७॥

ગુજરાતી :- પુણ્યમાં લીન થયેલ બુદ્ધિવાળા તે દેશના લોકો રાજાને માર્ગે ધર્મ અને નીતિને અનુસરવા લાગ્યા કારણ કે, જેવો રાજા હોય તેવી તેની પ્રજા હોય છે. ॥૨૮૭॥

हिन्दी :- पुण्य में ही तल्लीन बुद्धिवाले उस देश के लोग भी राजा के ही मार्ग से धर्म और नीति का अनुसरण करने लगे क्यों कि, जैसा राजा होता है वैसी उसकी प्रजा होती है॥२८७॥

मराठी :- केवळ सत्कर्म करण्यातच लीन असलेले त्या देशातील लोक राजाच्याच (धर्म-नीति आदि) मार्गाचे अनुकरण करीत होते. कारण जसा राजा तशी प्रजा असते.॥२८७॥

English :- The people of the kingdom began to follow the path of righteousness and religion, just as their King Nabhak who was fully engrossed in performing his meritorious deeds. There is no doubt that a kingdom always walks on the footsteps of their king.

**एवम् यथा यथा पृथ्व्याम् पुण्यवृद्धिस्तथा तथा ॥**
**काले वृष्टिर्धान्यपुष्टिर्बहु पुष्पफला द्रुमाः ॥२८८॥**

अन्वयः- एवम् पृथ्व्याम् यथा यथा पुण्यवृद्धिः भवति तथा तथा काले वृष्टिः धान्यपुष्टिः बहुपुष्पफलाः द्रुमाः भवन्ति॥२८८॥

विवरणम्:- *एवम् पृथ्व्याम् जगतीतले यथा यथा पुण्यस्य वृद्धिः भवति पुण्यानि कार्याणि प्रवर्धन्ते। तथा तथा काले समये वृष्टिः भवति। समये पर्जन्यो भवति। धान्यानाम् पुष्टिः भवति। पुष्पाणिच फलानि च पुष्पफलानि। बहूनि पुष्पफलानि येषाम् ते बहुपुष्पफलाः द्रुमाः वृक्षाः भवन्ति। पुण्यप्रभावात् एव समये पर्जन्यवृष्टिः, धान्यानाम् पुष्टिः च जायते। वृक्षाः बहुभिः पुष्पैः फलैः च सम्पन्नाः भवन्ति॥२८८॥*

सरलार्थः- एवम् पृथ्व्याम् यथा यथा पुण्यस्य वृद्धिः भवति। तथा तथा समये वृष्टिः भवति। धान्यानाम् पुष्टिः जायते। वृक्षाः बहुभिः पुष्पैः फलैःच सम्पन्नाः भवन्ति ॥२८८॥

ગુજરાતી :- આવી રીતે પૃથ્વી ઉપર જેમ જેમ પુણ્યની વૃદ્ધિ થવા લાગી, તેમ તેમ સારી રીતે સમયસર વૃષ્ટિ થવા લાગી, ઘણું ધાન્ય નીપજવા લાગ્યું, વૃક્ષો ઘણા પુષ્પો અને ફળ આપતા થયા ॥૨૮૮॥

हिन्दी :- इस तरह पृथ्वी पर जैसे जैसे पुण्य की वृद्धि होने लगी, वैसे वैसे बरसात समय पर होने लगी, बहुत ही अनाज पैदा होने लगा, पेड भी बहुत फूल और फल देने लगे। ॥२८८॥

मराठी :- ह्याप्रमाणे पृथ्वीवर जसजशी पुण्याची वृद्धि होते तस तशी वृष्टि वेळेवर होते. धान्य विपुल प्रमाणात वाढते. झाडे फुलांनी व फळांनी बहरतात.॥२८८॥

English :- The augmentation of meritorious deeds bore its fruit on this earth. It began to rain at its regular intervals, lots of corn began to be produced, trees gave ample of fruits and flowers.

बहुक्षीरप्रदा गावः बहुरत्नाश्च खानयः ॥
व्यवसाया महालाभा दूरदेशाः सुसञ्चराः ॥२८९॥

अन्वयः:- बहुक्षीरप्रदा गावः बहुरत्नाः च खानयः, व्यवसायाः महालाभाः, दूरदेशाः सुसञ्चराः भवन्ति॥२८९॥

विवरणम्:- बहु च तत् क्षीरम् च बहुक्षीरम् बहुक्षीरम् प्रददति इति बहुक्षीरप्रदाः गावः धेनवः भवन्ति। पुण्यप्रभावात् गावः प्रभूतम् दुग्धम् यच्छन्ति। बहूनि रत्नानि यासु ताः बहुरत्नाः खानयः भवन्ति। खनिषु बहूनि रत्नानि जायन्ते। व्यवसायाः व्यापाराः महान् लाभः येषु ते महालाभाः जायन्ते। व्यापारेषु विपुलतरो लाभो भवति। दूरे देशाः दूरदेशाः दूरे वर्तमानाः देशाः सुखेन सञ्चरः सञ्चरणम् येषु ते सुसञ्चराः सन्ति। पुण्यप्रभावादेव खानिषु बहुरत्नानि, व्यवसायेषु महालाभाः, दूरदेशेषुच सुखेन संचारः भवन्ति ॥२८९॥

सरलार्थः:- पुण्यप्रभावादेव धेनवः प्रभूतम् दुग्धम् यच्छन्ति। खानिषु बहूनि रत्नानि जायन्ते। व्यवसायेषु महालाभाः भवन्ति। दूरदेशेषु सुखेन सञ्चारः क्रियते ॥२८९॥

ગુજરાતી :- પુણ્ય પ્રભાવથી ગાયો અધિક દૂધ આપવા લાગી, ખાણો ઘણા રત્નોવાળી થઈ, વ્યાપારમાં અતિશય લાભ થવા લાગ્યો, ઘણા દૂરના દેશો પણ સુખરુપ મુસાફરી થઈ શકે તેવા થયા ॥૨૮૯॥

हिन्दी :- पुण्य के प्रभाव से गायें ज्यादा दुध देनेवाली हो गई, खानें बहुत ही रत्नोवाली हो गई, व्यापार में भी अधिक फायदा (मुनाफा) होने लगा. और दूर दूर के देशो तक भी सुखशांति से मुसाफरी होने लगी॥२८९॥

मराठी :- पुण्य प्रभावाने गाई खूप दूध देतात, खाणीत पुष्कळ रत्ने उत्पन्न होतात, व्यापारात खूप लाभ होतो व दूरच्या देशाचा प्रवास सुद्धा सुकर होतो.॥२८९॥

English :- As the magnanimity of meritorious deeds increased, miltches began giving more milk, mines began overflowing with precious stones, trade and commerce prospered and travelling from one place to another began with bliss and tranquillity.

निरामया निरातङ्का महासौख्याश्चिरायुषः॥
पुत्रपौत्रादिसन्तानवृद्धिभाजोऽभवन् जनाः ॥२९०॥

अन्वयः:- जनाः निरामयाः निरातङ्काः, महासौख्याः चिरायुषः, पुत्रपौत्रादि सन्तानवृद्धिभाजः अभवन्॥२९०॥

विवरणम्:- *जनाः लोकाः निर्गतः आमयः रोगः येषाम् ते निरामयाः नीरोगाः निर्गतः आतङ्कः भयम् येषाम् ते निरातङ्काः निर्भयाः महत् सुखमेव सौख्यम् येषाम् ते महासौख्याः महासुखाः, चिरम् आयुः येषाम् ते चिरायुषः, पुत्राश्च पुत्रस्यापत्यानि पुमांसः पौत्राश्च पुत्रपौत्राः। पुत्रपौत्राः आदौ यस्य तत् पुत्रपौत्रादि। पुत्रपौत्रादि च तत् सन्तानम् च पुत्रपौत्रादिसन्तानम्। पुत्रपौत्रादिसन्तानस्य वृद्धिम् भजन्ते इति पुत्रपौत्रादिसन्तानवृद्धिभाजः अभवन्। आसन्॥२९०॥*

सरलार्थः:- पुण्यप्रभावात् जनाः रोगरहिताः, निर्भयाः, महासुखभाजः, चिरायुषः, पुत्रपौत्रादिसन्तानवृद्धिभाजः च अभूवन् ॥२९०॥

ગુજરાતી :- તેમજ લોકો નિરોગી, નિર્ભય, અત્યંત સુખી, લાંબા આયુષ્યવાળા અને પુત્રપૌત્રાદિ સંતતિની વૃદ્ધિવાળા થયા॥૨૯૦॥

हिन्दी :- पुण्य के प्रभावसे लोग निरोगी, निर्भय, अत्यंत सुखी लंबे आयुष्यवाले और पुत्र पौत्रादि संतती की वृद्धिवाले हुए॥२९०॥

मराठी :- पुण्याच्या प्रभावामुळे लोक रोगरहित, निर्भय, अत्यंत सुखी, दीर्घायुषी व पुत्र, पौत्रादि संतानाच्या वृद्धीने युक्त झाले.॥२९०॥

English :- As the effect of meritorious deeds increased, people began to be more healthier than before, they were now dauntless and extremely happy folks. They had children and grandchildren.

एवम् तद्राज्यलोकानाम्, धर्मशर्मनिरीक्षणात् ॥
ह्रियेव स्वर्गिणोऽभूवन्नदृश्या धर्मवर्जिताः ॥२९१॥

अन्वयः:- एवम् तद्राज्यलोकानाम् धर्मशर्मनिरीक्षणात् धर्मवर्जिताः स्वर्गिणः ह्रिया इव अदृश्याः अभवन् ॥२९१॥

*विवरणम्:- एवमित्थम् तस्य नाभाकस्य राज्यम् तद्राज्यम्। तद्राज्यस्य लोकाः तद्राज्यलोकाः, तेषाम् तद्राज्यलोकानाम् धर्मात् शर्म सुखम् धर्मशर्म। धर्मशर्मणः निरीक्षणम् धर्मशर्मनिरीक्षणम् तस्मात् धर्मशर्मनिरीक्षणात् धर्मजन्यसुखानि अवलोक्य धर्मेण वर्जिताः धर्मवर्जिताः धर्मरहिताः स्वर्गिण देवाः ह्रिया इव लज्जया इव न दृश्या अदृश्याः अभूवन्। नाभाकराज्यवर्तिनाम् लोकानाम् धर्मजन्यसुखानि अवलोक्य धर्मवर्जिताः देवाः इदानीमत्र स्थातुमनुचितमिति मत्वा ह्रिया इव अदृश्या भूत्वा स्वर्गमगच्छन् ॥२९१॥*

सरलार्थः:- एवम् नाभाकराजराज्यवर्तिनाम् लोकानाम् धर्मजानि सुखानि अवलोक्य धर्मरहिताः देवाः लज्जया इव अदृश्याः अभवन् ॥२९१॥

ગુજરાતી :- આવી રીતે તે રાજ્યના લોકો ધર્મના પ્રભાવથી એટલા સુખી હતા કે જે સુખને જોઈ ધર્મવર્જિત દેવો પણ પોતાને સુખરહિત માનવા લાગ્યા, અને તેથી જાણે લજ્જા આવવાથી પોતે અદૃશ્ય થઈ ગયા હોય ! ॥૨૯૧॥

हिन्दी :- इसतरह धर्म के प्रभाव से राज्य के लोग इतने सुखी थे कि उस सुख को देखकर धर्मवर्जित देव भी मानो शरमा कर अदृश्य हो गये॥२९१॥

मराठी :- अशा रीतीने त्या राज्यातील लोक धर्माच्या प्रभावाने इतके सुखी होते की ते सुख पाहून धर्मवर्जित देव आता आपल्याला येथे राहणे योग्य नाही असे समजून च जणू काय लाजेने अदृश्य झाले. (स्वर्गात निघून गेले)॥२९१॥

English :- In this way, the influence of meritorious deeds bought immense joy and contentment among the people. Seeing this the God felt that his presence was no longer essential, and it seemed that he had vanished from there, feeling ashamed.

श्रीनाभाकधराधीशः प्रपाल्येति चिरम् स्थिरम्॥
राज्यम् प्राज्यम् प्रान्तकाले संसाध्याऽनशनम् सुधीः ॥२९२॥
अगाद् द्वादशकल्पेऽथ, नृजन्माऽवाप्य सेत्स्यति॥
देवोऽपि प्राप्य मानुष्यम्, शाश्वतम् सौख्यमाप्स्यति ॥२९३॥

अन्वयः:- श्री नाभाकधराधीशः इति स्थिरम् प्राज्यम् राज्यम् चिरम् प्रपाल्य सः सुधीः प्रान्तकाले अनशनम् संसाध्य- (अग्रेण सम्बन्धः।) ॥२९२॥
द्वादशकल्पे अगात्। अथ नृजन्म अवाप्य सेत्स्यति। देवः अपि मानुष्यम् प्राप्य शाश्वतम् सौख्यम् आप्स्यति ॥२९३॥

विवरणम्:- *धरायाः अधीशः धराधीशः नृपः। श्रिया युतः नाभाकः श्रीनाभाकः। श्रीनाभाकः एव धराधीशः श्रीनाभाकधराधीशः श्रीनाभाकनृपः स्थिरम् दृढम् प्राज्यम् समृद्धम् राज्यम् चिरम् चिरकालम् प्रपाल्य पालयित्वा प्रान्तकाले अन्तकाले सः शोभना धीः यस्य सः सुधीः धीमान् नृपः न अशनम् यस्मिन् तद् अनशनम् संसाध्य अनशनम् विधाय - द्वादशश्चासौ कल्पश्च द्वादशकल्पः, तस्मिन् द्वादशकल्पे द्वादशे अच्युतदेवलोके अगात् अगच्छत् देवोऽभवत्॥ अथ अनन्तरम् ततश्च्युत्वा नुः नरस्य जन्म नृजन्म नरजन्म अवाप्य प्राप्य सेत्स्यति सिद्धिम् गमिष्यति। देवः चन्द्रादित्यः अपि मनुष्यस्येयम् मानुष्यम् मनुष्यजन्म प्राप्य अधिगम्य शाश्वतम् सौख्यम् शाश्वतम् सुखम् मोक्षम् आप्स्यति। लप्स्यते ॥२९३॥*

सरलार्थः:- इति सः सुधीः श्रीनाभाकनृपः स्थिरम् समृद्धम् राजयम् चिरम् पालयित्वा अन्तकाले अनशनम् संसाध्य ॥२९२॥ द्वादशे देवलोके देवः अभवत्। अनन्तरं ततः च्युत्वा नरभवं प्राप्य सिद्धिं गमिष्यति। देवः चन्द्रादित्यः अपि मनुष्यजन्म प्राप्य मोक्षं यास्यति ॥२९३॥

ગુજરાતી :- આ પ્રમાણે પુણ્યશાલી નાભાકરાજાએ પોતાના વિસ્તૃત રાજ્યનું ચિરકાલ સુધી સ્થિર રીતે પાલન કર્યું, અંતકાલે તે બુદ્ધિમાન રાજા અણસણ ગ્રહણ કરી॥૨૯૨॥ બારમા અચ્યુત દેવલોકમાં દેવ થયો ત્યાંથી ચ્યવી મનુષ્ય-જન્મ પ્રાપ્ત કરી સિદ્ધ થશે। ચન્દ્રાદિત્ય દેવ પણ દેવલોક માંથી ચ્યવીને મનુષ્યપણું પ્રાપ્ત કરી મોક્ષમાં શાશ્વત સુખ પામશે.॥૨૯૩॥

हिन्दी :- इस तरह पुण्यशाली नाभाक राजा ने अपने विस्तृत राज्य का लंबे समय तक स्थिर रीति से पालन किया। अंत में वह बुद्धिमान राजा अनशन ग्रहण कर के बारहवें अच्युत देवलोक में देव हुआ। वहाँ से आयुष्य पूर्ण कर के मनुष्य जन्म प्राप्त कर

के सिद्ध बनेगा और चन्द्रादित्य देव भी देवलोकमें से च्युत होकर मनुष्य जन्म प्राप्त कर के मोक्ष में शाश्वत सुख पायेगा। ॥२९२॥ ॥२९३॥

मराठी :- अशा रीतीने त्या सद्बुद्धि असलेल्या पुण्यशाली नाभाक राजाने आपल्या स्थिर व समृद्ध राज्यांचे चिरकालपर्यंत पालन केले. शेवटी तो बुद्धिमान राजा अनशन (उपोषण) ग्रहण करून बाराव्या अच्युत देवलोकामध्ये देव झाला, तेथून च्युत होऊन मनुष्य जन्म प्राप्त करून सिद्ध होईल आणि चन्द्रादित्य देव सुद्धा देवलोकामधून च्युत होऊन मनुष्य होऊन मोक्षाचे शाश्वत सुख प्राप्त करील.॥२९३॥

English :- in this way the virtuous king ruled his patulous kingdom in a steady manner for a long time to come. Then this intelligent king took up to a fast unto death and was reincarnated as a God in the twelveth heaven named Achuth, after death. After he had completed his life as a God he will be reincarnated as a human and he shall attain Salvation after his death.
And the God Chandraditya shall deviate from his heaven and will be reincarnated as a human and he too shall attain Salvation after his death.

**श्री नाभाकनरेन्द्रस्य निशम्येदम् कथानकम्॥**
**देवद्रव्याच्च दूरेण नित्यम् स्थेयम् मनीषिभिः ॥२९४॥**

अन्वयः- इदम् श्रीनाभाकनरेन्द्रस्य कथानकम् निशम्य मनीषिभिः नित्यम् देवद्रव्यात् दूरेण स्थेयम् ॥२९४॥

विवरणम्:- *इदम् श्रीनाभाकनरेन्द्रस्य श्रीनाभाकनृपस्य कथानकमाख्यानकम् निशम्य श्रुत्वा मनीषिभिः विद्वद्भिः नित्यम् सततम् देवस्य द्रव्यम् देवद्रव्यम् तस्मात् देवद्रव्यात् दूरेण स्थेयम् स्थातव्यम् ॥२९४॥*

सरलार्थः- श्री नाभाकनृपस्य इदम् कथानकम् श्रुत्वा धीमद्भिः नित्यम् देवद्रव्यात् दूरेण स्थातव्यम्। देवद्रव्यस्य स्पर्शोऽपि न कर्तव्यः॥२९४॥

ગુજરાતી :- આ પ્રમાણે શ્રી નાભાકરાજાની કથા સાંભળીને બુદ્ધિમાન્ પુરુષોએ દેવદ્રવ્યથી તદ્દન દૂર રહેવું ઉચિત છે. ॥૨૯૪॥

हिन्दी :- इस तरह श्री नाभाक राजा की कथा सुनकर बुद्धिमान पुरुषों के लिये देवद्रव्य से बिलकुल दूर रहना ही उचित है॥२९४॥

मराठी :- अशा तऱ्हेने श्रीनाभाक राजाची कथा ऐकून बुद्धिमान पुरुषांनी देवद्रव्यापासून नेहमी दूर राहावे हेच योग्य आहे.॥२९४॥

English :- In this way intelligent men should keep themselves far away from God's wealth, after he has heard the tale of King Nabhak.

श्रीमदचलगच्छेश - श्रीमेरुतुङ्गसूरिभिः॥
युगर्तुयुगभूसङ्ख्ये, वर्षे निर्मिता कथा ॥२९५॥

अन्वयः:- श्रीमदचलगच्छेशश्रीमेरुतुङ्गसूरिभिः युगर्तुयुगभूसंख्ये वर्षे कथा निर्मिता ॥२९५॥

विवरणम्:- श्रीः अस्यास्तीति श्रीमान्। श्रीमान् चासौ अचलगच्छः च श्रीमदचलगच्छः। श्रीमदचलगच्छस्य ईशाः श्रीमदचलगच्छेशाः श्रीमेरुतुङ्गसूरयः श्रीमदचलगच्छेशाः श्रीमेरुतुङ्गसूरयः तैः श्रीमदचलगच्छेशश्रीमेरुतुङ्गसूरिभिः युग (४) ऋतु (६) युग (४) भूः (१) संख्या यस्य तत् युगर्तुयुगभूसंख्यम् तस्मिन् युगर्तुयुगभूसंख्ये चतुःषट्चतुरेकमिते (१४६४) वर्षे इयम् कथा निर्मिता ॥२९५॥

सरलार्थः:- श्रीमदचलगच्छेश - श्रीमेरुतुङ्गसूरिभिः चतुःषट्चतुरेकमिते (१४६४) वर्षे इयम् कथा निर्मिता ॥२९५॥

ગુજરાતી :- શ્રીમાન્ અચલગચ્છાધિપતિ શ્રી મેરુતુંગસૂરિએ ચૌદસો ચોસઠની સાલમાં આ કથા રચી ॥૨૯૫॥

हिन्दी :- श्रीमान अचलगच्छाधिपति श्री मेरुतुंगसूरि मुनिने इ. स. चौदसौचौसठ की १४६४ सालमे यह कथा रची।

मराठी :- श्रीमान अचलगच्छाधिपति श्री मेरुतुंगसूरि मुनीने चौदाशेचौसष्ठ १४६४ या वर्षात ही कथा रचली.

English :- The dignitary of the Achalgatch congregation Rev. monk Merutungsuri has taken this initiative to write this tale in the year fourteen sixty four, during the Vikram era.

॥इति श्री नाभाकराजचरितम्॥